# चातुर्वर्ण्य-शिक्षा

( वेदहृष्ट्या समेता )



महामहोपाध्यायः

श्रीदुर्गाप्रसादद्विवेदी.

जयपुर-राजधानी.

# THE Chaturvarnya-Siksha

WITH

## THE VED-DRISHTI

AND

## A CRITICAL INTRODUCTION

BY

MAHAMAHOPADHYAY

**PANDIT DURGA PRASAD DVIVEDI,**

*Late Principal, Maharaja's Sanskrit College, Jaipur, Member of the Court and Faculty of Oriental Learning of the Benares Hindu University, etc., etc.*

LUCKNOW:

PRINTED AND PUBLISHED BY

K. D. SETH, NEWUL KISHORE PRESS.

1927.

॥ श्रीः ॥

# चातुर्वर्ण्य-शिक्षा

## वेदहष्ट्या समेता।



जयपुरमहाराजाश्रितेन सत्संप्रदायाचार्येण

महामहोपाध्याय—

श्रीदुर्गाप्रसादद्विवेदेन

निरूपिता।

तदन्तेवासिना—

कल्याणवल्लभशास्त्रिणा दाधीचेन

संस्कृता।

वैक्रमाब्दाः १९८२



सा च

लक्ष्मणपुरे

नवलकिशोरयन्त्रालये मुद्रिता प्रकाशिता च।



श्री ६ विश्वेश्वरो विजयतेतराम् ।

# विज्ञापना—

( १ )

यन्मूलं दिशती शिशुप्रणयिनी टीकापि मध्यप्रिया *

मानं यत्र समस्तशास्त्रहृदयं लोकोपकारक्षमम् ।

युक्तया त्यक्तुमशक्ययाथ कलिता वर्णाश्रमादिस्थितिः

सेयं मानवमात्रमङ्गलवहा शिक्षाशु विद्योतताम् ॥

( २ )

आचार्यतामिच्छति मानसं चेत्

तदाधुना साधय वेददृष्टिम् ।

सखे ! ऽन्यथाचार्यपदाङ्कितोऽपि

विद्वत्सभायां कथमादृतः स्याः ॥

( ३ )

सैषा कृतिर्विश्वहिता विश्वेश्वरपदार्पिता ।

नैवेद्यवन्मुदे भूयात् तत्पदाहितचेतसाम् ॥

---

* इह मूलेऽप्यलसानां कृते तु भूमिकादिविवरणसाधनयोगेन प्रथमचरणमेवं पठनीयम्—

'यत्सूत्राणि शतं शिरोगुणनिका भाष्यं तु तात्पर्यवत् ।' इति ॥

॥ श्रीः ॥

# प्रकरणानि—

ॐ नमः शिवाय

( शु. य. सं. १६।४१ )

# उपोद्घातः ।

—:o:—

एकोऽप्यनेकरूपेण यो वेदेषु विमृश्यते ।
चतुर्वर्गफलप्राप्त्यै स भूयात् परमेश्वरः ॥ १ ॥
स्वदेशधनधर्मादिवृद्धये बुद्धिशुद्धये ।
लेखोऽयं श्रूयतां तात! वेदाङ्गोपाङ्गगुम्फितः ॥ २ ॥

## मनुष्यता ।

अत्रेदं सूच्यते—यच्चातुर्वर्ण्यं चातुराश्रम्यमित्युभयमपि येन सहजेन नियमेन परिष्क्रियते स वर्णाश्रमानुबन्धी धर्म इति, गुणकर्मविभक्तो मनुष्यसमाजो वर्ण इति, गुणकर्माचरणसुयोग्या मनुष्यावस्था आश्रम इति च, शाश्वतः श्रौतः स्मार्तश्च घण्टाघोषः । सोऽयं धर्म आर्य इत्यनेन, हिन्दुरित्यनेन वा शब्देन व्यपदेष्टुं नशक्यते । याभ्याम् आर्यावर्त इति, हिन्दुस्थानम् इति वास्यास्माकसनातनावासस्य भारतवर्षस्य संज्ञापि संजज्ञे । कस्माद् भोः ? आर्यशब्दस्य जातिवचनाभावात्, हिन्दुशब्दस्यापि शक्यतावच्छेदकानिर्णयात्, वेदाङ्गोपाङ्गेषु वर्णाश्रमपुरस्कारेणैव विधिनिषेधवाक्यदर्शनाच्च । आर्यशब्दो हि प्राधान्यादभ्यर्हिताभिधायी—( दृश्यताम्-आग्नेयको. ब्रह्मव. ३ श्लो. । शब्दस्तोममहानि. । ) अतएव—

'कर्तव्यमाचरन् काममकर्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः ॥' इति ।

ऋक्संहितायामपि—

'अहं भूमिमददामार्याय—' इति च । (३ अष्ट. ६ अध्या. (१४ व)

हिन्दुशब्दस्तु नवोन्मेष एव । यदयं पुनः शब्दकल्पद्रुमादौ मेरुतन्त्रादिना प्रमाणितः स तावद् भविष्यादिविस्तरवदुपेक्ष्य एव । अथ इदानींतनकोशप्रतिकृतिरित्थंप्रकृतिः—

'न यत्र शब्दबाहुल्यमाटोपायैव विस्तृतिः ।
स किं कोशो दर्शनादिशब्दसंदर्भदुर्बलः ॥' इति ।

एवं चार्यहिन्दुपदार्थो नहि नियतं कमपि वर्णाश्रमजातिसंबन्धमभिधत्ते नैव वा तादृक्-शाश्वतं धर्ममपि विवक्ते । सामान्यधर्मस्तु स्वरूपादेव सर्वानुग्राही । एवं चेदार्यहिन्दुधर्मः परिभाष्य संस्क्रियेत, तर्हि मनुष्यत्वमिवार्यत्वं वा हिन्दुत्वं वा व्यापकं सुखेन संचरताम् । वर्णो वा एतकदशाऽऽश्रमो वा सुखं निर्लोथतामित्यायुष्मतामाकूतेन निष्कल्मषं फलितम् ।

अपि चाहुः—

'ये शास्त्रविधिमुल्लङ्घ्य शंसयन्त्युत्पथं जनान् ।
तेषामुद्रिक्तरागाणां शेखरश्चरणायते ॥' इति ।

तत्रैतन्मीमांस्यते—देशानुरागिभिस्तावद् देशस्य तदनुषङ्गेण दैशिकस्योद्धारो यावद्बहुलमिष्यते क्रियते कार्यतेऽनुमोद्यतेऽपीति सर्वात्मना संगच्छत एव । परमियान् विशेषः—नोत्पथं भोः !, अहो ! किमुत्पथं नाम क्रियाविशेषणम् ? श्रुतिस्मृतिसदाचारविरुद्धमित्याचक्ष्महे । अपरथा लेपणाकरणं कारणाऽनुमोदनेति सकलं विफलीभवद् विपरीतं फलति । उद्धार्यतया शोधनभूमिमारोपितोऽयं भूतात्माऽऽत्मनो भूतसंश्लेषेण षाट्कौशिकं शरीरमवश्यमाक्षिपति । तत्रास्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृत इति गर्भोपनिषदादिनाऽवसेयम् । तत्रापि—कललेनैवाङ्कुरास्थिचर्माङ्गजचेतनाः—इत्येवमादिविशेषाः । इह शरीरिणः शरीरे बाह्यकरणयोगिनी पङ्कप्रक्षालनेव न काचन शोधनपदाभिधेया क्रिया विवक्षिता, किन्त्वन्तःकरणशालिनीति प्रतिपत्तव्यम् । यथैतत्कच्चरमगस्त्यतारकया पय इव प्रसाद्यते । तदिदमन्तःकरणस्य प्रसादनमप्रसादनं

या ऽतिशयारोहणावरोहणाभ्यां लौकिकव्यवहारकक्षानिक्षिप्तं तु सम्यग्विभाव्यते । आह—

'यदकारि कर्म गुप्तं यौवनसमये मदान्धया मात्रा ।
तत् प्रकटयन्ति तनया विगतनया धर्ममुत्सृज्य ॥' इति ।

मनुरपि—( चालु. शि. ११६ श्लो. वे. द. ) ।

भूतात्मा ( शरीरी ) हि येन वासनावासितेनाऽऽतिवाहिकविलसितेनाविष्टः, येन पुनरुपादानभूतेन भौतिकपरिणामेन तार्किकैः समवायितया परिभाषितेनारब्धः, येनाथ संनिहितेन वस्तुविजृम्भितेनाऽऽप्यायितो यथा समयं च कर्मक्षेत्रमवतीर्ण आन्तरेण बाह्येन हि करणकलापेन यद्यातिशयवैभवमाशयं नयति ततो हि विनयति वा तत्तत्खलूद्भवदनुद्भवच्च चमत्कुर्वाणं व्यवहारभूमिमावृणुते । तदेतद् विरूढं भूतात्मनश्चेष्टितं नाह्ना नाह्नां वा केनचिन्मुष्टिमेयेन समुदयेन मार्ष्टुं मार्जयितुं वा शक्यमिति पदार्थविज्ञानविशकलनयाऽऽयुर्वेददृशापि दरमुकुलितलोचनैरालोच्यताम् । अत एव न प्रत्यक्षशरीरमिव शरीरिण आतिवाहिकं शरीरं पङ्कप्रक्षालनादिसतीर्थ्यं शोधनमपेक्षत इति विमृश्यताम् । अतएवच मन्वादिधर्मशासनेषु देशकालपात्रप्रभृतीनां पर्यालोचनयैव शोधनं स्मर्यते, नतु रागान्धदृशा फूत्कारमात्रेणेत्यपि गनोहत्य मीमांस्यताम् । एतेन व्रात्यवृषलवर्णबन्धूनामुपनयनकर्मापि व्याख्यातम् । आतिवाहिकशरीरममन्वानारित्वहापि चिकित्सिता द्रष्टव्याः (चालु. शि. २७ श्लो. वे. द.) । यदि नाम शुक्रशोणितद्वारेण संक्रममाणं कुष्ठादि पाट्कौशिकं पिण्डं संक्रमते, महामारीप्रभृति वा शरीराच्छरीरान्तरं संचरति, उपदेशकस्य मनोबुद्ध्यहंकारविलसितं वाप्युपदेश्यस्य हृदयदेशमावृणोति, तदा यथाव्यवहारं संसृज्यमानोऽपि देही कथमिवैकहेलया लब्धातिशयं जह्यात्, पूर्वावस्थां वा विन्देत् ? । कष्टं भोः कष्टम् । अतएव पातकिनां संसर्ग्यपि पातकीति स्मर्यते ( मनु. ११।५४ ) । किं बहुना, अधुनापि राजकीयव्यवहारेषु संसर्गी दण्डधारामारोप्यते ।

इदानीं शोधने हि प्रायो गम्यागम्यं स्पृश्यास्पृश्यं भक्ष्याभक्ष्यं पेयापेयमिति द्वन्द्वचतुष्टयी त्रयीनिरपेक्षावतरति। तत्र नवा घटितानि सुग्रथितानि चत्वारि द्वन्द्वोत्तराणि प्रतिसमाजमुपतिष्ठन्ते। तत्र गौः शुक्लश्चलो डित्थ इतिवद् यः कोऽपि यथाकार्यकालं परेण संलुञ्च्यते। एतदुक्तं भवति—सत्यामगम्यागामितायां महानुभावायामस्पृश्यता, अभक्ष्यता, अपेयतेति त्रयी सेवकी सार्वभौम्यामिव संगच्छते। अस्पृश्यतायामपरा त्रयी सज्जते, अभक्ष्यतायामन्या संनह्यति, इत्थमपेयतायामितरोद्युङ्क्ते। अहो! उद्रिक्तरागाणां व्यसनयोगिता। अतएवाप्रत्यक्षेणापि प्रत्यक्षसत्ताकेन आगमसंचरेण संचरन्तेऽधुनापि चिरंतनानुयायिनः। यदि पुनर्मन्वादिराजर्षीणां याज्ञवल्क्यादिब्रह्मर्षीणां तदनुसारिणां तुलाधारादिवैश्यमहाभागानां धर्मव्याधादिशूद्रमहानुभावानां श्रवणादिसंकरसत्तमानां च धर्मशासनेषु दृढः प्रतिबन्धो नाभविष्यत् तदा दमयन्तीजानेर्नलाद् युधिष्ठिरावधि पृथ्वीराजावधि वा हम्मीरावधि वा जयपुरकारकावधि वा वर्णाश्रमवृषो यथायोगं न प्रावर्तिष्यत, नवा शोधनग्राहकवलनया—'शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः' ( चातु. शि. २ श्लो. वे. द. ) इत्येवमादयः संकीर्णजातयश्चाश्रोष्यन्। विसृमरवदनया संकरासादनदन्तुरया व्याजृम्भमाणविग्रहया शुद्धियोगिन्या निगरणया वर्णाश्रमशेषाभावादिति प्रतिपद्यताम्।

अथ नातिचिराद् अस्तमुपयाते मुहंमदीयसाम्राज्ये, न्यस्ततत्त्वभावे बाहुजसामन्तसंताने, परधर्मचर्यासूदासीने वृटिशसार्वभौमीवंश्यपुरंदरे, कृशिमानमृच्छति वर्णाश्रमवृषे, लघिमानं गच्छति सदाचारे, मञ्जिमानमञ्चति संकीर्णसंप्रदायसंदोहे, लौकिकसुखैकपरायणे जनताचेष्टिते, यथाभिलषितं वर्त्म गमिते वेदपुंसि, पार्श्वप्रेक्षिकया स्वोत्कर्षलिप्सवोऽनेके वर्गा भवन्तो मुहंमदीया इवाहोस्विद् ईसायिन इव यत्किमपि जात्यन्तरं स्ववर्गेषु प्रवेशयन्तो बहु प्रयतन्ते। ओमेतद्, यदि त इव वयमपि कतिपयशताब्द्या

पृथग्जातिमापन्नाः स्याम । अनेवं पुनः । अस्माकं शेषभूतास्ते, नहि तेषां शेषभूता वयमिति श्रुतिस्मृतियुक्तिव्यवहारतोऽपि निर्णीयते ।

इत्थं पारम्परिकसंबन्धसद्भावसत्तायामपि तैः सह ब्राह्मयौनसंबन्धपरिहारे 'शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः—' इत्येवंप्राया चिरंतनोपदेशादयो मानानि । यदि मुहंमदीया ईशायिनो वा वर्तमानव्यक्त्या परस्परं साम्यं न प्रतिपद्यन्ते तर्हि बहु विप्रकृष्टा वयं कथमिव युगान्तरमन्तरेण साम्यं भजेमहि । एवं सति सांप्रतिकानां विज्ञंमन्यानां विशेषधर्मोपसंहारेण ब्राह्मणैर्दाससंघटनचेष्टनमपि संजाघटीतीति किं क्रियताम् । मुहंमदीयानाम् ईशायिनां तु स्वस्ववर्गसंघटनं तेषामनुशासनाविरुद्धम्, यस्माद् इदं द्वितयं मतमिति, नेयं जातिः । तत्र जातिव्यवहारस्तु भाक्तः । चातुर्वर्णिकी जातिः, नहि मतमेव । अतएव मूलतो ब्राह्मणाः, जैना बौद्धा भवन्तोऽपि श्रूयन्ते; नतु जैना बौद्धाः, ब्राह्मणा भवन्त इति ।

इत्थं च संप्रति कतिपये महाभागा उल्लसता संचरता च हृदयेन लोचनेनाननेन करेण चरणेन रागकरम्बितेनारविन्दायितेन शोधनतीर्थान्यवतरन्तो भ्रमाधिरूढाः स्वोत्प्रेक्षितनिःसरणां सरणिं शरणीकर्तुं कामयन्ते ते खलु भ्रश्यन्तीति व्यक्तम् ॥

भवन्ति चात्र—

किं सभाजल्पनायासैः किं वा धर्मनिपीडनैः ।<br>
कृषिगोरक्ष्यवाणिज्यविद्यायोगैर्हि कार्यता ॥ १ ॥

कृत्योप्युपार्ज्यतां धर्मो राजाज्ञा प्रतिपाल्यताम् ।<br>
उद्यमः क्रियतां भ्रातर्देशोद्धारः किमूर्मिका ॥ २ ॥

दीप्ते पदार्थविज्ञानेऽप्यस्त्येव परमेश्वरः ।<br>
इत्यालोच्य प्रवर्तस्व जहद् वेतालचेष्टितम् ॥ ३ ॥

**इति मनुष्यताद्विसौ देश-देशोद्धारौ ।**

# विवेकिता।

शब्दार्थनिबन्धनो हि यः कोऽपि व्यवहारः। तत्र शब्दोऽर्थमपेक्ष-माणो व्यक्तिमाक्षिपति। तत्र प्रथमा व्यक्तिरीश्वर इति। यो ह्यात्मादि-शब्दैर्वेदाङ्गोपाङ्गेष्वाम्नायते। एवं शाब्दी व्यक्तिरात्मनोऽभिव्यक्तये व्यक्ति-मालम्बमानैव प्रथत इति यथाश्रद्धमास्थेयम्। सेयं वाग्व्यक्तिर्यथा यथोत्तर-मुन्मिषति तथा तथा वेदयन्ती भगवती श्रुतिरप्येनां श्रावयति—

'चत्वारि वाक्—' ( चातु. शि. १६६, १७१ श्लो. वे. द. ) इति।

स्मृतिरपि—

'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्॥' इत्यादि (पाणि. शि. ६-७)

इदमेव भङ्ग्यन्तरेणान्यत्रापि—

'प्रत्यवमर्शात्मासौ चितिः स्वरसवाहिनी परा वाग् या।
आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा॥' इति।
'स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ।
अहमिति स एक उक्तोऽहन्तास्थितिरीदृशी तस्य॥' इति।
'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः।' इति।
'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥' इतिच।

एवं च शब्दपूर्वकत्वाद् अर्थस्य अर्थसृष्टेः प्राक्—विद-ज्ञाने, विद-विचारणे, विद-सत्तायाम्, विद्लृ लाभे, इति व्युत्पादितो भग-वान् वेदः परादिक्रमेण हिरण्यगर्भादिमहागुरुपरम्परया मन्त्रब्राह्मणानु-पूर्वीकः सकलभुवनोपजीव्यः समस्तव्यस्तदर्शनभूमिकाप्राणप्रदः प्रादु-

र्वभूवेति प्रमाणानपेक्षमपि सर्वप्रमाणनिर्व्यूढमाकलनीयम्। 'घटेन किं भाति सहस्रदीधिति रित्येवमादिविवेकात्। परमात्मेव तदविभक्तो वेदोऽप्यविकल इति। स भावघनन्तः करणघनन्तो वास्तु।

अन्यत्रापि—

'तत्तद्रूपतया ज्ञानं बहिरन्तः प्रकाशते।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत्॥
नहि ज्ञानादृते भावाः केनचिद् विपयीकृताः।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते॥' इति।

इत्थं वेदागम एव, नान्यस्तदुपजीव्य इति प्रतिपत्तव्यम्। एवं लक्षीकृत्यैव शब्दानामृगादीनां च नित्यता व्यवस्थापिता। यत्राभिव्यक्तिरुत्पत्तिरिति मन्यमाना लोकदृष्ट्या जडात्मनो विप्रवदन्ते। इहैवहि—

'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥' (महाभा. १।१।२०)

इत्येवमादीनां तात्पर्यमिति सर्वदर्शनरहस्यम्।

अस्य भगवतो नित्यसंनिहितोऽर्थः स्वतःप्रमाणतया न परप्रत्येयः ततोऽयमनेन प्रकाशत इति प्रद्योतनो द्योतनैर्वै चन्द्रश्चन्द्रिकयेव प्रतिपद्यताम्। शाब्दे शरीरे त्रिशिष्य निविशमानानां शिक्षा-व्याकरण-निरुक्तानाम्, आर्थे च ज्यौतिपकल्पयोः तथा तर्कादिदर्शनानां प्रणयनं तु लोकानुजिघृक्षार्थमालोच्यताम्। ओम् स्वयमिव तस्मादङ्गोपाङ्गानां व्युत्पादनात्।

यत्तु कतिपय आधुनिका अङ्गादिवोधितामपि वेदार्थप्रवृत्तिमपलपन्त उपसर्जनीकुर्वन्तश्चेतस्ततो धावन्ति ते पतन्तोऽपि कथमिव बोधनीयाः। आर्पदृशा हि—मन्त्रब्राह्मणे स्वस्य क्रियाप्राधान्यमेव दर्शयतः, विज्ञानं तु पर्यन्ततः। अतएव पाणिनिरपि—'द्विस्तावा त्रिस्तावा—' (५।४।८४) 'अध्वर्युक्रतु—' (२।४।४) 'क्रतौ कुण्डपाय्य—' (३।१।१३०) 'पाय्यसान्नाय्य—' (३।१।१२९) 'पारायणतुरायण—' (५।१।७२)

इत्येवमादि सूत्रयँस्तयोः क्रियायोगतामेव मनुते। अर्थशरीरपरिष्कर्तारो ज्यौतिषिकास्तु— 'यज्ञकालार्थसिद्धये' (आर्च ज्यौ.) 'वेदा हि यज्ञार्थमभिप्रवृत्ताः' (याजुषज्यौ.) इत्येवमादिना तत्क्रियापरतां स्फुटमेवाहुः। अतएवच कल्पाङ्गजङ्घाला मीमांसकाः—'आम्नायस्य क्रियार्थत्वात्—' (मी. द. १। २। १) इत्याद्यसूत्रयन्। अत्र—'आनर्थक्यमतदर्थानाम्' इति सूत्रणं तु ईशावास्यादेस्तादृशक्रियापरत्वाभावमेव ज्ञापयति, नैकान्तिकमात्यन्तिकमानर्थक्यमिति। इहाल्पार्थे नञिति तु संप्रदायविदः। अपरथा स्वाध्यायव्याकोपः प्रसरेदिति स्फुटं मार्मिकाणाम्। वस्तुतस्त्वहंप्रत्ययप्रत्यायिनि ज्ञानं क्रियाश्लिष्टमनुसंधेयम्। अतएवहि ज्ञानकर्मणी समुच्चिते इति दर्शनान्तरमिति दिक्। एतेन सायनान्तं वेदभाष्याभिधेयं प्रतिक्षिपन्तोऽध्यन्तर्वाणिसभं सुदूरमुदस्ता वेदितव्याः। उत्पथमुत्प्रेक्षितपथं वापि तु प्रतिभानवान् प्रक्रमत एव। इदमाशङ्क्यैव लोकप्रतिष्ठायै तर्काप्रतिष्ठानं सूत्रितं (वे. द. २। १। ११) भगवता वेदव्यासेनेति निपुणं निरीक्षणीयम्। कालमहिम्ना वेदखलीकारस्त्वीपत्करः। तथाहि—

इदानीमेके भारतभुवो योगक्षेमाभावेन, अन्येऽर्थलिप्सया, इतरे कौतुकावेशेन स्वमर्यादां द्रष्टुं श्रोतुं वा पराङ्मुखा बहुनायासेन राजविद्याम् (इंग्लिशादि) अधीयते। ततो यथायथमधिकारं प्रतिष्ठां च भजन्ते। तत्र केचन तावतात्मानं कृतकृत्यं मन्यमानाः संस्कृतलेखगूढां स्वप्राक्तनीं मर्यादां मनसापि जिज्ञासितुं न वाञ्छन्ति। संस्कृतं नाम गोत्रप्रवरमूलानामृषीणां मातृभाषा। ऋषिशब्दस्य प्रवृत्तिनिमित्तमाकलय्यान्यत्राप्युक्तम्—

'तत्संस्कृतं किमपि जङ्गमधाम शुद्धं
यत्राधिदेव इव वेदपुमान् विभाति।
वर्णाश्रमाः खलु भवन्ति यदन्तरङ्गाः
शेषास्तु कर्मचतुरा बहिरङ्गभाजः॥' इति।

(भारतीयसिद्धान्तादे. २। १)

सहजं कर्म कौन्तेय! सदोषमपि न त्यजेत्।

सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥'(भ० गी० १८।४५-४८)

जगति यथान्यायं प्रवर्तमानो मानवो यथाशक्ति समनुष्ठीयमानेन स्वेन स्वेन धर्मरूपपर्यवसितेन कर्मणा परमेश्वरं प्रीणयन् यथायोगं सिद्धिमासादयति। तत्रेदमिच्छाशक्तिजन्मा ज्ञानशक्तिसंस्कारशाली क्रियाशक्तिसहस्रशाखो भगवान् यज्ञ इति निगम्यते। सोऽयं यज्ञः साधारणधर्म इव मानवमात्रानुष्ठेयतया सार्वजनीन इति विज्ञायते। तथाच मनुर्गीतास्मृती—

'स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।'( मनु० २।२० )

'मम वर्त्मानुवर्तन्ते मनुष्याः, पार्थ सर्वशः॥'( गी० ३।२३ )॥२॥

अथ ब्रह्मण इव धर्मस्याप्यतीन्द्रियत्वाद् ब्रह्मजिज्ञासेव धर्मजिज्ञासापि चोदनैकगम्येति तृतीयेन श्लोकेनावेदयति—

**प्रत्यक्षयोगं सहते न धर्म-**
**स्ततोऽनुमापि प्रतिरुद्धवीर्या।**
**मानं तु लिङ्गाद्यनिरूपणीया,**
**सा चोदनैवात्र वरीवृतीति॥ ३॥**

**प्रत्यक्षेति।** 'तत्कर्म धर्माह्वयतां जगाहे' इत्युपश्लोकितं प्राक्। तत्र कर्म परमेश्वरप्रीणनधिया अनुष्ठितं यज्ञपदव्यवहार्यं भवतीत्यपि व्यक्तम्। एवं कर्म यज्ञः यज्ञो धर्म इति फलति। अत्र 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' इति पुरुषसूक्तमन्त्रे पुंल्लिङ्गैकवचनान्तेन यज्ञपदेन नपुंसकबहुवचनान्तस्य धर्मपदस्य लिङ्गसंख्यानिराकरणेन मीमांसकानां समानाधिकरण्यव्यवस्थापनमप्यनुग्राहकम्। यत्तु 'कर्म क्रियारूपत्वाद् उत्पन्नप्रध्वंसशीलम्' इति फलकालपर्यन्तं नावतिष्ठते; तस्मात् कर्मजन्यः कश्चन गुणविशेषो धर्मो नाम, स एव पुनरपूर्वादिशब्दैराख्यायत इति। तदेतन्न पेशलम्। फलसाधनप्रवृत्तस्य कर्मणः शक्तिमात्रस्यैव अपूर्वपदार्थत्वेन निर्णयात्। यदपि 'धर्मः क्षरति कीर्तनात्' इत्यपूर्वे धर्मपदं प्रयुक्तं तल्लाक्षणिकमिति शास्त्रविदः।

सोऽयं भगवान् धर्मः 'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' (न्या० द० १।१।४) इति यत् (प्रतिगतमक्षं) प्रत्यक्षं तद्योगं न सहते। ज्ञानकाले अविद्यमानत्वेन तस्य इन्द्रियागोचरत्वात्। तथाच सूत्रितं **षोडशलक्षण्याम्**—'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' (मी० द० १।१।४) इति। 'विद्यमानोपलम्भात्' इति वृत्तिकाराः। ततो व्याप्तिज्ञानाभावात्—'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च' (न्या० द० १।१।५) इत्यनुमापि प्रतिरुद्धवीर्या। प्रत्यक्षपूर्वकत्वाद् अनुमानस्य तदपि विरतव्यापारमिति भावः। एवं धर्मस्य प्रमापकत्वाभावप्राप्तावाह—अत्र मानं तु लिङ्वाच्यनिरूपणीया=लिङर्थप्रतिपादनीया, सा प्रसिद्धा चोदना प्रवर्तना एव वरीवृतीति। निर्बाधं जागर्तीति भावः।

अत्रेदमाकलनीयम्—स्वेच्छया परप्रवर्तनया चेति द्विविधा हि पुरुषप्रवृत्तिर्लोके विलोक्यते तावत्। तत्रेच्छया प्रवृत्तौ प्रवर्तनानुपयोगेऽपि प्रवर्तनया प्रवृत्तौ तु सोपयुक्तैव। प्रवर्तकप्रवर्तनयैतत् करोमीति प्रवर्त्यव्यवहारदर्शनात्। इत्थं च प्रवर्तना नाम प्रवर्तितुः प्रवृत्त्यनुकूलः प्रवर्तयितुर्व्यापारविशेषः। स च प्रवर्तकव्यापारत्वादेव णिजन्तेन प्रवर्तनापदेन प्रतिपाद्यते। एतेन भावनापि व्याख्याता। स हि व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठो वैदिकवाक्ये तु पुरुषायोगाल्लिङादिशब्दनिष्ठ एव। तथाचाचार्याशयबोधेनान्तेवासिन इव लिङादिव्यापारबोधेन पुरुषस्य चोदनायां प्रवृत्तिरुपपद्यते। स चायं प्रवर्तनालक्षणो व्यापारो लिङादेरर्थः शाब्दीभावनेति व्यवह्रियते। इह लिङ्त्वलेट्त्वादिकमेव शक्ततावच्छेदकम्, व्यापारत्वमेव शक्यतावच्छेदकमित्यवधेयम्। शब्देनार्थ इव तया लिङ्त्वांशेनाभिधीयमानया शाब्द्या भावनया आख्यातत्वांशेनाभिधीयमाना आर्थी नाम भावना संबध्यते। एवं च 'स्वर्गकामो यजेत'

इत्यादिविधिवाक्ये 'यजेत' इति भावनाबोधकपदे लिङ्त्वाख्यातत्वेति-धर्मद्वयावच्छिन्नेन यजिप्रकृत्युत्तर-तप्रत्ययेन प्रेरणाख्या शाब्दी; प्रवृत्तिरूपा आर्थीति भावनाद्वयी मीमांसकैर्व्यवस्थाप्यते। ततो यथा—'ओदनकामः पचेत' इत्यत्र लिङा भावनाया बोधात्, किं भावयेदित्याकाङ्क्षोदये ओदनो भाव्यत्वेनान्वेति। केन भावयेत्? पाकेनेति। कथं भावयेत्? तृणफूत्कारादिसहितेनेति। ततश्च तृणफूत्काराद्युपकृतेन पाकेन तेजःसंयोगेन ओदनं भावयेत् (कुर्यात्) इति वाक्यार्थः संपद्यते। तथा—'स्वर्गकामो यजेत' इत्यत्रापि प्रत्ययेन भावना प्रतीयते। किमिति साध्याकाङ्क्षायां स्वर्गो भाव्यत्वेनान्वेति। केनेति साधनाकाङ्क्षायां यागेनेति। कथमितीतिकर्तव्यताकाङ्क्षायामग्न्यन्वाधानप्रयाजाद्यङ्गसहितेनेति। तथाच मीमांसातन्त्रवार्तिके—

'अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते॥' (२।१।१)

अथ चोदना विधिरुपदेश इत्यादि नार्थान्तरम्। चोदनाशब्दो हि विधिमन्त्रनामधेयनिषेधार्थवादाख्यपञ्चविभागविभक्तं सकलं वेदं संगृह्णातीति मीमांसकानां सिद्धान्तः। धर्मस्य सद्भावे प्रमाणम्—

"धर्मो विश्वस्य जगतः प्रतिष्ठा,
लोके धर्मिष्ठं प्रजा उपसर्पन्ति।
धर्मेण पापमपनुदन्ति, धर्मे सर्वं
प्रतिष्ठितं, तस्माद् धर्मं परमं वदन्ति॥"
(तैत्ति० आर० १० प्रपा० ६३ अनुवा०)

तथाच धर्मलक्षणसूत्रम्—'चोदनालक्षणोऽर्थो धर्मः' (मी०द०१।१।२) इति। अत्र यो धर्म इत्युद्दिश्य स चोदनालक्षणो विधिप्रमाणक इति प्रमाणवचनव्यक्तिः। यः चोदनालक्षण इत्युद्दिश्य स धर्म इति स्वरूपवचनव्यक्तिः। तत्र प्रमाणव्यक्तौ द्वौ नियमौ विवक्षितौ। यो धर्मस्तत्र चोदनैव प्रमाणमित्येकः प्रत्यक्षानुमानचार्वाकवाक्यादिव्यावृत्त्यर्थः। यत्फल-

मुपपादयितुं प्रत्यक्षसूत्रम् । यो धर्मस्तत्र चोदना प्रमाणमेवेति द्वितीयो नास्तिकाभिमतवेदाप्रामाण्यनिरासार्थः । यत्साधनार्थमौत्पत्तिकसूत्रम् । यथा खलु धूमेन वह्निर्लक्ष्यते इति वह्निज्ञाने धूमो लक्षणम्, तथा धर्मज्ञाने चोदनैव लक्षणं करणमिति तात्पर्यम् । चोदना तु धर्मे स्वतः प्रमाणम् । तथाच सूत्रितं भगवता **जैमिनिना**–'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' ( मी० द० १।१।५ ) इति । शब्दस्य = नित्यवेदघटकपदस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादेः, अर्थेन = तत्तत्प्रतिपाद्यार्थेन, संबन्धः=शक्तिरूपः, औत्पत्तिकः=स्वाभाविकः । नित्य इति यावत् । उक्तं च **शाबर**भाष्ये–'औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया, इति । अतः तस्य=धर्मस्य, ज्ञायतेऽनेनेति ज्ञानं=करणं निमित्तम् ।' प्रत्यक्षादिभिरनुपलब्धे अर्थे उपदेशः=चोदना, अव्यतिरेकः=अर्थाव्यभिचारी । अत इतरानपेक्षत्वात्= प्रत्यक्षादिप्रमाणानपेक्षत्वात्, तद्=विधिघटितवाक्यं धर्मे प्रमाणम् । बादरायणग्रहणं तं पूजयितुं तन्मतं कीर्त्यते, नात्मीयं मतं पर्युदसितुम् । न जात्वप्यतीन्द्रियार्थविज्ञानप्रामाण्यं जहाति चोदना इति तात्पर्यम् । "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' ( १६ । २४ ) इति भगवद्गीतिरपि । 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' ( वै० द० १ । १ । २ ) इति **काणादं** सूत्रं च ॥ ३ ॥

शब्दपूर्विका हि सृष्टिः श्रूयते, शब्दार्थरूपं हि जगत् स्मर्यते, शब्दो ह्यर्थमभिधत्ते, अर्थो हि शब्दमपेक्षते, शब्दार्थनिबन्धनो हि लौकिको वा वैदिको वा व्यवहारः प्रवर्तते । तत्र परास्रोतोमूलकः शब्दो वर्णात्मा= अनित्यो वा, नित्यो वा, वर्णाभिव्यङ्ग्यः स्फोटो वा, गुणो वा, द्रव्यं वा भवतु; नोत्थायार्थमुपतिष्ठते–"अयं मम वाच्यः, अहमस्य वाचक इति ज्ञापयितुम्" किंतु संबन्धमाकाङ्क्षति । संबन्धः=कृतको वा, नित्यो वा,

नोपदेशमन्तरा अध्यवसीयते। उपदेशः=पौरुषेयो वा, अपौरुषेयो वा, नोपदेष्टारमन्तरेण प्रतिपत्तुं शक्यते। उपदेष्टा=लौकायतिको वा, वैदिको वा, आस्ताम्। प्रायेण तदाहितोपदेशपुरस्कारेणैव उपदेश्यस्य मतिरुज्जिहीते। तथा श्रावणचाक्षुषप्रत्यक्षविषयाभ्यामपि शब्दार्थाभ्यामेकान्ततः स्वसत्यभावं सत्यापयितुमशक्यमेव; बह्वत्र प्रमाणप्रमेयशरीरे दोषोन्मेषावकाशदर्शनाद्—इति हिरण्यगर्भादिगुरुपारम्पर्यप्राप्तवेदार्थावतरणायेदमाह चतुर्थश्लोकेन—

**अच्छिन्नपारम्परिकार्थभिन्नो,**
**विधिस्तु धर्मं न हि वक्तुमीष्टे।**
**न केवलं भोस्तदधीत एव,**
**तद्वेद खल्वित्यपि वेदकायः॥ ४॥**

अच्छिन्नेति। अच्छिन्नः=सृष्टिप्रादुर्भावमारभ्य वर्तमानसमयपर्यन्तं प्रवाहात्मा, पारम्परिकः=अध्ययनाध्यापनसंप्रदायादागतः, यः अर्थः=वाचकवाच्यः, तस्माद् भिन्नः=भेदं प्राप्तः। अर्थान्तरं नीत इति यावत्। विधीयते अनेन इति विधिः=लिङ्लेट्लोट्तव्यत्तव्यानीयरर्घटितवाक्यम्। तुः पुनरर्थे। धर्मं=प्रवृत्तिलक्षणं मन्त्रब्राह्मणकल्पसूत्रपूर्वमीमांसाप्रतिपाद्यम्, निवृत्तिलक्षणं मन्त्रब्राह्मणोपनिषदुत्तरमीमांसाप्रतिपाद्यं च, वक्तुं=स्वरूपतो विवेक्तुं, न हीष्टे=न कथमपि कल्पते। यथा हि लोके वक्ता येन अभिप्रायेण यद् वाक्यं प्रयुज्यते, तेनैव यदि तन्न योज्यते; कल्पनया अन्यथा नीयते। तर्हि शब्दतो व्यवस्थितमपि तद्वाक्यमर्थतो विपर्यस्तमिति स्थेयैः प्रतिपाद्यते। तथैव वैदिकमपि वाक्यं व्याख्याबलेन अर्थान्तरं नीयमानं प्रमेयतो भ्रष्टमिति। एतदेव 'तदधीते तद्वेद' (४।२।५९) इति पाणिनिसूत्रमुद्धृत्य प्रदर्शयति—भोः=अङ्ग, न केवलं 'तदधीते' इति ज्ञातः शब्दभाग एव वेदकायोऽस्तीति मन्तव्यम्। किंतु 'तद्वेद' इत्यर्थभागोऽपि खलु वेदकाय इत्यप्यनुमन्तव्यम्। एवं च यथा न शब्दशरीरमात्रविश्रान्तो वेदपदार्थः, तथैव नार्थशरीरमात्रविश्रान्तोऽपि। किंतु यथोपदिष्टशब्दार्थो-

भयशरीरशालीति स्पष्टं सिद्ध्यति । एतेन भगवन्तं वेदपुरुषं स्वार्थतः पातयतां वेदध्वजानां स्तेनचक्रवर्तित्वं स्मर्यते । तथाच **मनुः**—

'वाच्यर्था निहताः सर्वे वाङ्मूला वाग्विनिःसृताः ।
तां तु यः स्तेनयेद् वाचं स सर्वस्तेयकृन्नरः' ॥ (४।२५६)

वेदस्य नित्यत्वे लिङ्गम्—

'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया ।
वृष्णे चोदस्व सुष्टुतिम्' ॥ (ऋ०६ अष्ट०१ अध्या०२१ सू०)

( हे विरूप=नानारूप । त्वं तस्मै अभिद्यवे=अभिगततृप्तये । वृष्णे=वर्षकाय अग्नये । नित्यया=उत्पत्तिरहितया । वाचा=मंत्ररूपया । सुष्टुतिम् नूनम्=इदानीम् । चोदस्व=स्तुहि । )

'यज्ञेन वाचः पदवीयमायन् ।
तामन्वविन्दन्नृषिषु प्रविष्टाम् ॥' (ऋ०८ अष्ट०२ अध्याय०२३ व०)

( विदितार्थाः=धीराः, पदवीयम्=वेतेरचोयत्, संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः । पदेन यातव्यः पन्थाः पदवीयः, तं वाचो मार्गम् । यज्ञेन आयन्=प्राप्तवन्तः । ऋषिषु=अतीन्द्रियार्थदर्शिषु । तां प्रविष्टां=वाचम् । अविन्दन्=अलभन्त । )

'अजान ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयं स्वयम्भ्वभ्यानर्षत्,
तदृषयोऽभवन्, तदृषीणामृषित्वम् ॥' (तैत्ति०आर०२ प्रपा०६अनु०)

( पृश्नीन्=शुक्लान् निर्मलान् । ब्रह्म=वेदः । स्वयंभु=प्रमाणान्तरमनुपजीव्य प्रादुर्भूतम् । अभ्यानर्षत्=आभिमुख्येन प्रत्यक्षमागच्छत् । नैरुक्ते नैघण्टुककाण्डे द्वितीयाध्याये तृतीयपादे—'ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः' इति ब्रुवन् **यास्को**ऽपि ऋषिशब्दस्य प्रवृत्तिनिमित्तं वेदसंबन्धिदर्शनमेव निर्णीतवान् । दर्शनं प्रत्यक्षीकरणं न तु चाक्षुषं ज्ञानम्, शब्दराशेर्वेदस्य श्रावणत्वात् । एवं च ऋषति वेदं पश्यति साक्षात्करोतीति ऋषिः । गत्यर्थकस्य ऋषेर्दर्शने वृत्तिर्ज्ञानार्थत्वं वा । )

'लिङ्गदर्शनाच्च' (मी०द०१।१।२३) 'अतएव च नित्यत्वम्' (वे०द०१।३।२९)

"विध्यादिरूपो यः शब्दः सोऽनित्योऽथाविनश्वरः।
अनित्यो वर्णरूपत्वाद् वर्णे जन्मोपलम्भनात्॥'
अबाधितप्रत्यभिज्ञाबलाद् वर्णस्य नित्यता।
उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते॥"

(इति माधवीयौ पूर्वपक्षसिद्धान्तौ)

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥'(तैत्तिरीयसंहिताभाष्यभू०)

यत्तु शाब्दिकाः—वाक्यश्रवणानन्तरम् 'इदमेकं पदम्' इति मानसप्रत्ययो जायते। तस्य वर्णातिरिक्तः स्फोटसंज्ञः शब्दो विषयः। स एव नित्य इत्याचक्षते। तदन्ये न सहन्ते। मीमांसाश्लोकवार्तिके स्फोटवादोपसंहारेऽप्युक्तम्—

'वर्णातिरिक्तः प्रतिषिध्यमानः पदेषु मन्दं फलमादधाति।
कार्याणि वाक्यावयवाश्रयाणि सत्यानि कर्तुं कृत एष यत्नः'(१।१।५)

वेदस्यापौरुषेयत्वे मानम्—

तत्र पूर्वपक्षः—'वेदाँश्चैके संनिकर्षं पुरुषाख्याः। अनित्यदर्शनाच्च।' (मी० द० १।१।२७-२८) इति। सिद्धान्तः—'उक्तं तु शब्दपूर्वत्वम्। आख्या प्रवचनात्। परंतु श्रुतिसामान्यम्। कृते वा नियोगः स्यात् कर्मणः संबन्धात्।' (मी० द० १।१।२९-३२) इति।

'पौरुषेयं न वा वेदवाक्यं स्यात्, पौरुषेयता।
काठकादिसमाख्यानाद् वाक्यत्वाच्चान्यवाक्यवत्॥'
समाख्याध्यापकत्वेन, वाक्यत्वं तु पराहतम्।
तत्कर्त्रनुपलम्भेन, स्यात्ततोऽपौरुषेयता॥'

(इति माधवीयौ पूर्वपक्षसिद्धान्तौ)

कठेन प्रोक्तं काठकमित्यादिदर्शनाद् 'विमतं वेदवाक्यं पौरुषेयं वाक्यत्वाद् व्यासादिवाक्यवत्' इति यदनुमानं तद् वेदकर्त्रनुपलम्भात् प्रतिकूल-

हेतुहतम्। एतेन वेदे विभाव्यमानाः संज्ञाः कथांशा वा नित्यत्वाभिप्रायादिना योजनीया इति बोध्यते। अतो हि—

'पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उक्षन्।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता॥'
(ऋ० सं० १० मं० ८ अ० ६९ सू०)

'अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः।
विश्वा यदजय स्पृधः॥' (य० सं० १६ अ०)
'इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः।
जघान नवतीर्नव॥' (सा० सं० छन्दआर्चि०)

'यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः।
तत्ते बध्नाम्यायुषे वर्चसे बलाय दीर्घायुत्वाय शतशारदाय॥'
(अ० सं० १ कां०)

इत्येवमादयो वेदभागास्तथाभिप्रायका बोद्धव्याः। एवमवबोधने—"यो ह वै वसिष्ठं वेद, वसिष्ठो हि स्वानां भवति, वाग्वाव वसिष्ठः"। इति। 'अथ हैनं वागुवाच, यदहं वसिष्ठोऽस्मि, त्वं तद्वद् वसिष्ठोऽसि" इति च (छां० उ० ५ प्र० १ खं०) "एष उ एव बृहस्पतिर्वाग् वै बृहती, तस्या एष पतिस्तस्मादु बृहस्पतिः" (बृ० उ० १ अ० ३ ब्रा०) इति। "वागेवात्रि, र्वाचाह्यन्नमद्यते,ऽत्रिर्ह वै नामैतदत्रिरिति, सर्वस्यात्ता भवति, सर्वस्यान्नं भवति" इति च (बृ० उ० २ अ० ४ ब्रा०) इत्येवंजातीया वेदभागा अपि लिङ्गानि। वेदानां तु 'निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्' (सां० द० ५। ५१) इति सर्वे। व्याकरणमहाभाष्यकाले—"एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधा अथर्वणो वेदः" इति वेदविभागो विज्ञातोऽभूत् (११३१)॥

प्राणा व्याख्यानशूराणां कर्मयोगश्रियां पदम्।
एषा चातुर्वर्ण्यशिक्षा वेदद्दृष्ट्या सहैधताम्॥

इति चतुःश्लोकी॥

सामान्यधर्मं ग्रहणपूर्वकविशेषधर्मानिर्धारितत्वमन्तरङ्गत्वम् । सामान्यधर्मग्रहणपूर्वक-
विशेषधर्मनिर्धारितत्वं बहिरङ्गत्वम् । यः कश्चन यावतो विशेषधर्मज्ञान
रहितः स्यादित्यादेरिति । केचन पुनः पूर्वोक्तान्तरङ्गबहिरङ्गाः स्वप्राक्संस्था जिज्ञासवो ॥
तत्र प्रायेणासौ विडम्बना — जिज्ञासवो ज्ञातारं न लभन्ते, लभमाना वा प्रति-
तदाभासैरन्यथान्यथा बोध्यन्ते । तत्रापि केचन अव्युत्पन्नेन पुरोहितादिना
विपरीतं बोधिताः; केचन पुनरन्यथाव्युत्पन्नेन नास्तिकादिना शिक्षिताश्च प्रवर्तिः
अन्यथाव्युत्पन्नो नाम ये शब्दा येषु येषु वाच्येषु प्रामाणिकैर्व्यवहृतास्तद्विपरीतान्
प्रत्यायकः । परमार्थतो ह्येते शोच्या अपि प्रतिष्ठादिनात्मानं श्रेयस्करमिव मन्यमानाः
विद्वांसो बहुत्र मुधैव प्रत्यवतिष्ठन्ते । प्रत्यवस्थाने च विशिष्य वेदविषयकं तदनु-
षड्गदङ्गोपाङ्गविषयकमपि । अहो ! स भगवान् वेदो यल्लाभाय महर्षयस्तपांसि तेपुः,
यच्छ्रवणलाभाय तैरङ्गान्युपाङ्गानि च प्रवर्तितानि । किं बहु वितनैः ? यदर्थं किय-
त्कालात्प्रागपि वेदाङ्गोपाङ्गकुशलैः शङ्करकुमारिलप्रभाकरमण्डनसायणप्रभृतिभिः
शास्त्रार्थिवर्यैर्महता प्रयासेन भावशुद्धिपुरःसरं प्रतिपाद्य अपकर्षहेतवो निर्मूलि-
ताश्च । अहह ! साम्प्रतं स एव वेदस्तेषां महोदयानां माध्यस्थ्ये तैस्तैश्चार्थपरामर्शै-
र्व्याक्रियते पर्यनुयुज्यते परीक्ष्यते परखण्ड्यते शिल्पगुल्मीक्रियते च, येषां विषयान्तर-
भूयिष्ठेषु मनोमुकुरेषु कदापि त्वच्छप्रतिष्ठा वैदिकी चर्चा चेतोमात्रं स्पृशन्तिनवा ।
येषां राजविद्यानुषङ्गेण यावत्संस्कृतमाशासि तावता परिनिष्ठितत्वेऽपि न भाषणे
अपि न संपद्यते तर्हि का कथा व्याकरणप्रातिशाख्यादिसाधनलभ्यस्य वेद-
रहस्यप्रकाशनस्येति । अहो ! वेदतत्त्वं बालानां क्रीडनकमिवाजनिष्ट । तथा

यथा बालो म्रियते तथा तथा निःशङ्कं क्रियते । यथा तदत् बालो वदति -- अम्ब!
तात! भ्रातः! एतदेवं कुरु । नहि नहि, एतदपि मह्यं न रोचते, एवं कुरु । तथा
सम्प्रति नानाकारसंस्कारसंकीर्णमानसाः श्रौतस्मार्तकर्मानुष्ठानेषु शारीरिक-
मानसिकक्लेशात् त्रस्यन्तो लौकिकभयेन गतानुगतिकन्यायादुपदेशिका-
नुरागेण वा सहसा भारतीयान् वर्णाश्रमाचारान् परित्यक्तुमपारयन्तो धर्मपरिव-
र्तनमाकाङ्क्षन्ति । कालानुकूल्येन तदनुकूला मतोपदेशका अपि पप्रथिरे । य एवं
हेतवो वेदान् पारतो विपर्यासितुमशक्नुवाना अप्यपरितोऽन्यथयितुं साटोपं
कल्पयन्तः प्रमाणाभासजातेन स्वकपोलकल्पितानर्थान् सिद्धान्तयन्त अपि
तत्र चार्वाकबौद्धादिवेदबाह्यदर्शनानि खण्डयन्तोऽपि वस्तुतस्तदाशयात् परि-
णामगन्तो वाग्बलेन बहून् राजविप्रोपजीविनोऽनधीतानवधारितव्याकरण-
न्यायमीमांसारहस्यान् स्वपरिचितभाषानुवादमात्रशरणाँल्लोकान् धर्मविषय-
मपि परलोकज्ञानमुग्धान् बहुधा प्रतारयन्ति । लोकमते प्राणिभिरुच्चावच-
भोगैरनुभूयत इति लोकः स्थावरजङ्गमात्मकः । अतोऽन्यः परलोकः । पूर्वं
तच्छरीरेण भोगः परत्र शरीरान्तरेणेति विशेषः । तत्र तच्छरीरेणैव भोगं प्रतिपद्यमा-
नानां लोकायतिकानां मते परलोकस्य परमेश्वरस्य च प्रत्यक्षतयानुपलम्भात्
खपुष्पवत् कल्पनामात्रम् । अत एवेह लोके येन केनापि प्रकारेण धनमर्ज-
यित्वा सुखमेव सम्पादनीयमिति, तच्च स्वद्रव्येण नायातं परद्रव्येण चेत्तत्र
लौकिकभयमन्तरा न किमपि भयान्तरम् । अग्निहोत्रश्राद्धादिकर्माणि केवल
दृष्टफलानीत्यादि । शरीरान्तरेणापि भोगं प्रतिपद्यमानानां मते तु ये

विशेषास्तद्दिग्दर्शनार्थं सर्वोऽयमुपक्रम एव। भोगश्च सुखदुःखान्यतरसाक्षात्कारः।
तत्र सुखमेवानुभवेयं दुःखं मे मा भूयादिति प्राणिमात्रस्याशंसनम्। किन्त्वेतावता,
मोक्षानधिगतभावनामनेकेषामेतदभिप्रायकम्। सुखसाधनं धर्म इति दार्शनिकानां
सम्प्रत्ययः। यदि लोके धर्मस्य सुखहेतुतया आपामरं प्रसिद्धिर्न स्यात्तदासौ
केन जिज्ञास्येत, जिज्ञासितो वा केनानुष्ठीयेत। स च धर्मो यद्यपि देशकाल-
विप्रकर्षेण नानाविधो जातस्तथापि भारते वैदिकत्वेन प्रतीत एव इति
चिरंतनानां रहस्यम्। धर्मस्य निराकारतया यद्यपि तत्र प्रत्यक्षं न प्रभवति,
तथाप्यनुमानागमौ गमकौ। तदात्मकानि श्रौतस्मार्तकर्माण्यपि धर्मपद-
वाच्यानीति बोध्यम्। इत्थं च सोऽयं धर्मो यदि यथारुचि भवेत्तर्हि
प्रतिव्यक्तिसंस्कारभेदभिन्नानां रुचीनां वैचित्र्यादनवस्थितत्वावस्थानं
प्रसज्येत। तथा कल्पसूत्रप्रतिपादितानां धर्मघटकानां वस्तूनां हेतूद्भावन-
या इतोपादानोपस्थितावव्यवस्थापि स्यात्। यथा गोमयमृगचर्ममधूनि
पवित्रत्वेन श्रूयन्ते तत्र यद्यपि गोमयस्य पुरीषत्वेन, मृगचर्मणो मृग-
वधहेतुकत्वेन, मधुनः क्षुद्रानेकजीवमरणतानिष्पन्नत्वेन सिद्धत्वेन च
पवित्रत्वनिर्णायकानीति विभावयन्तु कारणिकाः। अत एवैतेषां वस्तूनां
जैनादिधर्मशासने ऽपावनत्वं प्रतिपादितम्। शङ्खशृङ्गोर्णादृम्भरा-
दीन्यप्यन्योदाहरणानि। एतेन मृगनाभिमौक्तिकादीन्यपि व्याख्या-
तानि। एवमादिदोषप्रसङ्गभिया भारतीया दूरदर्शिनो वेदानुसारेण
धर्मस्य विधिवाक्यगम्यत्वमाहुः। उक्तं च:-

'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।'

(वाग्. शि. १ श्लो. वे. ८.)

इत्युक्तम् । शास्त्रं च वेदाभिन्नं, वेदस्य दिग्देशकालविप्रकृष्टभिन्नाचार्यकनि-
र्दिष्टवृत्ताभिधेयत्वात्, तत्त्वं च भिन्नभिन्नशास्त्रीयाध्यापकाध्येतृप्रवचनैर्दुर-
वधारणावगम्यमिति भृशं निरीक्षणीयम् । यथा लोके –

'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्

एषामन्यतमाभावे दिव्यान्यतममुच्यते ।' (याज्ञ. २।२२)

इति प्रतिज्ञातार्थस्य साधनचतुष्टयी, तथा वेदेऽपि । तत्र पदार्थसंशये –
लिखितं = पारम्परिकव्याख्यानम्, भुक्तिः – अविच्छिन्नयाज्ञिककर्मफला-
पारगतिः, साक्षिणः – श्रौतस्मार्तसूत्रव्यपदिष्टाः कल्पग्रन्थाः, एषामन्य-
तमाभावे दिव्यमुपतिष्ठते । तच्च अलौकिकं पौरुषप्रदर्शनं संप्रति कार्श्य-
मापन्नम् । तत एव वाग्बलेन शास्त्रे नानामतानि । कियता ज्ञाना भिन्नमता
वलम्बिनी, पश्चाद्भिन्नमतावलम्बी, तत्रास्माभिरपि निदर्श्यते इत्यलमप्रकृतेन ।

यथा वाग्बलेन वेदार्थोऽन्यथान्यथा नीयते स एव दिङ्मात्रमुदाह्रियते ।

'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।

होतारं रत्नधातमम् ॥ (ऋ. सं. १।१।१।१)

इह पूर्वं सांप्रदायिकोऽर्थः – (यज्ञस्य पुरोहितम्; यथा राज्ञः पुरोहितः
तदभीष्टं संपादयति, तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । यद्वा ।
यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम् । देवम्; दाना-
दिगुणयुक्तम् । होतारमृत्विजम्; देवानां यज्ञेषु होतृनामक ऋत्विगग्निः

देव । तथा च श्रूयते – 'अग्निर्वै देवानां होता' इति (तै.सं. २।५।९) ।
रत्नधातमम्; यागफलरूपाणां रत्नानामतिशयेन धारयितारं प्रेजयितारं वा
अग्निम्; अग्निनामकं देवम् । ईळे, स्तौमि । मन्त्रस्य होता प्रयोज्यत्वात्,
'अहं होता स्तौमि' इति लभ्यते ) इति श्री सायणाचार्याः ।

अस्मन्तु: नाम्रूपाणां वेदानामीश्वर मूलकत्वात् यद्यपि प्रतिमन्त्रादिं स
एव वक्ता तथापि कल्पसूत्राद्यनुसारेण होतादय: स्मर्यन्ते । नहि यथा
प्रश्नोत्तररूपो गीतादिर्भगवता कृष्णद्वैपायनेनोपनिबद्धस्तथा वेद इति ।
येन च साक्षात्कृतवाहेतो वा वक्ता श्रोता वा निर्दिश्येत । वेदो हीश्वरत्वात्
तत्पूर्विका च सकललोकसृष्टिरिति वैदिका सिद्धान्त: कुम्भकार ज्ञानपूर्वक
कुम्भनिर्माणदृष्टान्तेन स्थापित इति दिक् ।

होतादि स्मरणाभावे तु 'अग्निमीळे' इत्यादि मङ् निरुक्तरीत्योत्तम-
पुरुषयोगिन्या धातोस्तदा जगज्जननबीजमीश्वरं निर्दिशेत् । तथा च –
'अहमीश्वरोऽग्निमीळे' इति विपरीतार्थ: संपद्येत । तत्र मध्यमपुरुष-
योगिन्या प्रत्यक्षकृतया श्रोता, आख्यात प्रथम पुरुषयोगिन्या
परोक्षकृतया वक्तुरीश्वरस्यापि प्रतिपाद्यविषयागोचरता च सिध्येत् ।
तदिदं सर्वास्तिकमतस्य बहिर्भूतम् ।

एवम् — 'यथेमां वाचं कल्याणीमावदानि जनेभ्य: । ब्रह्मराजन्याभ्यां
शूद्राय चार्याय च स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं
मे काम: समृध्यतामुप मादो नमतु । (य.सं. २६अ. २ मं.)

इत्यत्र परमेश्वरो वक्तेति, सर्वेभ्यो वर्णिभ्यः शूद्रादिभ्योऽपि वेदं ब्रवी-
तीति च प्रयोजनद्वयं प्रतिपद्यमानानां प्रथमं प्रयोजनं समीचीनं नष्टम्। द्वितीयं
तु विनाशितो मुखं परीक्षणानां गच्छति - नहि क्वापि वाक्, कल्याणी वा
वाक्, ऋग्यजुःसामलक्षणेऽर्थे सिद्धेति; तेन तदर्थप्रसिद्ध्यात्। यत्र
संहितायां ब्राह्मणे कल्पसूत्रेऽन्यत्र वा वैदिकं वाक्यमपेक्ष्यते तत्र
विशेषाभिधित्सायामृग्यादिनाम्ना, सामान्याभिधित्सायां मन्त्रश्रुतिनिगम-
आम्नायादिनाम्ना चोद्दिश्यत इति सुप्रसिद्धं वेदाङ्गोपाङ्गपाठकानाम्।
प्रकृते तु — 'यथेमां' — इत्यनेनात्मनोऽभिप्रायः कीर्त्यते। —
(हे परमात्मन्! यथा = येन प्रकारेण; इमां = बुद्ध्या संनिधापिताम्;
कल्याणीं = प्रियां, शोभनामनुद्वेगकरीमिति यावत्; वाचं = वाणीं,
श्रेयस्करीम्; जनेभ्यः = लोकेभ्यः; अहं; आवदानि = आसमन्तात्
वदानि ब्रवाणि; तथा मां संपादयान्तर्यामितयेति तात्पर्यम्।
प्रार्थनायां वदेर्लोटि उत्तमपुरुषैकवचनम्। जनेभ्य इत्यस्य ब्रह्मराजन्या-
शूद्राय च, अर्याय च, स्वाय च, अरणाय च इति विशदीकरणम्।
प्राणिमात्रेभ्य इति निष्कृष्टार्थः। तथा च स्मर्यते — क्रुध्यन्तं न प्रतिक्रुध्येद-
क्रुष्टः कुशलं वदेत्। सप्तद्वारावकीर्णां च न वाचमनृतां वदेत्॥ (मनु॰ ६।४८)
इत्यादि। तथा देवानां दक्षिणायै दातुः प्रियो भूयासम् - इत्यर्थः। प्रमादादिवशेन
देवा यजमानस्य यदि ऋत्विजि विरक्ता न भूयासुरित्यात्मनि बलिष्ठाशीः।
मानभूर्वं हि भूयासमितिवत्प्रयोगः॥) इति।

यत गो न्दधाति नानुचितम् ॥

अर्थौचित्यकार्यः । तत्र —

भौतिकोऽग्निः — (यज्ञस्य; इज्यते – यथायथं सत्क्रियते, संहन्यते, दीयते; अनेन यागविशेषेण, अत्र यागविशेषे वा इति यज्ञः । 'यज' देवपूजासंगतिकरणदानेषु । 'यजयाज–' (3/3/90) इति नङ् । पञ्चभूततत्त्वविस्तारकारणको जलस्थलनभोगामी अग्निनिमित्त-भेदेन तत्तत्स्थलभागी यानविशेषपदार्थः । तस्य पुरोहितम्; पुरतो-निहितम् । शरीर इव जनिते यानेऽप्यग्निवायुजलेषु पदा-र्थेष्वन्वयव्यतिरेकेणाग्नेरेव प्राधान्यादर्शनादितरयोः । सान्निध्या-नगमाच्चेत्यर्थः । देवम्; तत्र तत्र विशेषेण जाज्वल्यमानम् । होतारम्; जुहोति आदत्ते काष्ठाङ्गारादिकं कवलयतीति होता । अग्निशालाति क्षिप्तमिन्धनादिकमत्तीति प्रत्यक्षम् । अदनं कवलनं दहनमिति प्रवृत्ते समानम् । हुदानादनयोः । 'नप्तृनेष्टृत्वष्टृहोतृ–' (उ. २/९५) इति साधुः । तम् ऋत्विजम्; ऋतानुपयोगकाले यजति भूम्याकाशजलपर्वतैरितरैः सहभावं गच्छतीति ऋत्विक् । 'ऋत्विग्दधृक्–' (3/2/59) इति साधुः । नानाभङ्गिभासुरपञ्चात्मक-भूततत्त्वाविष्ठिते नभसि सान्निध्यातिशयात् संगच्छमानो यथावस-रमिति भावः । तम् । रत्नधातमम्; रत्नानि रमणीयानि वस्तूनि भाग्यजयधनानि वा दधातीति रत्नधाः । डुधाञ् धारणपोषणयोः

'आतो मनिन् क्वनिब्वनिपश्च' (३।२।७४) इति चकारानुकृष्टो विच्।
लोके तु 'अन्येभ्योऽपि दृश्यन्ते' (३।२।७५) इत्यनेनेति विशेषः।
अतिशयेन रत्नधा इति रत्नधातमः। 'अतिशायने तमप्-
(५।३।५५) इति तमप्। अग्निम्; अङ्गति नैकधा कलापत्वेन
प्रेर्यमाणः प्रेरितो वा यथेष्टं गच्छतीत्यग्निः। अगि गतौ।
'अङ्गेर्नलोपश्च' (उ. ४।५०) इति निर्नलोपश्च। तम्। ईळे
'ईड स्तुतौ' 'ड'कार स्थाने 'ळ'कारोच्चारणं बह्वृच संप्रदाय
सिद्धम्। स्तुवे। स्तुतिरग्नेरपूर्वपराक्रमसूचिका। अपूर्वत्वं च
विद्युदादिनिबन्धनमिति प्रमाणसंकोचेन व्याख्या।) इति।

भौतिको वायुः — (भौतिकानिलपक्षेऽप्येवमेव योजना।
अर्थोऽपि प्रायः पूर्ववत्॥ '— आकाशाद्वायुर्वायोरग्निः —'
इति तैत्तिरीयश्रुत्या कार्यकारणयोरभेदोपचारादग्निशब्दो
वायुवाचको द्रष्टव्यः। अथवा योगार्थबलेन वायुवाचकः।
नन्वेवं 'रूढिर्योगापहारिणी' इति न्यायो विरुध्यते।
विरुध्यतां नाम, न वयमवैदिकं प्रमाणमातिष्ठामहे।
वस्तुतस्तु स न विरुध्यते॥) इति।

एवमग्न्यादीनामन्यथाऽन्यथा व्याख्यानमायाति। अत इमं
प्राय प्रज्ञापराधनिरासार्थमेव मीमांसकैः —
'उपक्रमोपसंहारौ —' (व्यु. रि. १७० श्लो. वे. इ.)

इति क्रमेण परीक्षासरणम् आविरकारिषत । मलब्राह्मण स्वकीये वेदान्तदर्शनेऽपि वेदान्तवाक्यजातस्य ब्रह्मतात्पर्यपर्यवसानत्वे प्रथमे, सम्भावित विरोधपरिहारत्वे द्वितीये चाध्याये प्रतिपदोक्तप्रमेयजातम् —

समन्वये स्पष्टलिङ्ग, मस्पष्टत्वेऽप्युपास्यगाम्

ज्ञेयगं, पदमात्रं च चिन्त्यं पादेष्वनुक्रमात् ॥

द्वितीये स्मृतितर्काभ्यामविरोधो, ऽन्यदुष्टता

भूतभोक्तृश्रुते, र्लिङ्गश्रुतेरप्यविरुद्धता ॥ (वैयासिकन्या. मा.

इति क्रमेण परीक्षितम् । अद्यापि भारत दुरदृष्टाक्रमणेन धर्म-ब्रह्मवादमति दयमाभिनिवेशान्न प्रत्याहे । मृगाक्षिं प्रतीव-र्तनम्' (प.सं. ३।६।) 'ईशावास्यं' (प.सं. ४०।१) इत्येव मादिदर्शनैः स्वार्थसाधनकलाप्यां न विरमामहे ।

एवमाससमञ्जस्यादेव वराहमिहिरेण गर्गोक्तिर्दर्शिता —

'ग्रन्थोऽन्यथाऽन्यथार्थं करणं यच्चान्यथा करोत्यबुधः

स पितामहमुपगम्य स्तौति नरो वैशिकेनार्थम् ।'

(बृ.सं. ४२।१४)०।

अद्यावधि पठ्यमानासु वेदशाखासु पाठभेदो नोदपद्यत ततोऽर्थभेदार्थभेदयोर्हि दुःखोद्भवैः । सम्प्रति कतिपयहायनेभ्यः पाठभेदोऽपि सुकरः । यस्मादिदानीं शिक्षाविभागेन च तथैव शिक्षा प्रकान्ता । यथोक्त मन्त्र —

यदि गच्छेत् पाठयुक्तदत्या, सो योग्यता पीयते,

प्रत्याशं प्रसरन्तु धर्मकथकाः सत्यप्रथायै वत्स्यते ।

वान्ताशंसन्तु देशभाषाः, जनता नैवात्मना क्षेष्यते

शुश्रूषन्त्वेदवचोऽपयाति बहुधा किं सौष्ठवं मन्महे ।' इति
(भारतीयविज्ञानवादे. १।८

अथ कालविकासितेन वेदान्तेवासिना पुराणवर्गीय स्थितिभावे क्षीणार्थोऽपि स वेदगुरवे प्रामाण्यवितानाय प्रभवति । तथाहि—

वेदप्रभवं कर्मोपासनं ज्ञानमेव पुराणसंहितायाः लक्ष्यम् । विस्तारस्तु अतिविस्तृतं संकलनम् । कर्मादिवेदप्रतिपाद्यानामुपबृंहणार्थमेव पुराणसंहितायाः प्रस्थानभेदेन पुराणानां प्रपञ्चनम् । नामरूपव्याप्तियया साक्षिभूतस्य ब्रह्मणो हरिहरादिनामरूपाणीव तत्प्रसादकानि कर्माण्यपि नामरूपान्तराण्यापेदिरे । श्रौतसूत्रेष्वग्निहोत्रादीनीव, स्मार्तसूत्रेषु गर्भाधानादीनीव, मन्वादिप्रणीतधृतस्मृतिषु सद्व्यवहाराण्युक्तानीव, सर्गप्रतिसर्गादिसंदर्भनिबन्धेषु पुराणेतिहासेषु यथाप्रसङ्गं श्रौतस्मार्तमर्यादासंश्लिष्टानि सजातीयानि यथायथं हरिहराद्यवदानानि निरूपितानि । इहैव सतत्त्वज्ञानाख्यानानां सांख्यविषयाणां, समाधिसाधनविभूतिकैवल्यरूपाणां योग-विषयाणां, तथैव भक्तिज्ञानध्यानोपवासव्रतदानादिलक्षणानां प्रकीर्णविषयाणां, तथाधिकारप्रस्तावेन कथाख्यानानां च प्रवेशाः कथोपोद्बलकाश्च ——

(सप्तदशपृष्ठोऽग्रेऽवलोकनीयः)

मीमांसकन्यायैः वेदेषु वसिष्ठादिनित्यपदार्थाः। पुराणेतिहासयोः पुनर्यथा-यथं नित्यानित्या वसिष्ठादिपदार्थाः। अनित्यो वसिष्ठादिर्यथा—सूर्यादिवंशस्य गुरुर्वसिष्ठादिरिति। कथापरिच्छेदा अपि वेदलोकयोः प्रतीतानामभिधानानामर्थादिविभावनान्महीयसाऽऽयासेन नातिदुःशकाः। त्रिविक्रमत्रिपुरादीनां बहूनां शब्दानां लोकवेदसाधारण्यदर्शनादिति परीक्षादिक्। एतेन पुराणेतिहासयोर्न्यापकाः क्वचिद् व्याप्या भिन्नभिन्ना अपि विषयाः परिमार्ष्टुं सुशकाः स्युरिति संभूय कार्यकारिताप्रदर्शनम्॥

भवन्ति चात्र—

यथा निभालितो वेदस्तथैव हि निभाल्यताम्।
अन्यथा कल्यमानेऽस्मिन् मुख्यार्थात्स्खलनं भवेत्॥ १॥
स्वव्याख्या मान्यताख्यात्यै नहि प्राग्बहुजल्पनम्।
अज्ञो यथाश्रुतग्राही विज्ञो वस्तूहते यतः॥ २॥
निर्बाधं सर्वविज्ञानसंदर्भेभ्यः पुरातनः।
वेदोऽयं शब्दत इव स्वार्थतोऽपि न पात्यताम्॥ ३॥
पातनेऽप्येष संक्रान्तमहिमा नहि हीयते।
किंतु व्यर्थपरिस्कन्दप्रत्यवायेन भूयते॥ ४॥

## इति विवेकिताक्षिप्तौ वेद-वेदार्थौ।

# कर्तव्यता ।

अथ कुम्भादिकार्येण तत्कर्तेव, भूपिण्डादिविश्वकार्येण कश्चिद् विश्वकर्ता तर्क्यते । तत्र कुम्भादौ मृदादिनेव भूपिण्डादौ येन भूयेत, तत् तस्येच्छाशक्तिरेव; इतरस्योपादानादेर्व्यवस्थापयितुमशक्यत्वात् । तत एव योऽयं न कुम्भस्य कुम्भकार इव विश्वस्य कर्तेति प्रतिपत्तुं पार्यते, सोऽयं स्वातन्त्र्याद् विश्वेश्वर इत्याख्यायते । कर्तृत्वसाम्येऽपि दृष्टान्तदार्ष्टान्तिकयोः कार्यकारणसामग्रीप्रभाववैषम्यात् ।

यदाहुः—

'ईश्वरोऽनन्तशक्तित्वात् स्वतन्त्र—' इत्यादि ।

(चातु. शि. ३१ श्लो. वे. द.)

भवन्तीह—

'किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥'

इत्येवंजातीया विकल्पावताराः । इत्यंच—

'कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे ।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ॥'

(ईश्वरप्रत्यभि.) इति ।

अयं हि भावविकारानुरोधेन ब्रह्मा विष्णू रुद्र इत्यादिभिः संज्ञाभिरभिलप्यते । विश्वस्योत्पत्त्या ब्रह्मा—तच्छक्त्या ब्राह्मी, स्थित्या विष्णुः—तच्छक्त्या वैष्णवी, संहृत्या रुद्रः—तच्छक्त्या रौद्रीत्येवंप्राया भावविक्रियामूलिका संज्ञा । शक्तितिरोधाने तु गुणोपसंहारान्निष्कलं ब्रह्मेति स्त्रीपुंसाभिन्नव्यक्त्याभिधीयते । इह स्थितियोगिनी विपरिणममाना वर्धमाना-

ऽपह्लीयमाणा भावविक्रिया कुम्भकारवैभवमतिशयाना स्वाधिष्ठानसत्ता-स्फुरत्ताशालिनी तस्यैव विश्वनिदानस्यातद्व्यावृत्त्या चिदात्मा विश्वशरीर इत्येवंतात्पर्यकं नाम बोधयति। अत्र कर्तृत्वादौ–'तज्जलानिति शान्त उपासीत' ( चातु. शि. २१ श्लो. वे. द. ) इति च, ज्ञातृत्वादौ–'स वेत्ति वेद्यम्' ( चातु. शि. २७ श्लो. वे. द. ) इति च, स्वात्मत्वादौ–'अयमात्मा ब्रह्म' ( चातु. शि. २१ श्लो. वे. द. ) इति च, आदिसिद्धत्वादौ–'यो ब्रह्माणं विदधाति पूर्वम्' (चातु. शि. १४१ श्लो. वे. द.) इति च, महेश्वरत्वादौ–'तमीश्वराणां परमं महेश्वरं' ( श्वे. ६। ७ ) 'परास्यशक्तिर्विविधैव श्रूयते' ( चातु. शि. २७ श्लो. वे. द. ) इति च, चिदात्मत्वे–'एको देवः सर्वभूतेषु गूढः' ( चातु. शि. २७ श्लो. वे. द. ) इति च, विश्वशरीरत्वे–'सहस्रशीर्षा पुरुषः' ( चातु. शि. १६६ श्लो. वे. द. ) इति च, इत्येवंजातीयाः परःसहस्राः श्रुतिवादाः निर्देष्टुं नायान्ति। स्मृतयस्तु श्रुतिपरिचारिका एव।

अन्यत्रापि—

'शक्तिश्च शक्तिमाँश्चैव पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत्सर्वं शक्तिमाँस्तु महेश्वरः॥
शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव॥' इत्येवमादि।

अयं चिदात्मा विश्वशरीरो विविधं विराजमानत्वाद् विराडपि श्रुतिस्मृतिपुराणेतिहासेषूद्घोष्यते। सविशेषेऽपि निर्विशेषे सातिशयेऽपि निरतिशयेऽस्मिन् महाप्रकाशे यत्किंचिन्नामरूपात्मकं वस्तु विश्राम्यति। सौरादिप्रकाशविलक्षणो योऽयं स तावद्—

"सजयति महाप्रकाशो यस्मिन्दृष्टे न दृश्यते किमपि।
कथमिव तस्मिन्दृष्टे सर्वं विज्ञातमुच्यते वेदे॥'
'नैसर्गिकी स्फुरत्ता विमर्शरूपास्य वर्तते शक्तिः।

तद्योगात् परमात्मा विश्वोत्पत्त्यादिकं कुरुते ।"

इति स्फुरत्ताधर्मा । अस्य शरीरिणो द्रव्यगुणकर्मसामान्यविशेषसमवायाभावयोगिनि विश्वशरीरे सतृणाभ्यवहारवृत्त्या विश्वाद् अहंकाराद्याश्रित एवात्मा पृथङ् न्यरूपि काणादैर्लौकायतिकानामाननमानमुद्रणाय । तथाप्रतिपद्यमानैराक्षपादैरपि कथकैर्नातिशयितं प्रादर्शि किंचित् । पदार्थतत्त्वसंरम्भिणोऽप्यपदार्थतत्त्वभ्रमिणोऽमी तार्किकाः कथमिव नोपालभ्याः । तत एव तत्त्वान्तराणि संख्यायमानैः सांख्ययोगैरात्मनि प्राकृतधर्माणां प्रहाणं निरूपयद्भिरहंकारादिविरुद्धधर्माभिमर्शात् सोऽतितरां विविक्तो निरणायि । नहि धूमेन धूमध्वज इवाहंकारादिना आत्मा संश्लिष्यते ततो विश्लिष्यते वा संनिकर्षेऽप्यद्भिः पुष्करपलाश इव न लिप्यत एवेति यौक्तिको वैदिकश्च विमर्शः । सांख्ययोगा अपि प्रसंख्यानघना आत्मनोऽखण्डतां प्रतिजानाना अपि खण्डतामालम्बमाना वञ्चिता एव परीक्षणीयाः । पूर्वे आत्मनो गुणबहुत्वाभ्यामुत्तरे बहुत्वेनेति विशेषः । यथोक्तम्—

'यं न पश्यन्ति योगीन्द्रा सांख्या अपि महेश्वरम् ।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज ॥'

( सांख्यप्रवचनभाष्यभूमि. ) इति ।

अत्र विश्वशरीरे पृथिव्यादिषु श्रौताध्वना यजनीयानुपदिशन्तः पूर्वमीमांसकाः, स्मार्ताध्वना धर्मसंग्रहकाराः, पुराणेतिहासाध्वना स्त्रियः शूद्रा वर्णशेषाश्च विविधभङ्गिजटिलैर्मनोवाक्कायकर्मपटलैर्व्याप्रियन्ते । सोऽयं व्यापारः पूर्णप्राङ्गणस्य यज्ञसंस्कारपूजनभजनादिशब्दैः शब्द्यते । पूजनभजने तु विशेषतस्तीर्थप्रतिमादिसङ्गिनी । चिदात्मकक्षीकारेण पुनरधिकारिणोऽन्तश्चक्रेषु संप्रज्ञातादिवर्त्मना युज्यन्ते । सोऽयं योग आत्मिकशक्तिसंकेतभूमा बहिराडम्बरडिण्डिमायोगेन नहि पूर्वोपपादितव्यापार इव देशकालपात्रवैषम्याद् भिन्नभावेषु साम्यास्कन्दीदानीमपि ।

तपःस्वाध्यायेश्वरप्रणिधानात्मा क्रियायोगोऽपि तपःप्रभृतेर्भिन्नस्वरूपतया बाह्यपरिच्छदघटितात् पूर्वस्माद् भिद्यत एव । धौतिर्बस्तिर्नेतिस्त्राटकं नौलिः कपालभातिरिति षट्तयी हठयोगप्रक्रिया तु नेहाद्रियते । यथोक्तं हठयोगप्रदीपिकायामेव—

'प्राणायामैरेव सर्वे प्रशुष्यन्ति मला इति ।
आचार्याणां तु केषांचिदन्यत्कर्म न संमतम् ॥'

( द्वितीयोपदे. ३७ श्लो. ) इति ।

( आचार्याणां योगियाज्ञवल्क्यादीनां अन्यद् धौत्यादि षट्कर्म नाभिमतमिति तट्टीकाकाराः । )

अथोत्तरमीमांसका ब्रह्मजिज्ञासामुपबृंहयन्तः सम्यक् परमात्मानं परमेश्वरं निरूपयन्ति वैमत्यव्युदासाय तमौपनिषदं पुरुष इति श्रावयन्ति । तत्र पुरुष इत्यलौकिकशक्तिस्फोटनाय । तत एव योगाः पुरुषविशेष इत्यधीयते । पुरुष इति पुंस्त्रीसाधारणवचनः । किंवा चेतनमात्रतात्पर्यकः । 'पुरुषबहुत्वम्' इत्यादिप्रयोगात् । अस्यालौकिकशक्तिमत्ता—

'न यत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥' ( श्वेता. ६ । १४ ) इति ।

एतदेव विधान्तरेण स्मर्यते—

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद् गत्वा न निवर्तन्ते तद् धाम परमं मम ॥'
'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥'

अत्र—'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' ( वे. द. १ । १ । ३० ) इति वेदवित्तया गीतामर्यादयात्मविभूतिदर्शनम् ।

आत्मसाक्षात्कारे हि—

'अन्तर्विभाति सकलं जगदात्मनीह
यद्वद् विचित्ररचना मुकुरान्तराले ।
बोधः पुनर्निजविमर्शरसानुवृत्त्या
विश्वं परामृशति नो मुकुरस्तथा तु ॥'

इत्येवंप्रायाः प्रतिपत्तयः । तदभावे हि—

'उत्क्रम्य विश्वतोऽङ्गात्तद्भागैकतनुनिष्ठिताहन्तः ।
कण्ठलुठत्प्राण इव व्यक्तं जीवन्मृतो लोकः ॥' इति ।

अस्ति-भाति-प्रीणात्यात्मा ह्यात्मा । यत्रापरिच्छिन्नेऽधिष्ठाने नामरूपात्मा विश्वधारा विवर्तते परिणमते वा । एतदधिष्ठानमेव महाप्रकाशादिपदयोग्यभिधीयते । एतस्मिन्नेव द्वैतात्यन्ताभावो जरीजृम्भ्यते यदर्थं प्रख्योपाख्याख्याति कुक्षिनिक्षिप्तोऽध्यासवाद आरभ्यते । अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च समर्थ्यन्ते । योऽयं दर्शनान्तरेऽपि—

'संपन्नोऽस्मि कृशोऽस्मि स्निह्यत्करणोऽस्मि मोदमानोऽस्मि ।
प्राणिमि शून्योऽस्मीति च षट्सु पदेष्वस्मिता भाति ॥'

इत्येवमादिप्रक्रियया वेद्यते । नहीयता द्वैतदर्शनं व्युदस्यते । यस्य ब्रह्मसाक्षात्कारोत्तरं परःसहस्रेषु कस्यचित् स्वरूपप्रतिष्ठस्य बाधप्रसङ्ग इति । इदानीं तु वैदान्तिकलेखानुसारेणापि तच्छ्रवणाधिकार्यस्ति न वा ? परकनककामिनीकवलीकारे तु चुलकीकृतामुद्रवेदान्तसप्तसमुद्रा जाग्रत्येव तत्र तत्र । किमेतेन तिष्यविलसितेन मूलदेवायितेन लोकव्यवहृतेन श्रुतिस्मृतिपुराणेतिहासखिलीकरणाच्छिखाचुम्बवो हिन्दवो हीति व्यवहरणं द्वैतदर्शनलोपि स्यात् । मैवं वादीः । प्राकृतं हि खलु तत् । तत एव चातुर्वर्ण्यं चातुराश्रम्यं त्रैमत्यमिति कालप्रथया सुप्रथं तावत् । दृश्यते हि—

'यथा पशुत्वसाम्येऽपि न गौर्गर्दभतामियात् ।
तथा मनुष्यतातौल्ये श्वपाको न द्विजो भवेत् ॥' इति ।

अथ पारमेश्वरं ज्ञानं न घटादिपरिच्छिन्नभावज्ञानवत्, न वाकाशाद्यपरिच्छिन्नभावज्ञानवत्, न वा शशशृङ्गाद्यभावभावज्ञानवत् संगच्छते। अहो ! तत्रापि घटोऽस्तीतिवत् प्रथमपुरुषयोगेन व्यवह्रियमाणं प्रयोजकम्, पारोक्ष्यप्रत्यनीकाभिलापात्। नापि वा तन्मध्यमपुरुषसंसर्गेण सांमुख्येऽपि हृदयंगमम्, भेदवैमुख्योत्थानात्। उत्तमपुरुषालम्बनेन तु प्रतीयमानं सांप्रतमपि प्रमातृत्वदोषावेशादसांप्रतमिवोत्प्रेक्षितुं सुशकं तत्। अथाप्ययोग्यसंसर्गनिरासाद् अहमितितन्त्रधर्मेण प्रत्येतुं प्रत्यभिज्ञातुं वा संगच्छतेतराम् इदमुपजीवकमेव—'यत् साक्षादपरोक्षाद् ब्रह्म' इति श्रवणम्। 'विज्ञातारमरे केन विजानीयात्' इति च। गीतायामपि—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।'

इत्यनेन ब्रह्मभूतस्यात्मनः प्रत्यक्षत्वमेव निरूपितम्। तथा व्यापिनोऽपि परमात्मनोऽभिव्यक्त्यभिप्रायेण हृद्देशावस्थानत्वं दर्शितम्। तत्र व्यञ्जकसमुदायारब्धं 'सूक्ष्ममातिवाहिकं लिङ्गं च पूर्णज्ञानोदयेन शीर्यत इति शरीरम्। इदं प्रत्यायनं प्रकाशसाम्येऽप्याधारवैलक्षण्यात्तरतमभावशालि प्रतिबिम्बावच्छेदवादमूलास्पदं जडचेतनव्यावर्तकम्। ततो हि घटादिर्जडः स्वात्मनि न चमत्करोति न वा चकास्ति, नापि स्वात्मानं जानाति नापि वा परामृशतीति। जडाद् विलक्षणो मनुष्यादिश्चेतनस्तु चेतत इति चमत्करोतेश्चकास्तेर्जानातेः परामृशतेर्यथायोगं योगीति क्षेत्रज्ञः। सोऽयं भगवद्गीतासंवादी सकलः प्रमेयो भङ्ग्यन्तरेण परमार्थसारादावपि—

'नानाविधवर्णानां रूपं धत्ते यथामलः स्फटिकः।
सुरमानुषपशुपादपरूपत्वं तद्वदीशोऽपि॥' इति।

''भूभाऽदर्शापि यथा चन्द्रग्रहणे प्रकाशते, तद्वत्।
सर्वगतोऽप्ययमात्मा विषयाश्रयणेन धीमुकुरे॥'' इति।

तथा—

"घटसंवृत आकाशो नीयमाने यथा घटे ।

घटो गच्छति नाकाशो, तद्वदात्मापि खोपमः ॥" इति च ।

इत्येवं जात्याकृतिव्यक्तिरूपस्यावच्छेदकस्य भिन्नभिन्नत्वेप्यवच्छेद्यस्याखण्डत्वाद् द्वैतनिबन्धनं विश्वचक्रमवस्थितमिति संक्षेपः ।

अथ विश्वशरीरस्य परमात्मनः परमेश्वरस्योपास्तौ साधारणधर्मसंस्कृतान्तःकरण एव देही विशेषधर्मेष्ववतरन्नधिकारी स्मर्यते । उपास्तिफलमभ्युदयनिःश्रेयसे । तत्राभ्युदयो विषयसंश्लेषेणात्मनः सच्चिदानन्दाभिव्यक्तिः । निःश्रेयसं विषयविश्लेषेणाप्यात्मनोऽभिन्नतया सच्चिदानन्दाभिव्यक्तिः । आत्मन एकत्वेनाखण्डत्वेऽपि कक्षाभेदात् स्वानुभूतावाणवकार्मिकमायिकमलसंसर्ग एव कारणम् । चरमनिमित्तमालक्ष्य लक्षीकृतमेतत्—

"माया विभेदबुद्धि,र्निजांशजातेषु निखिलजीवेषु ।

नित्यं तस्य निरङ्कुशविभवं वेलेव वारिधे रुन्धे ॥

स तया परिमितमूर्तिः, संकुचितसमस्तशक्तिरेष पुमान् ।

रविरिव संध्यारक्तः संहृतशक्तिः स्वभासनेऽप्यपटुः ॥"

बलप्राणधामापि जीवः पुरि शयनयोगादात्मानं संकुचितशक्तिं मन्यमानः सायंतनोऽरुण इव क्षितिजासक्तबिम्बः स्वमहिमानं साक्षात्कर्तुं मन्दायत इत्युपपत्त्यापि विवेक्तव्यम् । अन्तःकरणकषायक्षपणार्थं चातुर्वर्ण्ये साधारणधर्म इव त्रैमत्येऽपि—'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' ( तत्त्वार्थसू. ) इत्येवमादिस्वरूपो धर्मो जागर्त्येव । त्रिमतानि जैनबौद्धजावनानीत्याचार्याः । विश्वजनीनदृष्ट्या संकलितं चास्माभिर्दशकण्ठवधे रामचरिते—

"भगवन् ! अयं प्राक्तनो वासनाप्रसरो यथा मां प्रयोजयति तथैव कृपणस्तिष्ठन् किं विदधामीति राघवेणोक्तो वसिष्ठ आख्यत—सौम्य ! शुभाशुभेति द्विविधा खलु वासना । तत्र शुभया चेदिदानीं नीयसे

तदा शुभेनैव शाश्वतं पदं गन्तासि, चेदशुभया तदैषा प्रसह्य विजेतव्यैव—

प्राज्ञश्चेतनमात्रस्त्वं न शरीरं जडात्मकम् ।
अन्येन चेतसा तत्ते चेत्यत्वं क्वेव वर्तते ॥
अन्यस्त्वां चेतयति चेत्तं चेतयति कोऽपरः ।
इमं कश्चेतयेदित्थमनवस्था न शाम्यति ॥
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
योजनीया शुभे मार्गे प्रयत्नैः पौरुषाश्रितैः ॥
अव्युत्पन्नमना यावद्नभिज्ञाततत्पदः ।
गुरुशास्त्रप्रमाणैश्च निर्णीतं तावदाचर ॥
ततः पक्वकषायेण त्वयाभिज्ञातवस्तुना ।
शुभोऽप्ययं वासनौघस्त्याज्यो निर्वहिताधिना ॥

इति कर्मविचारः ।

यथास्थितब्रह्मतत्त्वसत्ता नियतिरुच्यते ।
सा विनेतुर्विनेतृत्वं विनेयस्य विनेयता ॥
तदेकाग्रमना राम ! पौरुषोल्लासलालितः ।
संसारमरुसंत्रस्तचित्ताध्वन्यसुधावधिम् ॥
जन्ममृत्युरुजाक्लेशप्रत्यादेशमहौषधिम् ।
जीवन्मुक्तिमहानन्दनिस्तरङ्गपयोनिधिम् ॥
तपो दानं तथा तीर्थमनुपाया भवच्छिदे ।
इत्येत्र करुणादृष्टया कलितां परमेष्ठिना ॥
सुखावबोधसंदृब्धकथासारविकस्वराम् ।
इमां विभावय ब्राह्मीं ज्ञानशैलीं मनोहराम् ॥ (चक्कलकम्)
नित्यं हि साधुसंपर्काद् विवेकोऽयं विकाशते ।
विवेकपादपस्येमौ भोगमोक्षौ फले स्मृतौ ॥

मोक्षद्वारे द्वारपालाश्चत्वारो दर्शिता इमे ।
शमो विचारः संतोषश्चतुर्थः साधुसंगमः ॥
एते सेव्याः प्रयत्नेन चत्वारोऽपि सुमेधसा ।
त्रयो द्वौ वा तथैकोऽपि सेवितो निर्वृतिं दिशेत् ॥

इति ज्ञानावतरणिका ।"

अथो अभित ऊर्ध्वमयनमभ्युदयो यथाभिलषितं भूरादिलोकसौख्याधिगमश्रीपरिष्वङ्गो वा सिद्धिसीमन्तिनीशब्दस्पर्शरूपरसगन्धाभोगभोगो वा पार्वणचन्द्रचन्द्रिकाझलञ्झलाव्यतिकरितपरिसरस्य सुरदीर्घिकावीचिपरिचयचतुरसमीरेरितकल्पफलेग्रहिविशेषकुसुमसौरभासारसरसस्य सहस्रलोचनवशीकरणोर्वशीविलासकन्दलिताप्सरोरोचिरुदितान्तरस्य नन्दननिकुञ्जनिकुरम्बस्यानन्दाधिगम इति सापेक्षः । निश्चितं श्रेयो नह्यभ्युदय इव भावविकृत्यारिलष्टत्वाद्दुःखभाक् । निःश्रेयसमिति निरपेक्षम् । एवं च नाभ्युदयवन्निःश्रेयसं विकलं किं तु सकलं पूर्णमिति यावत् ।

इह पदार्थतत्त्वज्ञानस्य योगक्षेमधिया तार्किकैर्निःश्रेयसार्थम्—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (न्या.द. १।२) इति क्रमः प्रादर्शि । अर्थात् तत्त्वज्ञानेन विरोधितया मिथ्याज्ञानस्यापायात्—प्रवर्तनालक्षणा दोषा (न्या. द. १।१८) रागद्वेषादयोऽपयन्ति; दोषापायात् प्रवृत्तिर्वाग्बुद्धिशरीरारम्भो (न्या. द. १।१७) ऽपैति; प्रवृत्त्यपायात् पुनरुत्पत्तिः प्रेत्यभावो (न्या. द. १।१९) जन्मापैति; जन्मापायात् (प्रेत्यभावाभावात्) बाधनालक्षणं दुःख (न्या. द. १।२१) मप्यपैति यत्प्रहाणं प्राणिमात्रप्रार्थितम् । एवं त्रिकद्वन्द्वे प्राचः प्रत्यनीकतया प्रतीचोऽभावे विदेहमुक्तौ जडप्राय आत्मावतिष्ठत इति ।

सांख्याश्च—'अथ त्रिविधदुःखस्यात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' (सां.द. १।१) इति दुःखस्याध्यात्मिकादिभेदात्त्रैविध्यमास्थाय तदत्यन्तनिवृत्तावात्मा पुरुषः स्वस्थ इति—तदुच्छित्तिः पुरुषार्थः (सां. द. ६।७०)

इत्युपसंहारात् । आध्यात्मिकं व्याध्युत्थं ज्वरातीसारादि शारीरम् । आध्युत्थं कामक्रोधादि मानसम् । आधिभौतिकं चौरव्याघ्राद्युत्थम् । आधिदैविकं वृष्टिवग्राहाद्युत्थम् । आत्मानः शरीराणि, भूतानि प्राणिनः, देवा इन्द्रादय इति ।

तर्क इव सांख्ये पदार्थतत्त्वज्ञानैककोणे निःश्रेयसप्रयोजकं ज्ञानं न पात्यते, न वा निःश्रेयसप्रक्रियायां गौरवादि निवेश्यते । किंतु—

'एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥'

इति ज्ञानेन प्रकृतिः पुरुषात् पृथक् ख्याप्यते, ततो हि प्रकृतिधर्मो विश्लिष्यते, व्युत्थानेऽपि वाह्यरागेण ज्योतीरस इव पुरि शयानः श्लिष्यमाण इव लक्ष्यमाणोऽपि वास्तवस्वरूपान्न हीयत इति देहसत्त्वेऽपि मुक्तिः ।

उपनिषन्निरन्तरेषु ब्रह्मसूत्रहृदयेष्वपीयं जीवन्मुक्तिर्जागर्त्येव । योऽयं परमेश्वरो विश्वंभरतया विश्वेषु नाख्यातिमश्नुते, सोऽपि स्वमहिम्ना सूत्रधारो नानाभूमिकामधितिष्ठन् प्रतिरङ्गमभिनयेनेव प्रतिक्षेत्रं चेतनव्यपदेशेन हृदयाभिव्यक्तिशया अन्तर्यामी साक्षी भोक्तेतिप्रायं हृदयग्राहि व्यवहारं प्रयच्छन्नस्तिभातिप्रीणातिनिर्व्यूढोऽपि विश्वचाकचक्यान्नामरूपाभ्यां संदिह्यते । तत्र विषयसंग्रन्थेन व्यामुह्यमानचेतनात् नहि चेतनात् व्यावृत्तये लौकिकभोक्तृत्वादिनिरासेन तादृशसाक्षित्वादि समाश्रीयते । तत्र गमकम्—'आत्मेन्द्रियमनोयुक्तं भोक्तेति' 'एकः पिप्पलं स्वाद्वत्त्यनश्नन्यो अभिचाकशीति'( चातु. शि. २६ श्लो. वे. द. ) इत्येवंप्रभृति ।

एवं च विशिष्य भौतिकपदार्थनिर्णिनीषया प्रवृत्ते वैशेषिके, कथाविशकलनचिख्यासया प्रस्तुते न्याये, तत्त्वबुभुत्सया संख्याते सांख्ये, समाधिविधित्सया विहिते योगे एतेषां च समासव्यासपरिणामनपर्यवसितशरीरे यत्र क्वापि दर्शनान्तरे ईश्वरो वा शब्दार्थसृष्टिर्वा मुक्तिर्वा तथा न

विविच्यते यथा वेदैकमूलायां 'मीमांसायामिति पुरस्ताद् दूरदर्शिनाम् । अतश्च वेदान्तसूत्रवर्जं न क्वापि दर्शनान्तरे ईश्वर-सृष्टि-मुक्त्यो विवेचनया चरमभूमिकां नीता इति गैतिकपण्डितमुनिनिर्वचनानुभूतमेव ।

यत्तु कतिपयात् समयात् लोकभूमिकाप्रतिपन्नं नामरूपविभक्तं पारमेश्वरमैश्वर्यमधिकृत्योपास्तिषु विसंवादप्रकाराः प्रादुर्भूतास्ते नूनं चातुर्वर्ण्ये चातुराश्रम्ये वा पृथ्वीराजसम्राजो यथापूर्वं न्यूनतरतमतया क्षीणक्षीणा असत्कल्पा वा ह्यासन्नित्यपि विवेचकानां प्रत्यक्षम् । तत एव हि पुराणेतिहासेषु चित्तावतरणार्थं विष्णुशिवादिकब्रह्मनामरूपभेदकसत्वेऽप्यभेदपर्यवसायिनो गुणकथावतारा निरूपिताः । उपासकेष्वेकव्यक्तिरपि यथावसरमनेकब्रह्मव्यक्तेरुपासनापरायणाभिहिता । न क्वापि ब्रह्मणि गुणभेदमाकलय्य कलहावकाशोऽभूदिति तत्त्वम् । किमियता, आचार्यशंकरस्वामिसत्तापर्यन्तमपि वैष्णवशैवप्रद्वेषो नोदपद्यत । आचार्यो हि—

'स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं
यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन् दृष्टे नश्यति तत्संसृतिचक्रं
तं संसारध्वान्तविनाशं हरिमीडे ॥'

इत्येवंप्रायैः सूक्तिरत्नैर्हरिहरादि कीर्तितवान् । तत उत्तरं तु विशिष्टाद्वैतादिप्रस्थानभेदैर्वैष्णवेष्वपि परस्परमुपमर्दो जजागार, किमितरत्र । नालभियत्याप्यहंमत्या, । केश्चित् स्वसिद्धान्तपक्षपातक्लेशेन श्रुतिस्मृतिवहनशीला संस्कृतवागपि—

''वस्तुतस्त्वगस्त्यव्याकरणानुशिष्टानामनवद्यशिष्टपरिग्रहविशेषप्रकृष्टानां द्राविडशब्दानां को नाम संस्कृतादपकर्षः ॥ पश्य—

स यासां व्याकर्ता चुलुकितसमुद्रो मुनिवरः
प्रबन्धारः प्रौढाः शठमथनमुख्याः, शमधनाः ।
प्रवक्तारः शुद्धाः प्रथितयशसः पूर्वगुरवो

गिरां पारे तासां जयति गरिमा द्राविडगिराम् ॥''
( विश्वगुणादर्श. २४५ )

इत्येवं प्रतिक्षिप्ता ।

अथात्र न केवलं विशिष्टाद्वैतादिविज्ञानवार्तैव भिद्यते । अपि तु प्रस्थानभेदैः कर्मकलापि । या चामीषां महाविष्णुमन्दिरपीठेषु संप्रदायभेदादौपासनलिङ्गवेशाचारचर्यया सुप्रसिद्धैव । अत्रेयं दिक्—

'न संध्यासु स्नानं तिसृषु न कमण्डल्वभिधृति-
र्न चातुर्मास्यादि व्रतमपि न भिक्षाटनविधिः ।
न लिप्सायास्त्यागो न परिपठनं चोपनिषदां
यतित्वं नैतेषां श्रुतिमतमतिक्रम्य चरताम् ॥'
( विश्वगुणा. ४०० श्लो. )

भयापि गतानुगतिकया न्यरूपि—'उपासना सीदति चित्रभक्तौ—' (चातु. शि. ३५ श्लो.) 'विधीयते यत्र न वेदपाठो—'(चातु.शि.१८२श्लो.) इत्येवमादि । तत्र कस्यचित् पद्यानुवादौ—

"चित्रभक्ति में उपासना जबतक दुख पाती
तबतक वारी कहां हाय संयम की आती ।
छैलों की हा बरी रासलीलायें छाती
साधुरीति का नास मचाती जीव कुढ़ाती ॥ ( ३५ श्लो. )
जहां न होता वेदपाठ नहि आगमचर्चा
होती नहीं पुराणशास्त्रसंमत प्रभु अर्चा ।
झालर-घंटा-शंख-नाद बस होयँ जहां पर
पूजा है परमार्थकोटि की कहां वहां पर ॥" (१८२ श्लो. )

कश्चित्तु शृङ्गग्राहिकयाप्युक्तम्—

'वैशिष्ट्येऽप्यहह ! तत्र तत्र विधुरा रामानुजीयप्रथा
गोपीकेलिवशंवदान्तरतया नो वल्लभा वल्लभाः ।

भ्रातस्तत्त्वमसीति वाक्यविधया साध्वी न माध्वी कथा

भेदाभेदरसान्तरव्रततया निम्बार्कवार्ता तथा ॥' इति ।

अथच जयन्त्याद्यपि विसंवादि दृश्यते। यथा किल कृष्णजयन्ती एकादशी च। कृष्णजयन्ती हि चान्द्रभाद्रपदवद्यष्टमीतिथिसंबन्धि भगवतो व्रतदिनम्। तदिदं कैश्चिद् रोहिणीनक्षत्रमनुरुध्य कैश्चित्पुनः सिंहसौरांशमनुरुध्यानुष्ठीयते। एवं भगवत एकादशीव्रतानि प्राक्कापालिकादिवेधसंनिवेशवैदग्ध्येन बहुविधान्यनुष्ठीयन्ते । तत्र सिद्धान्तभेदप्रयुक्तघट्यादिकालाविसंवादावतरेषु परैव विधाभिदा। तथाच माध्वसांप्रदायिककृष्णामृतवाक्यार्थे—"विष्णोश्च जन्मदिवसानि हरेर्दिनं च विष्णुव्रतानि विविधानि च विष्णुभं च। कार्याणि चार्यभटशास्त्रत एव सर्वैः—" इत्येवमादि। एतेन ब्राह्मसौरार्यपक्षभेदा व्याकृता द्रष्टव्याः । एषामासमञ्जस्यानिरासार्थं दृष्टादृष्टपक्षं कक्षीकुर्वाणेन सकलसिद्धान्तसंवादसंपादनेन श्रीबापुदेवपादैर्यावद्देशोपयोगि तिथिपत्रं श्रीकाशीक्षेत्रे प्रवर्तितमिति प्राचीनैर्नवीनैराकलनीयम् ।

एवं यथादर्शनमास्तिकपुंगवैः प्रतिभानवद्भिः सांक्रामिकं धर्मवैशसं दूरीकृत्य कृतकृत्यैर्भवितव्यम्। भवन्ति चात्र—

विशिष्टाद्वैतादिप्रथितमतसंभिन्नमनसां

बहुप्रस्थानानां हरिचरणसेवासुकृतिनाम् ।

वृथान्योन्याक्षेपा विहितबुधखेदाः प्रतिपदं

किमिष्यन्ते भ्रातः! सखिषु नहि शस्ता विषमता ॥ १ ॥

न शैवैः शाक्तैर्वा नहि पुनरहो वैदिकजनैः

समं द्वेषावेशो व्यथयति तथैषां कृतधियाम् ।

यथान्योन्यस्पर्धाजनितबहिरन्तर्बहुविधैः

क्रियाज्ञानाकारैरहह! हरिरूपेऽपि कलहः ॥ २ ॥

त्रयी मान्या तस्या विमलगतिरन्तोऽपि च तथा

तथापि प्राचीनैरुपनिषदुदूढैर्व्यवसितैः ।

बहुश्रेष्ठापूर्तविशकलनकार्ये नवकथा
कथंकारं ह्या हरिहृदयमेवात्र शरणम् ॥ ३ ॥
हरेर्ज्ञानं वेदो हरिरिव न तत् स्यादपरथा
यथादिष्टाकारो विदधदपि वैचित्र्यघटनाम्
विदन् वेदं तस्मात्तदुदितविशेषामृतभरै-
रलं तृप्यन्नास्तां फलतु शमशाखा शिखरिणी ॥ ४ ॥
अहं हं संजज्ञे तदनु खलु सः सापि घटना
सृता सोऽहंभावं भवभरणभागोमिति पदम् ।
अखण्डं खण्डं वा किमपि फलनातीतविभवं
न चास्ते तत्तत्त्वं यदिह परतत्त्वं न गमयेत् ॥ ५ ॥

इति कर्तव्यताच्छिप्ताचीश्वरेश्वरपरिचर्या ॥

# ग्रन्थ-ग्रन्थप्रयोजने ।

देश-देशोद्धारप्रसक्तौ मनुष्यतया, वेद-वेदार्थानुरक्तौ विवेकितया, ईश्वरे-श्वरपरिचयशक्तौ कर्तव्यतया वा संहतौ संभूय वाऽऽयोजनभृद् ग्रन्थो ग्रन्थप्रयोजनं च ।

व्यवहारे संसारश्लेप इव पर्यन्ते संसारविश्लेपोऽपि बन्धनविघटकतया मोक्षपदयोगी केनचिद् द्विपदां मूर्धन्येनाभिलष्यते धन्येनेति नातिविस्मयभूः । तत्र संसारश्लेपो य एकान्तत इदानीं चतुर्थाश्रमिणापि परिहर्तुमशक्य इव संभाव्यते स तावत् चातुर्वर्ण्ये वा त्रैमत्ये वा यत्र क्वापि स्वरूपप्रतिष्ठायै यं कमपि विशेषधर्ममगत्याक्षिपति । इतरथा देशकालपात्रप्रथाविपर्यासे सर्वत्र लोकयात्रा विपर्यस्ता भवेत् । तदिदमहंताममताविपरीतचेष्टितमाश्रमलिङ्गं कथमिव सामान्यधर्ममात्रविश्रान्तं संभवेत् । अतएवहि विशेषधर्मो यया कयापि सरण्या प्रथमानो व्यावर्तकतया समाजेन समजेन वा न सर्वथा त्यक्तुं सुशक इति प्रेक्षावन्मात्रेणातिमात्रं परीक्षणीयम् । येन केनापि निदानेन चातुर्वर्ण्यनिःसृतं हि त्रैमत्यम्; वैपरीत्ये चतुरस्रप्रमाणाभावात् । इत्थं च चातुर्वर्ण्यधर्मो मनुष्यमात्रस्य पूर्वो धर्म इत्यनिच्छतामपि शिरस्यापतति ।

एवं च वेदो हि चातुर्वर्ण्यस्य चातुराश्रम्यस्य वा यः कोपि धर्मस्तस्यावेदक इति । स हि तावद् भूमण्डले यावन्ति धर्मपुस्तकानि तेभ्योऽतितरां प्रत्नतरतम इति तत्तद्धर्माचार्यपुस्तकसंवन्निर्देशतोपि सुव्यक्तम् । नहि किमपि प्रवृत्तं प्रवर्तमानं वा संवद् वेदाविर्भावकालमतिक्रामति । इत्थमप्यभिधीयमानं विदुषां पुरस्तात्—'नहि वामन उच्छ्रायेण सौरिबिम्बमत्येति' इतिवदुपहास्यास्पदमेव । यत एतत् पुरः सरीसरीति—

शाब्दसर्गन्यायेनाकाशादिमहाभूतानामपि प्रागातिवाहिकशरीरस्य ब्रह्मणो

हृदयाकाशे वेदाविर्भावावगमे किंकालो वेद इति प्रश्न एवानुपपन्नो तस्य नित्यतां गमयते। ब्रह्मा हि स्वमानेन शतायुरित्यागमिके यौक्तिके च सर्वतन्त्रसिद्धान्ते जाग्रति सौरानुसारेण संप्रति ब्रह्मणो द्वितीयं परार्धमुपपद्यते। तत्र दिनगतम्। तथाच ब्रह्मसिद्धान्तानुसारेण भास्कराचार्यः—

'याताः षण्मनवो युगानि भमितान्यन्यद्युगाङ्घ्रित्रयं
नन्दाद्रीन्दुगुणास्तथा शकनृपस्यान्ते कलेर्वत्सराः।
गोद्रीन्द्वद्रिकृताङ्कदस्रनगगोचन्द्राः (१९७२९४७१७९)शकाब्दान्विताः
सर्वे संकलिताः पितामहदिने स्युर्वर्तमाने गताः॥' (सि.शि.ग.)

इत्याह स्म। सेयं ब्राह्मी कालकलना स्मृत्या श्रुत्यापि समनुगृहीतैव। मानवे हि—

'चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम्।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः॥
इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु।
एकापायेन वर्तन्ते सहस्राणि शतानि च॥
यदेतत्परिसंख्यातमादावेव चतुर्युगम्।
एतद् द्वादशसाहस्रं देवानां युगमुच्यते॥
दैविकानां युगानां तु सहस्रं परिसंख्यया।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च॥'

इत्यनेन यद् ब्राह्मदिनमुक्तं तत् कल्पपदेनापि परिभाषितम्। एतदेव सैद्धान्तिकानां मनुष्यमानेन परिणामितं कल्पसूर्यभगणमानं जायत इति स्पष्टम्। यथा—

$१२००० \times १००० \times ३६० = ४३२००००००० =$ कल्पसूर्यभगणाः। $१२००० \times ३६० = ४३२०००० =$ युगसूर्यभगणाः।

अत्र परिणामने स्पष्टं मन्त्रलिङ्गम्—

'द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उतच्चिकेत।

तस्मिन्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥'

इति सौरवर्षमानं बोधयन्ती ऋक् ।

'एकं वा एतद्देवानामहर्यत्संवत्सरः ।'

इति तैत्तिरीयं ब्राह्मणवाक्यम् ।

एवं च यस्तार्किकनयेऽनित्योऽभ्युपगम्यते तथाप्याकाशादेः प्राक् शब्दपूर्विका सृष्टिरिति न्यायेन वेदसत्तावगतौ ग्रहर्क्षादिव्यञ्जकाभावे काल इव शतायुर्ब्रह्माभावे वेदो विद्यमानोऽपि व्यञ्जकसामग्रीराहित्येन स नष्ट-स्तिरोहितो वा व्यञ्जकसामग्रीसाहित्येन स पुनरुत्पन्नः प्रादुर्भूतो वेति यथाप्रतिभानं निर्वभाविति स्थितम् । शतायुर्ब्रह्मा, तत्कारणं ब्रह्मापि यत्संबन्धेन वेदोऽपि ब्रह्मेति श्रूयते, तदपलापे जगदेव कथमुपलभ्येत । यो हि शतायुर्ब्रह्मा स तावत् पुराणेतिहासेष्वपि प्रथमशरीरीत्यादिनाभिलप्यते । तन्निवासप्रदेशोऽपि जिनाब्यकुच्छ्रनलवाधिकात्तोपलक्षितान्तरिक्षभाग इति भास्कर-कमलाकरादयो गणितगोलविदः ( शिरोम.–तत्त्वविवे. ) ।

अथ वेदोक्त ईश्वरोक्तो वा भूतात्मानं धरतीति क्रियाजनितोऽतिशय-विशेषो धर्म इति यो धर्मं व्याख्यास्याम इति वैशेषिकसूत्रे चराचर-वृत्तितया तन्त्रापरनाम्ना श्लेषेण ग्राह्यते स तावद् भौतिकनिकाये यथा-योगं क्षेत्रगर्भशरीरसम्बन्धेन संक्रामति । अत्र जरायुजादिभेदेन संसरण-शीलस्य लैङ्गस्य क्षेत्रादियोगावस्थासु यथौचित्यमथर्ववेदोपवेदस्यायुर्वेदस्य सर्ववेददत्तहस्तावलम्बस्य स्मार्तस्य श्रौतस्य च क्रियाकलापस्य सकलस्य विकलस्य यत्किंचिद्रूपं प्रापितस्य वा देशकुलप्रथाचारचरणस्य कर्मातिश-यस्य संक्रान्तिरभिमन्यते मार्मिकैः ।

इत्थं चेह चतुर्णां भूतानां सत्त्वसंक्रम इव द्विजादिविभक्ते मानुष्यके पिण्डे चातुर्भौतिकजातिगुणक्रियाख्योऽतिशयो विज्ञानदृशा प्रत्याख्यातुम-शक्य इति यथावसरं दर्शयितुमेव–'अश्वादिवत्–' ( ५ श्लो. ) इति चा-तुर्वर्ण्यशिक्षा मूलं तट्टीका वेददृष्टिरिति द्वयी चम्पूरिव पद्य-गद्यसंदर्भा

कृतिः कृतिनां छात्राणां हृदयादर्शे लेखव्यहारवैदग्ध्यसंपादनेन सह वेद-दर्शनतत्त्वमपि प्रतिबिम्बयितुं संकलिता । यद्यप्येषा शिक्षादृष्टिः कृतकरणाय वा कलिनिराकरणाय वा प्राणनप्रयोगमन्तरेण वाङ्मयशरीरेणैव चिरंतनशमसुधानिरन्तरं युगान्तरं संचारयितुं न प्रभवेदथापि ज्ञानक्रियाख्यं दिव्यं भैषज्यमिति बुद्धया कथंचिदपि हृदयान्तःप्रविष्टा प्रवेशिता वा दृष्टाऽऽघ्राता वा ब्राह्मण इव मूलप्रकृतिसिद्धस्य वर्णस्य, अहंकारस्येव विकृतस्याप्यविकृतस्य सर्वदाश्रमस्य, आर्षज्ञानस्येव मनुष्यतानिदानस्य सर्वोपजीव्यस्य श्रुतस्य, मलयमरुत इव सुखाश्रयस्य शीलस्य, सस्यस्येव मौलिकपरिणाममधुरस्य सदाचारस्यापि सुमेरोरिव सर्वोत्तरावस्थानस्य कल्पभूरुहोऽनुगतमनोरथवसूनसूँस्त्ववरयं रक्षेदेव । स्मरन्ति च शास्त्रकृतः—

'तथाहि जडभूतानां प्रतिष्ठा जीवदाश्रया ।
ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम् ॥' इति ।

(ईश्वरप्रत्यभि.)

अपि च पञ्चभूतैरिव, पञ्चकरणैरिव पञ्चाग्निभिरिव, पञ्चप्राणैरिव, पञ्चयज्ञैरिव, पञ्चभिरेभिर्वर्णप्रमुखैर्विश्वोपकारोन्मुखैर्विश्वंभरशक्तिवास्तुभिर्वस्तुभिः समुदितैः, यथायथमुदितैश्च वा अवयवसंस्थानाभिव्यक्तेन पुंस्त्रीनपुंसकरूपेण द्विजन्मादिसंज्ञाभिव्यङ्ग्येन ब्राह्मणादिसंकीर्णान्तेन वर्णेन, विज्ञानकर्मक्षेत्रालंकर्मीणेन ब्रह्मचर्याद्यवस्थालम्बनेनाश्रमेण, प्रकृतिविकृतिवित्तिविश्रमेण भगवद्वेदादि-कुरानशरीफपर्यन्तेन वाङ्मयविलसितेन श्रुतेन, मुन्यादिराक्षसावसानस्वभावविश्रान्तेन शीलेन, पयोभक्ष्यादिश्वभक्षावधिकेन आबालब्रह्मचर्यादिभगिनीभुक्तिपर्यवसानेन वाचारेण विहितेनाप्यवहितेन परागमहितेन वनेनेवावनेन यथा हानोपादाने इष्येते तथेह यथावसरमवर्णयितां समासव्यासाभ्याम् ।

अथ चेदानीं युरोपीय( पियन् )विज्ञानवितानोद्भासितहृदयाकाशाः

कतिपये पुनर्वेदादिधर्मपुस्तकेभ्योऽपि रेलतारप्रभृति भौतिकविज्ञानवि-
जृम्भितं ताण्डवितबाहुवल्लरीकं प्रकाशयन्त इति प्रमोदामहे । परं
यावत् तस्य निर्माणशैल्या समीहितसंपद्वल्ल्या स्वदेशान् संपा-
दितसौख्यावेशान् सुबन्धून् अकृत्रिमस्नेहबन्धून् नो रचयिष्यन्ति ताव-
दाशु नश्वरस्वभावेन वाङ्मयविलसितमात्रेण कथमिव कृतकर्माणः संभा-
व्येरन् । किमपि वस्तु मौलिकमिति प्रतिज्ञोपसंहाराभ्याम्, सांक्रामिकमिति
प्रसंक्तानुप्रसक्त्या, औत्प्रेक्षिकमिति प्रतिभानेन निर्धार्यते । तत्र द्वितीय-
तृतीयकोटी मूलव्यवहिते । आद्या तु मूलानतिक्रमतया निष्प्रत्यूहैव ।
इत्थं समस्यादिसंगतिसंपादनविधया वेदपाठत आविष्क्रियमाणं भौतिक-
वस्तुविज्ञानं युरोपीयविज्ञाननिदर्शनेन निश्चायितमपि यावत्तदनालम्बमानं
तत्सब्रह्मचारि वा यत्किमपि प्रत्यक्षप्रयोगं न नीयेत तावत्पारक्यमिति
शंकामुद्भावयत् कथमात्मानमुन्नमयेत् । नहि युरोपीया आचार्यदेश्या
अनूचानतया रेलतारादि प्रतिपेदिर इत्यभिज्ञायते । अतो वेदशब्दाद्वा
वेदाद्वा यत्किमपि विज्ञानं किमिति न सिद्ध्येत् सर्वमात्मनः प्रतिष्ठार्थं
पुस्तिकाबन्धं प्रयोगबन्धं चानीतमेव जगदुपकुर्वदेव वैज्ञानिकरङ्गभूमिषु
प्रादुष्कर्तारं संगमयेत् विशेषयेद्वा तानिवास्मान् । इतरथा तेषां गौरवं
मौलौ माल्यमिव पतितं केन पुनः शुद्धभावेनापन्होतुं पार्येत ? । वस्तुतो
हि वेदगवीनिपीडनेनापि चिराय मूर्च्छितामापन्नं भारतीयमर्थशास्त्रं प्राणा-
नासादयदपि द्वीपान्तरीयचिकित्सानुग्रहमन्तरेण कथमिवालंकर्मीणं भवे-
दिति माध्यस्थ्यादासादनीयम् । न चेद् अकाण्डपदीविच्छेदा गौरिवासौ
वैज्ञानिकी गौरपि मतिजम्बालमाविश्य सीदत्येव न तु कथमपि प्रसीद-
तीति निर्व्यूढम् ।

अपिच संप्रति यन्मौलिकमार्षपदार्थविज्ञानं तदपि सांनिपातिकालं-
कारिकभावोद्धुरेण भौतिकविज्ञानेनोपसर्जनीक्रियमाणं सदसदिव प्रतीयमानं
भिक्षुसूत्रमुखप्रवृत्तिपरिवर्तनया मिहिकापिहितगिरिणदीस्रोत इवोपयोग-

पराकृतमजायत। तदेतन्मतव्याघातोपदर्शनं तत्र तत्र पुराणोपसंहृतिषु दर्शितं प्रकाशितपुरुषार्थभूमिकांशेन तुलसीदासेन—

"हरितभूमितृणसंकुल, समुझि परे नहि पन्थ।
जिमि पाखण्डविवाद तें, लुप्त भये सद् ग्रन्थ॥"

इति देशिकभाषयाऽभाषि। नहि तावद् वेदस्वरस्वारस्याद् एको वेदः पद्यगद्यस्वभावाभ्यां द्वैधमानीतः सामाथर्वभ्यामपि द्विधाभावमृच्छेत्, प्रतिपादकप्रतिपाद्यवस्तुनोरनवीभवनाद्यवस्थोपस्थानात्, ऋचां सामतया संकलतात्, ऋग्यजुःसामथर्वणां संग्रहणाच्च। न वा त्रिधा भावमपि, अग्निभूरादिवायुभुवरादिसूर्यस्वरादिलोकालुलोचिषया प्रवृत्तिविवेचनात्, अङ्गग्रन्थानां यथाश्रुतशब्दार्थशरीरेषु पर्यवसानात्, ब्राह्मणग्रन्थेभ्यो विनिगमनाविरहात्, ब्रह्मसंज्ञितस्य परमेश्वरस्य ब्रह्माण्डानतिरेकाच्च। नहीत्थमपि प्रकृत्या भौतिकविज्ञानमेव सहृदयहृदयावर्जकमिति पर्यनुयोक्तुं न्याय्यम्, पदार्थविज्ञानमात्रस्योल्लेखित्वेन तदतिरिच्यमानस्यानुल्लेखित्वेनैन्द्रियकाभावेऽपि प्रत्यनीकतया आगमानुमानाभ्यां प्रत्यायितत्वादिप्रत्ययेन च बहुत्र बहुधा बहुभिर्ऋषिभिर्मुनिभिः पूर्वपूर्वं समाधिकरणादित्यादि सूक्ष्मेक्षिकया निरीक्षणीयम्। तथाच स्मर्यतेऽस्माभिः—

अनुलेखाच्च सत्त्वैव सा जडात्मास्ति चेत्तदा।
आक्षिपेच्चेतनं न्यायात्तच्चास्माकं महेश्वरः॥

अलमियता।

अथ च श्रुतिशेखरावरोहाप्यापादनम्रा परागमहिताप्यपरागमहिता सुमनोभिरामाप्यसुमनोभिरामा विश्वंभरामोदवहा वैजयन्तीव सहवेददृष्टिरियं चातुर्वर्ण्यशिक्षा समानाङ्कास्माभिः परगुणसारेण गुम्फिता लेखनेन संवादेन शोधनेन व्यापारेण दाधीचपण्डितेन कल्याणवल्लभशर्मणा समस्कारीत्येनं विद्याविनयावदातमनुरूपेण शास्त्रिपदेन संयोजयन्तोऽस्याः पुस्तिकायाः समृद्ध्यै महेश्वरान् निर्व्याजकारुण्यविकस्वरान् शरणागत-

शरण्यान्, अनन्ताभोगसंश्लिष्टानपि वृन्दावननिर्गतान्, गोवर्धनसंश्रयानपि जयनगरसंगतान्, श्रीगोविन्दचरणान् साञ्जलिवन्धं प्रार्थयामहे ॥

भवन्ति चात्र—

स्वायंभुवो मनू राजा मानवा हि प्रजा इमाः ।
तेन स्मृता स्मृतिर्मान्या सा विचाल्या न पण्डितैः ॥ १ ॥
आर्थिकी कायिकी पद्या शासना दण्डकारिणाम् ।
ईश्वरोपासने चेति नीतिभूरास्पदं श्रियाम् ॥ २ ॥
राजाप्रजाथवा नीतिं योऽवजानाति शक्तिभृत् ।
प्राज्ञंमन्यतया सोऽयं यथान्यायं विपद्यते ॥ ३ ॥
कार्याकार्यपरामर्शसौरभश्रीविकस्वरौ ।
उपदिष्टाविमौ श्लोकौ मनुना भृगुणापि वा ॥ ४ ॥
'उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥ ५ ॥
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्धयति ॥ ६ ॥'
पुण्यं सुखं परस्येह पापं दुःखं परस्य वै ।
इति धर्मसुहृद्धृदयं लक्षणं पुण्यपापयोः ॥ ७ ॥
बहवो देवतागारास्तेषां रक्षैव निर्मितिः ।
बहुलीकरणं त्वत्र पूजाद्रव्यस्य सत्कृतिः ॥ ८ ॥
वेदानां वेदपाठानां वेदव्रतजुषामपि ।
आवासैर्देवतावासाः संगच्छन्तामनारतम् ॥ ९ ॥
देशोद्धारप्रसङ्गेन स्वोदरश्रीप्रसञ्जने ।
कथमाशान्तरं गच्छेत् स्खलद्धृदयक्रमं यशः ॥ १० ॥
प्रत्यब्दं भारतेऽमुष्मिन् क्लृप्ते दाने महत्यपि ।
तद् भवेत् कस्यचिद् भाग्यादुपयुक्तपदाश्रितम् ॥ ११ ॥

परलोकपदावाप्त्यै प्रागासीत् तुर्य आश्रमः ।
परलोकपदावाप्त्यै सोऽधुना तु धनाय हा ! ॥ १२ ॥
श्रुतिरश्रुतितां प्राप्ता स्मृतिरस्मृतितां ततः ।
उत्कर्षसागरे मग्ना सांप्रतं पौर्विकी कथा ॥ १३ ॥
कर्माधुनिकविज्ञानाज्ज्ञानं ब्रह्मविधूननात् ।
याथार्थ्यं स्वार्थसंधानाद् व्यस्तं किं धर्मचर्चया ॥ १४ ॥
दूष्याहारविहाराभ्यामगदंकारकारुभिः ।
विरुद्धव्यवहारेभ्योऽभियोगध्वजयोगिभिः ॥ १५ ॥
आतुराणां जनौघानां धर्मप्राणविभूतयः ।
आकृष्यन्ते विलोप्यन्ते विचाल्यन्तेऽद्य का गतिः ॥ १६ ॥
वैमत्यं लीयतां सम्यक् सांमत्यं च महीयताम् ।
चीयतां कृतिनां कर्म तत्फलं च न हीयताम् ॥ १७ ॥
एधतां जन्मजातीनां चातुर्वर्ण्यमनाकुलम् ।
तथा च कर्मजातीनां त्रैमत्यघटनाकुलम् ॥ १८ ॥
वर्धन्तां सुचरित्राणि तदुल्लासाय कर्मठाः ।
तद्वीरुद्दोर्जितः कायो मलपूरोऽपि पूज्यते ॥ १९ ॥
भासतां भारतं भूयः काशतां हि सतां मतिः ।
वेतालचेष्टितप्रायं प्रजाकर्म विलुप्यताम् ॥ २० ॥
प्रेक्षावान् दैवतं साक्षान्नराणां च नरेश्वरः ।
इति गीतासुविज्ञानाद् राजभक्तिर्विशिष्यताम् ॥ २१ ॥
दीव्यताद् भारती देवी तत्स्रोतांसि चकासतु ।
सन्तु प्राचीनसंदर्भा वेदगर्भा यथाशयम् ॥ २२ ॥
एते जैनास्तथा बौद्धा जवनाश्च यथायथम् ।
चातुर्वर्ण्यप्रसूतत्वाद् भ्रातरो विलसन्तु नः ॥ २३ ॥
अनादरं बहिष्कृत्य पुरस्कृत्यादराश्रियम् ।

यथाचारं वर्तमाना मानुषाः श्रेयसां पदम् ॥ २४ ॥
वक्तव्यं सकलं ब्रह्मण्योङ्कारेण समाप्यते ।
न चेत्परार्धकोट्यापि ज्ञेयानामिति मीयताम् ॥ २५ ॥
योगात् सरस्वती लक्ष्मीर्लक्ष्मीरपि सरस्वती ।
भवन्ती भव्यमादध्याद् वस्तुविज्ञानसंपदे ॥ २६ ॥
जीयाद् बृटिशसाम्राज्यलक्ष्मीर्ललितदर्शना ।
उद्यत्पदार्थविज्ञानवैदग्ध्यैकनिदर्शना ॥ २७ ॥
यस्याः प्रभावमाहात्म्याद् वयमुद्योगयन्त्रिताः ।
चिरविस्मृतमात्मानमालोचयितुमुत्थिताः ॥ २८ ॥
तच्चाध्यात्मिकविज्ञानं यतो योगबलं भवेत् ।
तच्च भौतिकविज्ञानं यतो देशः श्रियं श्रयेत् ॥ २९ ॥
आसन् नः पूर्वजा इन्द्रा इति वृत्तस्य जल्पनात् ।
नात्मा नापि स्वदेशो वा कथंचिदुदयं व्रजेत् ॥ ३० ॥
नामरूपजगज्जालकल्पनाजल्पनाग्रहः ।
पायादेकतया ग्राह्यः सच्चिदानन्दविग्रहः ॥ ३१ ॥

इत्यन्तर्वाणिषु निवेदयन् निर्वृत आस्ते—

**श्रीदुर्गाप्रसाद द्विवेदः ।**

# ओमथ वर्णाश्रमसूत्राणि ।

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ (बृह. उप.)

(१) वेदं न पर्यनुयोजयेद्, अनादित्वाद् अनन्तत्वाच्च ।
(२) पर्यनुयोगेऽप्यनवस्था, शाश्वतप्रसिद्धिव्याघातश्च ।
(३) कूपतडागादिजलवद् ब्राह्मणादिजातिर्भिन्नस्वभावा ।
(४) अश्वादिवज्जन्मनैव जातिः, कर्मणा तु विशिष्यते ।
(५) *अवयवसाम्येऽपि न कर्मणा कौपं वारि ताडेयं भवति ।*
(६) एतेन वर्णा आश्रमाश्च व्याख्याताः ।
(७) गुणभेदात् कर्म भिद्यते ।
(८) न घटत्वादिवत् स्थूलशरीरमात्रयोगिनी सुकृतदुष्कृते धर्मपदाभिलप्ये ।
(९) अतएव शास्त्रगम्यो धर्म इति श्रूयते स्मर्यते च ।
(१०) एतेन तीर्थश्राद्धतर्पणानि व्याख्यातानि ।
(११) नाजिज्ञासुं ज्ञापयेत् ।
(१२) ज्ञापने चारणमुखोक्तिवत् शास्त्रविनियोगः ।
(१३) एतेनाधुनिकोपदेशका व्याकृताः ।
(१४) न सहसा सभामायोजयेत् ।
(१५) तीर्थादिमेलकेषु सभाकार्याणि विदधीत ।
(१६) अतिवादविवादापव्ययाश्च समितिरोगाः ।
(१७) सभापतिर्भविष्यन्नात्मानमभ्यालोचयेत् ।
(१८) न स्वागतादिप्रक्रियैवाध्यायनं भवेत् ।
(१९) वेदवत् मन्वादिशास्त्रमपि न परिवर्तयेत् ।

(२०) ऋषिमुन्यादिव्यपदेशादात्मानं तथा न मन्येत ।

## इत्याचाराख्यं प्रथममाह्निकम् ।

(२१) एक एव परमेश्वरः, सर्वाधिकत्वात् सर्वकर्मफलप्रदत्वाच्च ।

(२२) अस्य कार्यवशाद् ब्रह्मविष्णुशिवादिसंज्ञाः ।

(२३) अस्यैव वाचको विग्रहश्चोँ-इति ।

(२४) ओँकाराद् वेदा विश्वानि च ।

(२५) तज्ज्ञानार्थं गुरुमेव समाजयेत् ।

(२६) एतेन मातापित्रादयो व्याख्याताः ।

(२७) जानाति-करोतिभ्यां ज्ञानकर्मणी मिथः संश्लिष्टे ।

(२८) भजतेर्भक्तिः पूज्यानुरागः ।

(२९) कर्मप्रधानं जगत् ।

(३०) लौकिकं वैदिकं वा कर्म ज्ञानाननुगृहीतं वेतालचेष्टितमिति ।

(३१) तपःस्वाध्यायेश्वरप्रणिधानानि कर्मयोग इत्याद्यपतञ्जलिः ।

(३२) भक्तिसंस्कृते ज्ञानकर्मणी इत्याचार्याः ।

(३३) एतेन रामलीला-रासलीला-मूर्तिनिष्कासनसंनाह-वेदपुस्तकयात्रा-पत्तनपरिक्रमादयो धर्माभासतया व्याकृताः ।

(३४) यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति काश्यप-कणादः ।

(३५) जगन्ति धरतीति योगात्, कायिको वाचिको मानसिक इत्याचार्याः ।

(३६) ऊर्ध्वपुण्ड्र-त्रिपुण्ड्रादीनि धर्मलिङ्गानि गरुड-वृषध्वजवत् ।

(३७) वर्गीकरणाय धर्मं न प्रकल्पयेत्, प्रायेण पृथ्वीराजोत्तरप्रादुष्कृत-धर्मश्रेणिवत् ।

(३८) जनतावसतयः पुण्यक्षेत्राणि दूषयन्ति काशी-प्रयाग-पुष्कर-प्रभृतीनीव ।

(३९) काश्यप-रघु-रामादिवद् अपत्यप्रत्ययलक्षणाभिधानसादृश्याद् आर्षग्रन्थकालज्ञानं दुःशकम् ।

(४०) श्रुतिदर्शनपरैर्लक्षणैश्च पुराणानि परीक्षेत ।

इत्युपासनाख्यं द्वितीयमाह्निकम् ।

(४१) प्रजा राजानं, राजा प्रजा वा न वञ्चयेत्, सदाचारात् ।

(४२) एतेन सर्वे प्रयोज्यप्रयोजकभावा व्याख्याताः ।

(४३) देवानां देवराज इव मनुष्याणां राजा महांश्चाभ्युदयशरणम् ।

(४४) निष्पीडनजन्मानः प्रजाग्नयो राजकुलं क्लिश्नन्ति ।

(४५) यथाशक्ति मानवशासनपद्धतिं न लङ्घयेत्, प्राकृतत्वाद् बह्वनुभूतत्वाच्च ।

(४६) व्यवहारपदान्युज्ज्वलानि प्रवर्तयेत् ।

(४७) अभियोगध्वजान् साशङ्कं नियोजयेत् ।

(४८) खाद्यपेयौषधीनां क्रयाक्रयमर्यादां स्थापयेत् ।

(४९) व्यावहारिकशिक्षामायोजयेत् ।

(५०) चोरजारजिह्मादीन् यथासंभवं मानवदण्डेन परयेत् ।

(५१) राजभक्त्या संयुज्येत ।

(५२) दुष्कर्मणा वियुज्येत ।

(५३) समृद्धिसहधर्मिण्या संगच्छेत ।

(५४) साधु व्यवहरेत् ।

(५५) व्यवसायेषु सज्जेत् ।

(५६) सुप्रकृत्या जयेत् ।

(५७) सांस्कारिकान् व्ययानाधिकयेत् ।

(५८) सान्निपातिकान् संकोचयेत् ।

(५९) अनावश्यकं न पल्लवयेत् ।

(६०) कृषिगोरक्षवाणिज्यानि वर्धयेत् ।

(६१) समयोचितानि शिल्पान्यपि ।

(६२) समीक्ष्य कार्यालयानामुञ्चेत् ।

(६३) अप्रमत्तो वार्धुषिकिः स्यात् ।

(६४) न शीघ्रमभियोगानुत्थापयेत् ।

(६५) उद्योगेन प्रारब्धं परीक्षेत, शिशुशिक्षणवत् ।

(६६) नापार्थकानि कर्माणि प्रादुष्कुर्यात् ।

(६७) एतेन क्रीडाकौतुकादिव्यापारा व्याकृताः ।

(६८) मुद्गरभ्रामण-यष्टिचालनादिव्यायामानभ्यसेत् ।

(६९) प्रतिजनावासं पशुप्रचारयोग्यां स्थलीमारक्षेत् ।

(७०) यथाकालं कूपतडागादीन् परिष्कुर्वीत ।

(७१) खानिक-जाङ्गलिकान्तरिक्षिकप्रमेयानवबुध्येत ।

(७२) नाविक-नैहारिकवैदेशिकीं संचारचातुरीं शिक्षेत ।

(७३) तर्कतरङ्गितं ज्योतिर्गणितं पठेत् ।

(७४) सहायुर्वेदयोगान् योगानधीयीत ।

(७५) मान्त्रिकागामिकलिङ्गैः पदार्थविज्ञानानि वस्तुशक्तीश्च विभावयेत् ।

(७६) हृदयदौर्बल्याद् योगविभूतीर्न संदिह्यात् ।

(७७) एतेन यौगिकवैभवभूयांसि पुराणेतिहासमहांसि यथादर्शनं द्रश्यानि ।

(७८) जाग्रति परमेश्वरे भूलोकः पूर्णश्चन्द्रादिलोकोऽपूर्ण इति कः प्रेक्षावान् प्रतीयात् ।

(७९) न हि वस्तुशक्तयः प्रत्युच्येरन् ।

(८०) दैशिकवेशभाषाचारान् न परित्यजेत् ।

(८१) एतेन स्वदेशवस्तुविनियोगो व्याख्यातः ।

(८२) अमित्रं मित्रीकुरुते, नाधिकारिणो मित्रयेत् ।

(८३) अधिकार्ये कुलवयःशीलान्यपि परीक्ष्यन्ते ।

(८४) युक्ताहारविहाराभ्यां शरीरं न शोषयेत ।

(८५) पथ्याशनमिव परमेश्वरोपासनमपि शारीरिकशक्तिमुद्धयति ।

(८६) मद्यादिगोष्ठीं न संघटयेत् ।

(८७) नाकाण्डे वीर्यं गमयेत् ।

(८८) न शिशुं प्रोपितभर्तृकामिव विधवां वा परिणयेत्, धर्मनियमाद् यथारुचिनियमारंभवाञ्च ।

(८९) शिवस्तमार्या वोभूयेत ।

## इति व्यवहाराख्यं तृतीयमाह्निकम् ।

(९०) असंयतो विषयेषु रज्यन् प्रत्यवेयात् ।

(९१) ज्ञानकर्मभ्यां युञ्ज्यात् ।

(९२) वास्तवं ज्ञानं ब्रह्मजिज्ञासाशारीरक-परमेश्वरप्रत्यभिज्ञाभ्याम् ।

(९३) कर्म तु मनु-याज्ञवल्क्याभ्याम् ।

(९४) परमेश्वरोपासनया वा ।

(९५) उपासना संप्रज्ञातासंप्रज्ञातयोगनिष्ठाभ्याम् ।

(९६) पुराणेष्वर्थवादो नास्तीति प्रौढिवादमात्रम् ।

(९७) पुराणेतिहासागमेषु केचन वेदवत् स्वाध्यायभागा मन्त्रमुख्या गीतादय इव ।

(९८) प्रणवादिमन्त्रजपोऽक्षवर्णमालामुख्येन मानसरोधी ।

(९९) उपदेशास्तुलसीदासादिभाषाकविसूक्तिष्वपि हृदयंगमाः ।

(१००) न विषमचित्तेषूपदेशावकाशो दुर्योधनादिवत् ।

(१०१) शुद्धोऽप्यात्माऽन्तःकरणप्रसङ्गात् स्फटिककिंशुकवत् ।

(१०२) न चार्वाकादिदूषणधिया पूर्वसीमानं विचालयेत् ।

(१०३) एतेन कतिपय आधुनिकब्राह्मार्यसनातनधर्मिव्यापाराः पर्यालोचिताः ।

(१०४) दृष्टार्थपरायणा खलु लोकचर्या ।

(१०५) वेदलोको हि विस्वरं क्रोशति।

(१०६) वैयाकरणा वेदनयाऽकरणाः।

(१०७) धर्मादय उत्तरेऽर्थमेवाश्रयन्ते।

(१०८) सुखिदुःखिद्वेषिषु मुदिताकरुणोपेक्षावृत्त्या परमेश्वरः प्रसीदति।

(१०९) सर्वहितैषितयापि।

## इति प्रायश्चित्ताख्यं चतुर्थमाह्निकम्।

## इति वेददृष्टिप्रणयिनी काश्यपीपुष्पमाला।

'दुस्तरः स्तोकबुद्धीनां शास्त्रविस्तरवारिधिः।
अथवा शास्त्रविस्तृत्या किं कार्यं सुधियामपि॥
जले तैलं, खले गुह्यं, पात्रे दानं, मनागपि।
प्राज्ञे शास्त्रं, स्वयं याति विस्तारं वस्तुशक्तितः॥'

इति भास्कराचार्योपसंहारः।

ॐ

# हृदयोद्गारः।

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ (कठोपनिष.)

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ (प्रश्नोपनि.)

ॐ शान्तिः शान्तिः शान्तिः।

आहारशुद्धेः सत्त्वशुद्धिः, सत्त्वशुद्धेर्ज्ञानशुद्धिः, ज्ञानशुद्धेर्व्यवहारशुद्धिः, व्यवहारशुद्धेर्लक्ष्मी-सरस्वतीप्रतिष्ठेत्याहुः।

आहारस्याशुद्धिः शुक्रशोणितद्वारेण जन्मिनः कायवाङ्मनांसि परिणामयन्ती पुरुषार्थं दूषयति।

शुद्धिस्वभावो वेदायुर्वेदाभ्यां व्याख्यायमानः शरीरात्मनोर्मङ्गलं घटयति।

वैदिकभावनेव शिक्षैव सर्वमूलम्, सिंहस्यापि जन्मपरिवृत्त्या गुणपरित्यागदर्शनात्।

ब्रह्मचर्यपरिष्कृते शैशवे हि शिक्षा प्रक्रमते। ततो जन्मान्तरसंस्कारपरतन्त्रया प्रौढिमासादयन्त्या प्रकृत्या तत्सहकारिण्या प्रवृत्त्या च काल्पमानाप्यनुकूला प्रतिकूला वा संभवति। शिक्षावतरणे हि देशकालपात्रेषु संगच्छमानेष्वपि विशिष्य पुस्तकपाठकहृदयानुरोध्येव विद्यार्थिनो बौद्धः परिणाम उन्मेषो वा संघटते। ततश्च बहुत्र प्रायः शिक्षाकेन्द्रपरिधिपूत्तीर्णाः क्षपितबहुवयस्का व्युत्पत्तिव्यवहारप्रस्तावेषु शिथिलपदाश्चाप्यात्मानं द्विपदां मूर्धन्यं संभाव्यमानाः पितृपितामहक्षुण्णासूपार्जनपद्यास्वपि प्रवर्तितुं न क्षमन्ते, तर्हि कथमिवोत्कर्षघनघटामात्रेणामृतवर्षिणो गण्येरन्।

न तावत् मातापितराविव परिणतिमधुराशयौ शिक्षा वा शिक्षको वाभ्यसूयते, किंतु तत्फलसममिति वैषम्योद्रेकं दर्शं दर्शं पुरोभागितो-

पमर्दाभावेऽपि प्रक्रममाणाऽसौ कोटिः प्रसार्यमाणस्य कलेः तत्समयस्य तदारब्धसमुदायादृष्टविलसितस्य वा कदाचित् क्वचिन् मीमांसान्तरे पुरोभागितामागच्छेदिति मातापितृभ्यामवसरं प्रयच्छताऽद्योऽपि श्राव्यते—

आः! शिक्षायोग्या अशिक्षिता अज्ञा वरम्। विशेषज्ञास्तु वैशेषिकशिरोमणय एव, माध्यमिका विभातबुद्धयस्तु स्वतो विज्ञानदशः, तत्र किमायोजितयानया वेददशा; इह—एम्. ए. अक्षरसंश्लेषे ब्रह्माण एव, पुनरिहापि वा-आचार्यताप्रवेशे शंकररामानुजा एव; इहापि पुनः-सी. आई. ई. महामहोपाध्यायसंनिपाते विश्वंभरावतंसा निःश्वसितवेदराशयो वर्णाश्रमाचारचर्यैकसूतय एव परिणमन्ति।

इत्यंचारे भगवदर्थविकटाट्टहासविस्फारितविश्वमण्डले ईश्वरद्रोहमिव राजद्रोहं परिहरन्—

आभ्युदयिकलोकयात्रामनुतिष्ठन्—

'इयं ज्ञानकला राम! सकृद् याताऽभिवर्धते।'

'वासनातानवं राम! मोक्ष इत्यभिधीयते।'

'यच्छेद् वाङ्मनसी प्राज्ञो य इच्छेज्ज्ञानमात्मनः।'

इत्यादिगुरूक्तीर्यथासौभाग्यकालं कलयन्—

'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति॥'

इति नीतिसूक्तिं चिन्तयन्—

'ब्रह्मादिस्तम्बपर्यन्तं यस्य मे गुरुसंततिः।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले॥'

इत्यागमपद्धतिमारुरुक्षन्—

'सियाराममय सब जग जानी। करौं प्रणाम जोरि जुग पानी॥'

इत्युपदेशसुधां धयन्—

भावशबलतादशा—

'देशं वेषं सदाचारं व्यवसायं श्रुति-स्मृती ।
रक्षन्तः शर्म पश्यन्ति नो पात्रेसमितादयः ॥'

इत्युपश्लोकयन्—
पर्यन्ते सर्वथा शासनातिगस्यात्यय एव घटत इति—

'अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ।'

इत्येवमादिना निश्चिन्वन्—
रावणपथपरिहाराय रामसेतुमाश्रयन्—

आयोध्यकः कश्चन शान्तिमापन्नो विरमतीति शिवम् ॥

**ॐ शान्तिः शान्तिः शान्तिः ॥**

॥ श्रीः ॥

# अथ चातुर्वर्ण्यशिक्षाया वर्णमातृकाक्रमेण श्लोकानुक्रमणिका ।

॥ श्रीः ॥

# अथ चातुर्वर्ण्यशिक्षाया वेददृष्टिसमेतायाः श्लोकाङ्कानुसारिणी विषयानुक्रमणिका ।

सप्तपूरणयाम्—

श्रीः ।

# अथ चातुर्वर्ण्यशिक्षा

## वेददृष्ट्या समेता ।



माङ्गल्यं सर्वलोकानां प्रसादः सर्वसंपदाम् ।
सा चातुर्वर्ण्यशिक्षेयं वेददृष्ट्या विविच्यते ॥

अथ वर्णाश्रमधर्मवेदनम् । तत्र प्रथमेन श्लोकेन ससंस्काराणां ब्राह्मणादीनां चतुर्णां वर्णानां वेदमूलकत्वं प्रतिजानीते—

**अश्वादिवज्जातिगुणक्रियाभि-**
**र्विभिन्नभावातिशयं प्रपन्नाः ।**
**ते ब्राह्मणक्षत्रियवैश्यशूद्र-**
**संकीर्णवर्णाः श्रुतिषु प्रसिद्धाः ॥ १ ॥**

**अश्वादिवदिति** । अश्वादिवदित्युचितद्रव्योपादानार्थम् । तेन गजादिचेतनेषु रत्नादिजडेषु जात्यादिनिरूपितोऽतिशयः परीक्षणीयः । तथाचाश्व**चिकित्सिते** द्वितीयाध्याये अश्वानां ब्राह्मणादिसंकीर्णान्ताः संज्ञा **नकुलो**ऽप्याह स्म।अतएव क्षत्रियशिक्षायाम्—'अश्वत्वसाम्येऽपि—' ( ६२ श्लो० ) इति प्रतिपाद्यते । जायते प्रादुर्भवतीति जातिः, ब्राह्मणत्वादिर्व्याप्यरूपा । जनी प्रादुर्भावे । गुण्यते आमन्त्र्यते इति गुणः,

शीलादिः । गुण आमन्त्रणे । करणं क्रिया, व्यापारः । जातिगुणक्रियाभिः विभिन्नः पृथग्विधः, यो भावः स्वभावः, तस्य अतिशयः उत्कर्षः, तं प्रपन्नाः प्रयाताः । ते ब्राह्मणाः सत्त्वप्रधानाः; क्षत्रियाः सत्त्वोपसर्जनरजःप्रधानाः; वैश्याः तमउपसर्जनरजःप्रधानाः; शूद्राः रजउपसर्जनतमःप्रधानाः; इति चत्वारो वर्णाः । व्याख्यानतः तत्तल्लिंगोऽपि । संकीर्यन्ते स्म, संकीर्णाः ।

" व्यभिचारेण वर्णाना,मवेद्यावेदनेन च ।
स्वकर्मणां च त्यागेन, जायन्ते वर्णसंकराः ॥ "

इति मनूपदिष्टाः ( १० अध्याय २४ श्लो० )

( अवेद्यावेदनं सगोत्रादिविवाहः । तथाचापस्तम्बः–'सगोत्राय दुहितरं न प्रयच्छेत्' इति । **गौतमश्च**–' असमानप्रवरैर्विवाहः ' इति । गोत्रप्रवरौ च भिन्नौ निषेधे निमित्तम् । एवमन्यदपि । )

वर्णा इति प्रत्येकमभिसंबध्यते । वर्ण्यन्ते गुणकर्मविभागैरिति वर्णाः । श्रूयन्ते एव कार्यब्रह्मगुरुपरम्परया, नतु स्मृतिवत् केनचिद् ऋषिणा मुनिना वा क्रियन्ते, इति श्रुतयः, ऋग्यजुःसामानि । कर्मणि क्तिन् । अथवा श्रूयन्ते वर्णाश्रमधर्मा आभिरिति । करणे क्तिन् । तासु श्रुतिषु वेदेषु प्रसिद्धाः, नतु लोकव्यवहारमात्रसिद्धाः । वर्णानां वेदमूलकत्वे मानम्—

" ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः, पद्भ्यां शूद्रो अजायत ॥ "

( ऋक्संहि० १० मण्ड० ७ अनुवा० ९० सू० )

"प्रजापतिः प्रजा अनेका असृजत् । स तपोऽतप्यत प्रजाः सृजेयमिति । मुखतो ब्राह्मणमसृजत्, बाहुभ्यां राजन्यम्, ऊरुभ्यां वैश्यम्, पद्भ्यां शूद्रम् ।" इति ब्राह्मणम् ।

'ब्राह्मणा ब्राह्मणीभिः सहजातास्तपोधनाः ।'

( सूतसंहि० माहात्म्यखं० १२ अध्या० ८ श्लो० )

"तदद्य वाचः प्रथमं मसीय, येनासुराँ अभि-देवा असाम ।
ऊर्जाद उत यज्ञियासः पञ्चजना, मम होत्रं जुषध्वम् ॥"
(ऋ० १० मं० ४ अ० ५३ सू०)

(मसीय=उच्चारयामि । अभ्यसाम=अभिभवेम । ऊर्जादः=अन्नभक्षयितारः । यज्ञियासः=यज्ञसंपादिनः । पञ्चजनाः=निषादपञ्चमाः वर्णाः । संबुद्धय इमाः । होत्रम्=आह्वानम् ।)

"पञ्चजनाः चत्वारो वर्णाः, निषादः पञ्चम इत्यौपमन्यवः ।" इति व्याख्यातं **यास्केन** (निरु० नैघण्टुककां० ३ अध्या० २ पाद) तत्र निषाद इति संकीर्णवर्णोपलक्षणम् ।

वर्णेषु ब्राह्मणादित्रयो द्विजातय इति व्यपदिश्यन्ते । द्वे जाती जन्मनी येषाम् । तत्र प्रथमा जातिः मातुः, द्वितीया, उपनयनाख्यसंस्कारात् । तथा च स्मर्यते—

'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥
सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव हि ॥' (म० १० । ४-५)
"सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः ॥
विप्रान्मूर्धावसिक्तो हि क्षत्रियायां, विशः स्त्रियाम् ।
अम्बष्ठः, शूद्रयां निषादो जातः पारसवोऽपि वा ॥"(याज्ञ० १।९०-९१)

मूर्धावसिक्तादयोऽनुलोमसंकरा ऊढासु जायन्त इति बोध्यम् । 'विन्नास्वेष विधिः स्मृतः' (याज्ञ० १ । ९२) इत्यग्रे सर्वशेषत्वेन याज्ञवल्क्येनोपसंहृतत्वात् ।

"अष्टमे वर्षे ब्राह्मणमुपनयेत्, गर्भाष्टमे वा । एकादशे क्षत्रियम् । द्वादशे वैश्यम् ॥" (आश्वला० गृ० सू० १ अ० १२ कंडि०)

"अष्टवर्षं ब्राह्मणमुपनयेद्, गर्भाष्टमे वा। एकादशवर्षं राजन्यम्। द्वादशवर्षं वैश्यम्।" (पारस्क० गृ० सू० २ कां० २ कं०)

"गर्भाष्टमेषु ब्राह्मणमुपनयेत्, गर्भैकादशेषु क्षत्रियम्, गर्भद्वादशेषु वैश्यम्।" (गोभि० गृ० सू० २ प्रपा० १० कं०)

एतेन स्वस्वमातापितृभ्यां ब्राह्मणत्वादिलक्षणामेकजातिं प्राप्तानामेव ब्राह्मणक्षत्रियवैश्यानां माणवकानामुपनयनाख्यकर्मणा द्वितीयजातिमारूढानां द्विजातित्वं (द्विजन्मत्वं) समुपलभ्यते। तथा च स्मर्यते—

'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्।

ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः॥' (याज्ञ० १।३९)

एकजातिः शूद्रस्तु प्रमाणाभावान्न द्विजातिः। यत्तु संप्रति कतिपये शूद्रपदस्य अज्ञाद्यर्थं कल्पयन्तस्तत्र ज्ञमुपनिनीषन्ति; तद् भारतप्रसिद्ध-धर्मव्याधा-द्युपनयनाभावादुपेक्ष्यम्। अतएव शूद्रशिक्षायाम्—

"यद् व्यक्तिवादादधुना वदन्ति

मौर्ख्यादिकं शूद्रपदाभिधेयम्।

तत्र श्रुतिव्याकृतिदर्शनानां

मानं सुदूरे, निकटे तु कोपः॥" (११५ श्लो०)

इति पठ्यते। ब्रह्मणोऽपत्यं ब्राह्मणः, क्षत्रस्यापत्यं क्षत्रिय इत्यादि-ताद्धिती प्रक्रियापि ब्रह्माद्यपत्यं ब्राह्मणादि साधयन्ती जन्मना जातिमा-वेदयति। यद्येवं ब्राह्मणादिशब्दो जातिवाचको नाभविष्यत्तर्हि भगवान् **पाणिनिः**—'ब्राह्मोऽजातौ' (६।४।१७१) इत्यादि नासूत्रयिष्यत। एवं जन्मना लब्धप्रतिष्ठैव जातिः कर्मणा विशिष्यते। **कालिदासोऽ**-प्याह—'दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ।' इति। नहि काचेन कृतसंस्कारेणापि मणिसधर्मणा भवितव्यम्। अधिकम्—'जा-तिस्तदुत्कर्षविधिर्द्वयीति—' (१२१ श्लो०) इत्यत्र व्युत्पादयिष्यते॥ १॥

अथ 'ब्राह्मणादिभिर्ब्रह्मचर्याद्यवस्थाभिरनुष्ठीयमानं कर्मैव धर्मतां प्रति-पेदे' इति द्वितीयेन श्लोकेन प्रतिपादयति—

ते ब्रह्मचर्यादिदशाविशेषै-
ब्रह्माण्डकार्याणि यथाविभागम्।
वेदाज्ञया कर्तुमभिप्रवृत्ता-
स्तत्कर्म धर्माह्वयतां जगाहे ॥ २ ॥

त इति। ते ब्राह्मणादयः द्विजन्मानः, शूद्राः, संकीर्णाः, व्रात्य-वृषलाः। तत्रान्तिषश्च वेदाज्ञया। वेदो नाम, वेद्यन्ते ज्ञाप्यन्ते धर्मार्थकाममोक्षा अनेनेति चतुर्वर्गसाधनभूतः शब्दराशिः। करणे घञ् बाहुलकात्। स च किंलक्षण इति जिज्ञासायां—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यापस्तम्बसूत्रादयोऽध्येतव्याः। तस्य भगवतो वेदपुरुषस्य आज्ञया शासनेन=लिङ्लोटादिनिर्दिष्टेन प्रवृत्तिनिवृत्तिबोधकेन श्रौतेन, तदुपजीवकेन स्मार्तेन वा वाक्येन। यथाविभागम्। यस्य यस्य वर्णस्य, अन्तरप्रभवस्य वा—यद् यत् कर्तव्यं यथाविभज्य आदिश्यते तथैव, नेतरथा। ब्रह्माण्डकार्याणि। ब्रह्माण्डं नाम, ब्रह्मणो हिरण्यगर्भस्य अण्डं प्रादुर्भावस्थानम्। यदन्तरेतत्सकलं ब्रह्मनिःश्वसितशब्द-तत्प्रतिपाद्यार्थलक्षणं जगद् विश्राम्यति। तथाचाख्यायते—

"भूभूधरत्रिदशदानवमानवाद्या
ये, याश्च धिष्ण्यगगनेचरचक्रकक्षाः।
लोकव्यवस्थितिरधर्युपरि प्रदिष्टा
ब्रह्माण्डभाण्डजठरे तदिदं समस्तम् ॥" ( सि० शि० गो० )

एवंभूतस्य ब्रह्माण्डस्य यानि कार्याणि, अष्टादशविद्याप्रस्थानैस्तादृग्भूतैः कलाप्रभृतिभिरुपज्ञातानि तानि। ब्रह्मचर्यादिदशाविशेषैः ( करणैः ) कर्तुं संपादयितुमभिप्रवृत्ताः यथायोगं प्रयत्नवन्तोऽभूवन्। तत्कर्मैव अनुष्ठितं, धर्माह्वयतां धर्मशब्दाभिधेयतां जगाहे प्राप। तथाच श्रूयते—"पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेन" इति। लोकेऽपि सत्कर्मानुष्ठातरि धार्मिक इति, असत्कर्मानुष्ठातर्यधार्मिक इति च, व्यवहारो दृश्यते।

स्त्रीणां शूद्राणां चोपनयनसंस्काराभावादध्ययनविधिसंकोचेऽपि ब्रह्मचर्यादिदशायोगिता, तदैहिकामुष्मिककर्तव्यसाफल्याय जायत इति सूक्ष्मेक्षिकया निरीक्षणीयम्। अतएवाश्रमशिक्षायां पठ्यते—

'क्षमा च शौर्यं च धृतिश्च सम्य-
ग्भोगश्च योगश्च पराक्रमश्च।
यत्किञ्चिदुत्कर्षविशेषशालि
तद् ब्रह्मचर्याश्रयकं स्मरन्ति॥' (१४५ श्लो०)

यत्तु–'लिङ्गविशेषनिर्देशात्–' (६।१।६-१६) इत्यादिजैमिनिसूत्रघटिताधिकरणन्यायेनोपनयनविधेः स्त्रीपरतया योजनं तदनाकरम्। एतेन 'स्त्रीचाविशेषात्' (कात्या० श्रौ० सू० १।१।७) इत्येवंजातीयकेन च स्त्रिया अनधिकारनिराकरणमात्रस्य व्यवस्थापितत्वात्, तदग्रिमे जैमिनीये 'स्ववतोस्तु वचनादैककर्म्यं स्यात्' (६।१।१७-२१) इत्यादिसूत्रघटिते **सहाधिकाराधिकरणे** तस्या अधिकारस्य स्वातन्त्र्येणाविवक्षितत्वाच्च। एतदुक्तं भवति–'लिङ्गविशेषनिर्देशात् पुंयुक्तम्' (६।१।६) इत्यैतिशायन पूर्वपक्षितमधिकरणं हि 'जातिं तु बादरायणोऽविशेषात् तस्मात्स्त्र्यपि प्रतीयेत, जात्यर्थस्याविशिष्टत्वात्'' (मी० द० ६।१।८) इत्यनेन यागादिषु स्त्रीपुंसयोरुभयोरधिकार इत्यत्रैव विश्रान्तमिति मनोहत्य विवेचनीयम्। भगवता **मनुना**–'प्राङ् नाभिवर्धनात् पुंसः–'(२।२९–६५) इत्यादिना जातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडाकर्मोपनयनकेशान्तान् सप्त संस्कारान् विधायान्ते तेषामितिकर्तव्यता–'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।' इत्यनेनातिदिष्टा। तत्र 'इयम्' इति सर्वनाम्ना बुद्धिस्थपरामर्शात् जातकर्मादीनां बुद्धिस्थतया उपनयनस्यापि तदन्तर्वर्तित्वेनातिदेशात् स्त्रीणामप्यमन्त्रकमुपनयनं सिद्ध्यति। समन्त्रकमुपनयनं तु श्रौतलिङ्गमन्तरेण ब्राह्मणादीनिव स्त्रीर्नानुगृह्णाति। इतो ज्योतिष्टोमे श्रूयमाणम्–'अग्नीषोमीयं पशुमालभते' (तैत्ति० सं० ६ कां० १ प्रपा० ११

श्नु० ) इति विधिवाक्यं निभालयन्त्या मीमांसादेवतया जातिलिङ्गसंख्या-विवक्षातोऽपि न मुक्तिः । तर्हि–'अष्टमे वर्षे ब्राह्मणमुपनयेत्' इत्यादौ विधिप्रस्तावे ब्राह्मणाद्याभासो वा स्त्री वा युगपद् अनेके वा कथमिव गृह्येरन् । यत्तु क्वचित्स्त्रीणामुपनयनं स्मर्यते, तत् पुराकल्पविषयम् । तथा-च वीरमित्रोदये **हारीतः**–"द्विविधाः स्त्रियः, ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामग्नीन्धनम्, वेदाध्ययनम्, स्वगृहे भिक्षाचर्येति । सद्योवधूनां तु उपस्थिते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्य इति ॥" **यमश्च**–'पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥ पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः । स्वगृहे चैव कन्याया भैक्षचर्या विधीयते ॥ वर्जयेदजिनं चीरं जटाधारणमेव च ।' इति ॥ पुराकल्पोऽर्थवाद इति मीमांसकाः । 'स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः' ( न्या० द० २ । १ । ६३ ) इति **गौतमः** । इत्थंच 'पत्युर्नो यज्ञसंयोगे' ( ४ । १ । ३३ ) इति पाणिनिस्मरणेन पत्न्याः पतिसाचिव्येन पाणिग्रहणादिवैतानिकान्तेषु कर्मकाण्डेषु यावन्मन्त्राः पाठ्यत्वेन विधीयन्ते तावत्स्वेव बह्वृचीकठ्यादिसंज्ञा-लाभविदितोऽधिकारः कल्प्यते । इतरथा तदनङ्कुशत्वे––

"अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥
वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो, गृहार्थोऽग्निपरिक्रिया ॥" ( म० २।६६-६७)
'तूष्णीमेताः क्रियाः कार्या विवाहस्तु समन्त्रकः ।'( याज्ञ० १ । १३ )

इत्येवमादीनां स्मृतीनां वैयर्थ्यमेव । लोकेऽपि **सीतारुक्मिणीद्रौपदी**प्रभृतीनामौपनायनिकं वृत्तं न श्रूयत इत्यन्यत्र विस्तरः । वेदस्य प्रमाणोत्कृष्टत्वे लिङ्गम्––

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।

एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥' ( तैत्तिरीयसंहिताभाष्यम् १ )

मनुष्यमात्रस्य वर्णप्रभवत्वे लिङ्गम्—

'वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥' ( म० ८ । १६ )

'शनैकस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पल्हवाश्चीनाः किराता दरदाः खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः॥' ( मनु० १० । ४३-४५ )

अत्रेदमाकूतम्—एते वर्णप्रभवा महाभागा भूभागान्तरेषु लब्धस्थितयो लुप्तसंस्काराः संकीर्णकर्माणो ह्यार्यवाचो म्लेच्छवाचो वा मौलिकधर्मावलोपिन इति हेतोर्गौण्या वृत्त्या दस्यवो व्यपदिष्टाः । नतु परमार्थतोऽमी दस्यवो भवितुमर्हाः । यथा खलु वेदसंकेतितमस्तिभावं परिहरन्तो नास्तिका इति, यथा वा स्वसामयिकीमार्यतां परित्यजन्तोऽनार्या इति व्यपदिश्यन्ते । एवंप्रायाः प्रत्यनीकतया व्यवह्रियमाणा अपि न संबन्धसद्भावं ह्रापयितुमीशते । एतेन वर्णाश्रमेभ्य इतरे यथान्यायं वर्णशेषेण आश्रमशेषेण तद्बन्धुना वा आत्मनीनेन पदेन व्यवहार्या इति लभ्यते ॥ स्वस्वकर्माचरणस्य सिद्धिप्रदत्वे लिङ्गम्—

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥
श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥

सहजं कर्म कौन्तेय! सदोषमपि न त्यजेत् ।

सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥'(भ० गी० १८।४५-४८)

जगति यथान्यायं प्रवर्तमानो मानवो यथाशक्ति समनुष्ठीयमानेन स्वेन स्वेन धर्मरूपपर्यवसितेन कर्मणा परमेश्वरं प्रीणयन् यथायोगं सिद्धिमासादयति । तच्चेदमिच्छाशक्तिजन्मा ज्ञानशक्तिसंस्कारशाली क्रियाशक्तिसहस्रशाखो भगवान् यज्ञ इति निगम्यते । सोऽयं यज्ञः साधारणधर्म इव मानवमात्रानुष्ठेयतया सार्वजनीन इति विज्ञायते । तथाच मनुगीतास्मृती—

'स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।'( मनु० २ । २० )

'मम वर्त्मानुवर्तन्ते मनुष्याः, पार्थ सर्वशः ॥',( गी० ३ । २३ )॥२॥

अथ ब्रह्मण इव धर्मस्याप्यतीन्द्रियत्वाद् ब्रह्मजिज्ञासेव धर्मजिज्ञासापि चोदनैकगम्येति तृतीयेन श्लोकेनावेदयति—

**प्रत्यक्षयोगं सहते न धर्म-**
**स्ततोऽनुमापि प्रतिरुद्धवीर्या ।**
**मानं तु लिङ्ग्वाच्यनिरूपणीया,**
**सा चोदनैवात्र वरीवृतीति ॥ ३ ॥**

**प्रत्यक्षेति** । 'तत्कर्म धर्माह्वयतां जगाहे' इत्युपश्लोकितं प्राक् । तत्र कर्म परमेश्वरप्रीणनधिया अनुष्ठितं यज्ञपदव्यवहार्यं भवतीत्यपि व्यक्तम् । एवं कर्म यज्ञः यज्ञो धर्म इति फलति । अत्र 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' इति पुरुषसूक्तमन्त्रे पुल्लिङ्गैकवचनान्तेन यज्ञपदेन नपुंसकबहुवचनान्तस्य धर्मपदस्य लिङ्गसंख्यानिराकरणेन मीमांसकानां समानाधिकरण्यव्यवस्थापनमप्यनुग्राहकम् । यत्तु 'कर्म क्रियारूपत्वाद् उत्पन्नप्रध्वंसशीलम्' इति फलकालपर्यन्तं नावतिष्ठते। तस्मात् कर्मजन्यः कश्चन गुणविशेषो धर्मो नाम, स एव पुनरपूर्वादिशब्दैराख्यायत इति । तदेतन्न पेशलम् । फलसाधनप्रवृत्तस्य कर्मणः शक्तिमात्रस्यैव अपूर्वपदार्थत्वेन निर्णयात् । यदपि 'धर्मः क्षरति कीर्तनात्' इत्यपूर्वे धर्मपदं प्रयुक्तं तल्लाक्षणिकमिति शास्त्रविदः ।

सोऽयं भगवान् धर्मः 'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' (न्या० द० १।१।४) इति यत् (प्रतिगतमक्षं) प्रत्यक्षं तद्योगं न सहते। ज्ञानकाले अविद्यमानत्वेन तस्य इन्द्रियागोचरत्वात्। तथाच सूत्रितं **षोडशलक्षण्याम्**— 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' (मी० द० १।१।४) इति। 'विद्यमानोपलम्भात्' इति वृत्तिकाराः। ततो व्याप्तिज्ञानाभावात्—'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च' (न्या० द० १।१।५) इत्यनुमापि प्रतिरुद्धवीर्या। प्रत्यक्षपूर्वकत्वाद् अनुमानस्य तदपि विरतव्यापारमिति भावः। एवं धर्मस्य प्रमापकत्वाभावप्राप्तावाह—अत्र मानं तु लिङ्वाच्यनिरूपणीया=लिङर्थप्रतिपादनीया, सा प्रसिद्धा चोदना प्रवर्तना एव वरीवृतीति। निर्बाधं जागर्तीति भावः।

अत्रेदमाकलनीयम्—स्वेच्छया परप्रवर्तनया चेति द्विविधा हि पुरुषप्रवृत्तिर्लोके विलोक्यते तावत्। तत्रेच्छया प्रवृत्तौ प्रवर्तनानुपयोगेऽपि प्रवर्तनया प्रवृत्तौ तु सोपयुक्तैव। प्रवर्तकप्रवर्तनयैतत् करोमीति प्रवर्त्यव्यवहारदर्शनात्। इत्थं च प्रवर्तना नाम प्रवर्तितुः प्रवृत्त्यनुकूलः प्रवर्तयितुर्व्यापारविशेषः। स च प्रवर्तकव्यापारत्वादेव णिजन्तेन प्रवर्तनापदेन प्रतिपाद्यते। एतेन भावनापि व्याख्याता। स हि व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठो वैदिकवाक्ये तु पुरुषायोगाल्लिङादिशब्दनिष्ठ एव। तथाचाचार्याशयबोधेनान्तेवासिन इव लिङादिव्यापारबोधेन पुरुषस्य चोदनायां प्रवृत्तिरुपपद्यते। स चायं प्रवर्तनालक्षणो व्यापारो लिङादेरर्थः शाब्दीभावनेति व्यवह्रियते। इह लिङ्त्वलेट्त्वादिकमेव शक्ततावच्छेदकम्, व्यापारत्वमेव शक्यतावच्छेदकमित्यवधेयम्। शब्देनार्थ इव तया लिङ्त्वांशेनाभिधीयमानया शाब्द्या भावनया आख्यातत्वांशेनाभिधीयमाना आर्थी नाम भावना संबध्यते। एवं च 'स्वर्गकामो यजेत'

इत्यादिविधिवाक्ये 'यजेत' इति भावनाबोधकपदे लिङ्त्वाख्यातत्वेति-धर्मद्वयावच्छिन्नेन यजिप्रकृत्युत्तर-तप्रत्ययेन प्रेरणाख्या शाब्दी, प्रवृत्तिरूपा आर्थीति भावनाद्वयी मीमांसकैर्व्यवस्थाप्यते। ततो यथा—'ओदनकामः पचेत' इत्यत्र लिङा भावनाया बोधात्, किं भावयेदित्याकाङ्क्षोदये ओदनो भाव्यत्वेनान्वेति। केन भावयेत्? पाकेनेति। कथं भावयेत्? तृणफूत्कारादिसहितेनेति। ततश्च तृणफूत्काराद्युपकृतेन पाकेन तेजःसंयोगेन ओदनं भावयेत् (कुर्यात्) इति वाक्यार्थः संपद्यते। तथा—'स्वर्गकामो यजेत' इत्यत्रापि प्रत्ययेन भावना प्रतीयते। किमिति साध्याकाङ्क्षायां स्वर्गो भाव्यत्वेनान्वेति। केनेति साधनाकाङ्क्षायां यागेनेति। कथमितीतिकर्तव्यताकाङ्क्षायामग्न्यन्वाधानप्रयाजाद्यङ्गसहितेनेति। तथाच मीमांसातन्त्रवार्तिके—

'अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते॥' (२।१।१)

अथ चोदना विधिरुपदेश इत्यादि नार्थान्तरम्। चोदनाशब्दो हि विधिमन्त्रनामधेयनिषेधार्थवादाख्यपञ्चविभागविभक्तं सकलं वेदं संगृह्णातीति मीमांसकानां सिद्धान्तः। धर्मस्य सद्भावे प्रमाणम्—

"धर्मो विश्वस्य जगतः प्रतिष्ठा,
लोके धर्मिष्ठं प्रजा उपसर्पन्ति।
धर्मेण पापमपनुदन्ति, धर्मे सर्वं
प्रतिष्ठितं, तस्माद् धर्मं परमं वदन्ति॥"
(तैत्ति० आर० १० प्रपा० ६३ अनुवा०)

तथाच धर्मलक्षणसूत्रम्—'चोदनालक्षणोऽर्थो धर्मः' (मी०द०१।१।२) इति। अत्र यो धर्म इत्युद्दिश्य स चोदनालक्षणो विधिप्रमाणक इति प्रमाणवचनव्यक्तिः। यः चोदनालक्षण इत्युद्दिश्य स धर्म इति स्वरूपवचनव्यक्तिः। तत्र प्रमाणव्यक्तौ द्वौ नियमौ विवक्षितौ। यो धर्मस्तत्र चोदनैव प्रमाणमित्येकः प्रत्यक्षानुमानचार्वाकवाक्यादिव्यावृत्त्यर्थः। यत्फल-

मुपपादयितुं प्रत्यक्षसूत्रम् । यो धर्मस्तत्र चोदना प्रमाणमेवेति द्वितीयो नास्तिकाभिमतवेदाप्रामाण्यनिरासार्थः । यत्साधनार्थमौत्पत्तिकसूत्रम् । यथा खलु धूमेन वह्निर्लक्ष्यते इति वह्निज्ञाने धूमो लक्षणम्, तथा धर्मज्ञाने चोदनैव लक्षणं करणमिति तात्पर्यम् । चोदना तु धर्मे स्वतः प्रमाणम् । तथाच सूत्रितं भगवता **जैमिनिना**–'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' (मी० द० १।१।५) इति । शब्दस्य = नित्यवेदघटकपदस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादेः, अर्थेन = तत्तत्प्रतिपाद्यार्थेन, संबन्धः=शक्तिरूपः, औत्पत्तिकः=स्वाभाविकः । नित्य इति यावत् । उक्तं च **शाबरभाष्ये**–'औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया, इति । अतः तस्य=धर्मस्य, ज्ञायतेऽनेनेति ज्ञानं=करणं निमित्तम् । प्रत्यक्षादिभिरनुपलब्धे अर्थे उपदेशः=चोदना, अव्यतिरेकः=अर्थाव्यभिचारी । अत इतरानपेक्षत्वात्= प्रत्यक्षादिप्रमाणानपेक्षत्वात्, तद्=विधिघटितवाक्यं धर्मे प्रमाणम् । बादरायणग्रहणं तं पूजयितुं तन्मतं कीर्त्यते, नात्मीयं मतं पर्युदसितुम् । न जात्वप्यतीन्द्रियार्थविज्ञानप्रामाण्यं जहाति चोदना इति तात्पर्यम् । 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' (१६ । २४) इति भगवद्गीतिरपि । 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' (वै० द० १।१।२) इति **काणादं** सूत्रं च ॥ ३ ॥

शब्दपूर्विका हि सृष्टिः श्रूयते, शब्दार्थरूपं हि जगत् स्मर्यते, शब्दो ह्यर्थमभिधत्ते, अर्थो हि शब्दमपेक्षते, शब्दार्थनिबन्धनो हि लौकिको वा वैदिको वा व्यवहारः प्रवर्तते । तत्र परास्रोतोमूलकः शब्दो वर्णात्मा= अनित्यो वा, नित्यो वा, वर्णाभिव्यङ्ग्यः स्फोटो वा, गुणो वा, द्रव्यं वा भवतु; नोत्थायार्थमुपतिष्ठते–"अयं मम वाच्यः, अहमस्य वाचक इति ज्ञापयितुम्" किंतु संबन्धमाकाङ्क्षति । संबन्धः=कृतको वा, नित्यो वा,

नोपदेशमन्तरा अध्यवसीयते । उपदेशः=पौरुषेयो वा, अपौरुषेयो वा, नोपदेष्टारमन्तरेण प्रतिपत्तुं शक्यते । उपदेष्टा=लौकायतिको वा, वैदिको वा, आस्ताम् । प्रायेण तदाहितोपदेशपुरस्कारेणैव उपदेश्यस्य मतिरुज्जिहीते । तथा श्रावणचाक्षुषप्रत्यक्षविषयाभ्यामपि शब्दार्थाभ्यामेकान्ततः स्वसत्यभावं सत्यापयितुमशक्यमेव; बहुत्र प्रमाणप्रमेयशरीरे दोषोन्मेषावकाशदर्शनाद्—इति हिरण्यगर्भादिगुरुपारम्पर्यप्राप्तवेदार्थावतरणायेदमाह चतुर्थश्लोकेन—

अच्छिन्नपारम्परिकार्थभिन्नो,
विधिस्तु धर्मं न हि वक्तुमीष्टे ।
न केवलं भोस्तदधीत एव,
तद्वेद खल्वित्यपि वेदकायः ॥ ४ ॥

अच्छिन्नेति । अच्छिन्नः=सृष्टिप्रादुर्भावमारभ्य वर्तमानसमयपर्यन्तं प्रवाहात्मा, पारम्परिकः=अध्ययनाध्यापनसंप्रदायादागतः, यः अर्थः=वाचकवाच्यः, तस्माद् भिन्नः=भेदं प्राप्तः । अर्थान्तरं नीत इति यावत् । विधीयते अनेन इति विधिः=लिङ्लेट्लोट्तव्यत्तव्यानीयर्घटितवाक्यम् । तुः पुनरर्थे । धर्मं=प्रवृत्तिलक्षणं मन्त्रब्राह्मणकल्पसूत्रपूर्वमीमांसाप्रतिपाद्यम्; निवृत्तिलक्षणं मन्त्रब्राह्मणोपनिषदुत्तरमीमांसाप्रतिपाद्यं च; वक्तुं=स्वरूपतो विवेक्तुं, न हीष्टे=न कथमपि कल्पते । यथा हि लोके वक्ता येन अभिप्रायेण यद् वाक्यं प्रयुज्यते, तेनैव यदि तन्न योज्यते; कल्पनया अन्यथा नीयते । तर्हि शब्दतो व्यवस्थितमपि तद्वाक्यमर्थतो विपर्यस्तमिति स्थेयैः प्रतिपाद्यते । तथैव वैदिकमपि वाक्यं व्याख्याबलेन अर्थान्तरं नीयमानं प्रमेयतो भ्रष्टमिति । एतदेव 'तदधीते तद्वेद' (४।२।५९) इति पाणिनिसूत्रमुद्धृत्य प्रदर्शयति—भोः=अङ्ग, न केवलं 'तदधीते' इति ज्ञातः शब्दभाग एव वेदकायोऽस्तीति मन्तव्यम् । किंतु 'तद्वेद' इत्यर्थभागोऽपि खलु वेदकाय इत्यप्यनुमन्तव्यम् । एवं च यथा न शब्दशरीरमात्रविश्रान्तो वेदपदार्थः, तथैव नार्थशरीरमात्रविश्रान्तोऽपि । किंतु यथोपदिष्टशब्दार्थो-

भयशरीरशालीति स्पष्टं सिद्धयति । एतेन भगवन्तं वेदपुरुषं स्वार्थतः पातयतां वेदध्वजानां स्तेनचक्रवर्तित्वं स्मर्यते । तथाच **मनुः**—

'वाच्यर्था निहताः सर्वे वाङ्मूला वाग्विनिःसृताः ।
तां तु यः स्तेनयेद् वाचं स सर्वस्तेयकृन्नरः' ॥ (४।२५६)

वेदस्य नित्यत्वे लिङ्गम्—

'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया ।
वृष्णे चोदस्व सुष्टुतिम्' ॥ (ऋ०६ अ८०५ अध्या०२५ व०)

( हे विरूप=नानारूप । त्वं तस्मै अभिद्यवे=अभिगततृप्तये । वृष्णे=वर्षकाय अग्नये । नित्यया=उत्पत्तिरहितया । वाचा=मन्त्ररूपया । सुष्टुतिम् नूनम्=इदानीम् । चोदस्व=स्तुहि । )

'यज्ञेन वाचः पदवीयमायन् ।
तामन्वविन्दन्नृषिषु प्रविष्टाम् ॥' (ऋ०८ अ८०२ अध्याय०२३ व०)

( विदितार्थाः=धीराः, पदवीयम्=वेतेरचोयत्, संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः । पदेन यातव्यः पन्थाः पदवीयः, तं वाचो मार्गम् । यज्ञेन आयन्=प्राप्तवन्तः । ऋषिषु=अतीन्द्रियार्थदर्शिषु । तां प्रविष्टां=वाचम् । अविन्दन्=अलभन्त । )

'अजान ह वै पृश्नीᳬंस्तपस्यमानान् ब्रह्म स्वयं स्वयम्भ्वभ्यानर्षत्, तदृषयोऽभवन्, तदृषीणामृषित्वम् ॥'(तैत्ति०आर०२ प्रपा०९अनु०)

( पृश्नीन्=शुक्लान् निर्मलान् । ब्रह्म=वेदः । स्वयंभु=प्रमाणान्तरमनुपजीव्य प्रादुर्भूतम् । अभ्यानर्षत्=आभिमुख्येन प्रत्यक्षमागच्छत् । नैरुक्ते नैघण्टुककाण्डे द्वितीयाध्यायं तृतीयपादे—'ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः' इति ब्रुवन् **यास्को**ऽपि ऋषिशब्दस्य प्रवृत्तिनिमित्तं वेदसंबन्धिदर्शनमेव निर्णीतवान् । दर्शनं प्रत्यक्षीकरणं न तु चाक्षुषं ज्ञानम्, शब्दराशेर्वेदस्य श्रावणत्वात् । एवं च ऋषति वेदं पश्यति साक्षात्करोतीति ऋषिः । गत्यर्थकस्य ऋषेर्दर्शने वृत्तिर्ज्ञानार्थत्वं वा । )

'लिङ्गदर्शनाच्च' (मी०द०१।१।२३) 'अतएव च नित्यत्वम्' (वे०द०१।३।२९)

"विध्यादिरूपो यः शब्दः सोऽनित्योऽथाविनश्वरः ।
अनित्यो वर्णरूपत्वाद् वर्णो जन्मोपलम्भनात् ॥'
अबाधितप्रत्यभिज्ञाबलाद् वर्णस्य नित्यता ।
उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते ॥"

(इति माधवीयौ पूर्वपक्षसिद्धान्तौ)

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥'(तैत्तिरीयसंहिताभाष्यभू०)

यत्तु शाब्दिकाः—वाक्यश्रवणानन्तरम् 'इदमेकं पदम्' इति मानसप्रत्ययो जायते । तस्य वर्णातिरिक्तः स्फोटसंज्ञः शब्दो विषयः । स एव नित्य इत्याचक्षते । तदन्ये न सहन्ते । मीमांसाश्लोकवार्तिके स्फोटवादोपसंहारेऽप्युक्तम्—

'वर्णातिरिक्तः प्रतिषिध्यमानः पदेषु मन्दं फलमादधाति ।
कार्याणि वाक्यावयवाश्रयाणि सत्यानि कर्तुं कृत एष यत्नः'(१।१।५)

वेदस्यापौरुषेयत्वे मानम्—

तत्र पूर्वपक्षः—'वेदाँश्चैके संनिकर्षं पुरुषाख्याः । अनित्यदर्शनाच्च ।' (मी० द० १।१।२७-२८) इति । सिद्धान्तः—'उक्तं तु शब्दपूर्वत्वम् । आख्या प्रवचनात् । परंतु श्रुतिसामान्यम् । कृते वा नियोगः स्यात् कर्मणः संबन्धात् ।' (मी०,द० १।१।२९-३२) इति ।

'पौरुषेयं न वा वेदवाक्यं स्यात्, पौरुषेयता ।
काठकादिसमाख्यानाद् वाक्यत्वाच्चान्यवाक्यवत् ॥'
समाख्याध्यापकत्वेन, वाक्यत्वं तु पराहतम् ।
तत्कर्त्रनुपलम्भेन, स्यात्ततोऽपौरुषेयता ॥'

(इति माधवीयौ पूर्वपक्षसिद्धान्तौ)

कठेन प्रोक्तं काठकमित्यादिदर्शनाद् 'विमतं वेदवाक्यं पौरुषेयं वाक्यत्वाद् व्यासादिवाक्यवत्' इति यदनुमानं तद् वेदकर्त्रनुपलम्भात् प्रतिकूल-

हेतुहतम्। एतेन वेदे विभाव्यमानाः संज्ञाः कथांशा वा नित्यत्वाभिप्रायादिना योजनीया इति बोध्यते। अतो हि—

'पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उक्षन्।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता॥'
(ऋ० सं० १० मं० ८ अ० ६५ सू०)

'अपां फेनेन नमुचेः शिर इन्द्रोदवर्त्तयः।
विश्वा यदजय स्पृधः॥' (य० सं० १६ अ०)

'इन्द्रो दधीचो अस्थिभिर्वृत्राण्यप्रतिष्कुतः।
जघान नवतीर्नव॥' (सा० सं० छन्दआर्चि०)

'यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः।
तत्ते बध्नाम्यायुषे वर्चसे बलाय दीर्घायुत्वाय शतशारदाय॥'
(अ० सं० १ कां०)

इत्येवमादयो वेदभागास्तथाभिप्रायका बोद्धव्याः। एवमवबोधने—"यो ह वै वसिष्ठं वेद, वसिष्ठो हि स्वानां भवति, वाग्वाव वसिष्ठः"। इति। "अथ हैनं वागुवाच, यदहं वसिष्ठोऽस्मि, त्वं तद्वद् वसिष्ठोऽसि" इति च (छां० उ० ५ प्र० १ खं०) "एष उ एव बृहस्पतिर्वाग् वै बृहती, तस्या एष पतिस्तस्मादु बृहस्पतिः" (बृ० उ० १ अ० ३ ब्रा०) इति। "वागेवात्रि, र्वाचाह्यन्नमद्यते,ऽत्तिर्ह वै नामैतदत्रिरिति, सर्वस्यात्ता भवति, सर्वस्यान्नं भवति" इति च (बृ० उ० २ अ० ४ ब्रा०) इत्येवंजातीया वेदभागा अपि लिङ्गानि। वेदानां तु 'निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्' (सां० द० ५। ५१) इति सर्वे। व्याकरणमहाभाष्यकाले—"एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधा अथर्वणो वेदः" इति वेदविभागो विज्ञातोऽभूत् (११३१)॥

प्राणा व्याख्यानशूराणां कर्मयोगश्रियां पदम्।
एषा चातुर्वर्ण्यशिक्षा वेददृष्टया सहैधताम्॥

इति चतुःश्लोकी॥

# अथ ब्राह्मण-शिक्षा।

भो ब्राह्मणा! ब्रह्मविचारशुद्धा
भवन्तु भव्याशयसंश्रयेण।
न जायते किं स्फटिकोपलेषु
वर्णान्तरत्वं मलसंक्रमेण ॥ ५ ॥

उपास्यतां संयमयोगपूर्वं
मातेव कल्याणरसं सृजन्ती।
अङ्गैरुपाङ्गैः कलिता त्रयीयं
यतः स्फुरेन्मानससारसश्रीः ॥ ६ ॥

यथावदन्तःकरणे पवित्रे
प्रोद्यन्ति विद्याविशदा विवेकाः।
न चेद्द्रुमायाममृतोपमानि
वैरस्यमायान्ति किमूदकानि ॥ ७ ॥

इत्थं च मन्वादिभिरुच्यमाना
सा चात्मतुष्टिः प्रमितिं प्रयाति।
न चेदनेकाशयभिन्नतुष्टौ
धर्मक्षतिः स्यादिति वेदतत्त्वम् ॥ ८ ॥ (विशेषकम्)

अथ षट्चत्वारिंशता पद्यैर्ब्राह्मणान्प्रत्यावेदनम्।

तत्र ब्रह्मोपासना, यां विना ब्राह्मणशब्द एव न संगच्छते। प्रकृतिर्ब्रह्म वाचकं वाच्यं च। यत्पाठतोऽपि विदन्नर्हति, किं पुनरर्थतः। 'स्वाध्यायोऽध्येतव्यः।' 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।' 'तदधीते तद्वेद।' इत्यादिश्रवणस्मरणाभ्याम्। इह शब्दार्थयोस्तादात्म्यमपि प्रयोजकम्। तथा चार्जुनं प्रति वासुदेवेन व्याख्यायते—

'ओमित्येकाक्षरं ब्रह्म व्याहरन् मा-( आत्मान )-मनुस्मरन् ।
य: प्रयाति त्यजन्देहं स याति परमां गतिम् ॥' (गी० ८ । १३)

ब्रह्मण: अपत्यानि, ब्रह्म अधीयते, ब्रह्म जानन्ति वा ब्राह्मणा: । सर्वत्र यथायोगमण् । एते संबुद्ध्या अभिमुखीक्रियन्ते—**भो ब्राह्मणा** इति । हन्त ! तत्रभवन्तो ब्रह्मणोऽपत्यानि भूत्वापि ब्रह्मपरिशीलनमन्तरेण अयोग्या भवेयुरिति सारम् ॥

ब्रह्मोपासनप्रकारमाह—**उपास्यतामिति** । संयम: प्रमेयस्य साक्षात्कारकारणं धारणाध्यानसमाधिरूप:, श्रवणमनननिदिध्यासनात्मा वा, तद्योगपूर्वं तदनुष्ठानपुरस्सरम् । तथा च **योगसूत्राणि**—'देशबन्धश्चित्तस्य धारणा । तत्र प्रत्ययैकतानता ध्यानम् । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि: । त्रयमेकत्र संयम: ।' ( ३ । १-४ ) इयं त्रयी । त्रय: ऋग्यजु:सामलक्षणा: अवयवा: यस्या: सा । **अथर्ववेदे**ऽपि ऋगादिलक्षणानां मन्त्राणामेव सत्त्वाद् वेदानां चतुष्टयीति तत्त्वम् । अथर्ववेद इति व्यवहारस्तु अध्ययनप्रयुक्त: । तथा च श्रूयते—

'ब्रह्मा देवानां प्रथम: संबभूव
विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-
मथर्वाय ज्येष्ठपुत्राय प्राह ॥' ( मुं० उ. १ मुं० १ खं० )

ऋगादीनां लक्षणानि जैमिनीये **मीमांसादर्शने**—'ऋग्यत्रार्थवशेन पादव्यवस्था । गीतिषु साम । शेषे यजु:शब्द: ।' ( २ । १ । ३३-३५ ) ऋच्यन्ते ( स्तूयन्ते ) देवता: अनयेति ऋक् । ऋचि अध्यूढं ( गीयमानं ) सत् पापं स्यतीति साम । इज्यते ( पूज्यते ) अनेनेति यजु: । अङ्गानि व्याकरणादीनि, उपाङ्गानि मीमांसाप्रभृतीनि, तै: कलिता सती । मातेव कल्याणरसं सृजन्तीति पूर्णोपमा । उपास्यतां परिशील्यताम् । यत: मानसं हृदयमेव सारसं पुण्डरीकं तस्य श्री: स्फुरेत्

प्रसीदेत् । इदं परमकर्तव्यतया मात्रेव हितकारिण्या श्रुत्या श्राव्यते— "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः, तस्मिन्यदन्तः, तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् ।" (छां० ८ प्र० १ खं०)

अपरैरप्युपश्लोक्यते—

'ओमिति स्फुरदुरस्यनाहतं
गर्भगुम्फितसमस्तवाङ्मयम् ।
दन्ध्वनीति हृदि यत्परं पदं
तत्सदक्षरमुपास्महे महः ॥' (स्तुतिकुसुमाञ्ज०)

इदमेव वेदान्तदर्शने **दहराधिकरणस्य** मूलम् (१।३।१४) ॥

उपासनाफलमाह-**यथावदिति**। नहि मलिने मुकुरतले वदनश्रीर्विभाव्यते।

**न्यायकुसुमाञ्जलावप्यभिहितम्**—

'इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक ! त्वयैव कृपया ते भावनीया नराः ॥'

एवं पवित्रान्तःकरणानामेव प्रमातॄणां धर्मप्रमाणगणिता आत्मतुष्टिराद्रियते, न पुनरन्येषां मनस्यन्यद् वचस्यन्यत् कर्मण्यन्यच्च कुर्वतामित्याशयेनाह—**इत्थं चेति** । मन्त्रादिभिः उच्यमाना सा आत्मतुष्टिश्च, चकाराद् आचारः प्रमितिं यथार्थज्ञानं प्रयाति । तथा चाहुर्मीमांसाभाष्यस्य **तन्त्रवार्तिके** भट्टपादाः—'बहुदिनाभ्यस्तधर्मव्यासात्मनो हि न कथञ्चिद् धर्मकरणरूपात्मतुष्टिरन्यत्र संभवतीति धर्मत्वेनाभ्यनुज्ञायते ।' इति । 'प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशाः यत्परम्पराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति तदपि स्वर्ग्यत्वाद् धर्मरूपमेव ।' इति

च (१।३।७)। उदाजहुश्च—'सतां हि संदेहपदेषु वस्तुषु प्रमाण-मन्तःकरणप्रवृत्तयः।' इत्यभिज्ञानशाकुन्तलीयं पद्यार्धम्।

धर्मे प्रमाणानि—

"वेदोऽखिलो धर्ममूलं, स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूना, मात्मनस्तुष्टिरेव च॥" (म० २।६)

एवमन्यत्रापीति॥ ५-८॥

सदा सदाचारविचारदीक्षा
तत्कर्मदीक्षा सुतरामपेक्ष्या।
येनास्य याताः पितरो महान्त-
स्तेनैव यातव्यमिति स्मरन्ति॥ ९॥

स ब्राह्मणो ब्रह्मणि यस्य योगो
भूयाल्लघुर्वा समयानुरोधात्।
न वा पुनर्ध्वस्तसमस्तकर्मा
धर्मध्वजो रूप्यकखण्डलुब्धः॥ १०॥

प्रारब्धवेगेन समृद्धिभोगो
न विद्यया साध्यत एष पीनः।
विद्यापि वैदुष्यमुपार्जयन्ती
जागर्ति लोकद्वयसाधनाय॥ ११॥

सुखं श्रयेद् दुःखमुपद्रवेद्वा
संनह्यतां सर्वहिताय नित्यम्।
घनोपरोधेऽपि न शान्तिमेति
सूर्यांशुमो लोकविकासनाय॥ १२॥

भैषज्यमिव कर्मापि क्रियमाणमेव सौख्याय कल्पते, न तु व्याख्यानादौ कर्णशष्कुलीं व्याप्रियमाणमात्रमेवेत्याह—सदेति। सदाचार-विचारयोः

दीक्षा प्रतिज्ञापूर्वकं ग्रहणम् । तत्कर्मणः अनुष्ठानस्य वीक्षा 'अत्र त्रुटिर्मा भूत्' इत्यालोचनम् । सुतरामपेक्षया । आलोचनप्रकारस्तु—

'अहन्यहनि वीक्षेत कृतं चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु तुल्यं महात्मभिः ॥' इति ।

उत्तरार्धेन द्विजत्वघटकस्य धर्मस्य रक्षणार्थम्—

'येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते ॥' (म० ४ । १७८)

इति स्मारणात् । यस्माद् धर्मः शाश्वत इति विशेष्यते । अत्रेदमपि पुनर्द्रष्टव्यम्—वेदविदां स्मृतिशीलवद् आचार आत्मतुष्टिरपि धर्मे प्रमाणमित्युद्दिष्टं प्राक् । अस्यैव—

'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम् ॥' (मनु० २ । १२)

इत्ययं परिच्छेदः । तत आचारे शीलेनान्तर्भूयते । शीलं ब्रह्मण्यतादिरूपमिति **कुल्लूकभट्टः** । तदाह **हारीतः**—"ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता, मृदुता, अपारुष्यम्, मैत्रता, प्रियवादित्वम्, कृतज्ञता, शरण्यता, कारुण्यम्, प्रशान्तिश्च" इति त्रयोदशविधम् । **गोविन्दराजस्तु** शीलं रागद्वेषपरित्याग इत्याह स्म । तत्र—

'विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥' (म० २ । १)

इति बीजम् । आत्मतुष्टिराचारेऽन्तर्भवन्त्यपि वैकल्पिके विषये विविक्तैव । कश्चिदाचारोऽपि दृष्टमूलकस्मृतिवन्नाद्रियते । तत्र शास्त्रप्रसिद्धार्थप्रामाण्याधिकरणे मीमांसावार्तिककारमतेन माधवीयं **वर्णकान्तरम्**—

"यो मातुलविवाहादौ शिष्टाचारः स मा, न वा ।
इतराचारवन्मात्व,ममात्वं स्मृतिबाधनात् ॥'

स्मृतिमूलो हि सर्वत्र शिष्टाचार,स्ततोऽत्र च ।
अनुमेया स्मृतिः, स्मृत्या बाध्या प्रत्यक्षया तु सा ॥"

दाक्षिणात्येषु केचन मातुलस्य सुतां परिणयन्ति। स चाचारः प्रमाणं सदाचारत्वाद् होलकाद्याचारवत्—इति चेन्न। 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥' इति स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात् । सदाचारेण स्मृतिरेवानुगातुं शक्यते, न तु श्रुतिः। अनुमीयमाना च स्मृतिः प्रत्यक्षया विरुद्धया स्मृत्या बाध्यते । अत एव मीमांसातन्त्रवार्तिके प्रथमाध्यायस्य तृतीयपादे—

'आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन द्व्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते ॥' (१।३।८) इति।

तस्मादेवंभूतस्याचारस्याप्रामाण्यम्। एवं च श्रुतिरेव बलीयसी। अत एव **जैमिनिः**—"विरोधे त्वनपेक्ष्यं स्याद्, असति ह्यनुमानम्"(१।३।३)॥

सदाचारस्य उपादेयत्वे दुराचारस्य हेयत्वे च प्रमाणम्—

'श्रुतिस्मृत्युदितं सम्यङ् निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥
आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥
दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥
सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥' (म०४। १५५-१५८)

सदाचारस्य निषेवणेनैव अस्माकं पूर्वजा दीर्घायुष्यबलवीर्यभागिनोऽभूवन्, तद्विपरीता वयं त्वहर्दिवमगदंकारचरणान्निषेवमाणा अपि शान्तिं न लभामहे; इति वर्तमानात् प्राक् पञ्चाशतं समा अपि पर्यालोचयन्तो विवेक्तुमीश्महे, किं दूरेक्षिकया ॥ ६ ॥

शय्योत्थायमर्जनायैव प्रयतमानान्प्रत्याह—**स ब्राह्मण** इति। ब्राह्मणस्य ब्रह्मणि भूयान् योगः शास्त्रेषु सुप्रसिद्ध एव, यदर्थं **मनु**रप्येवं सस्मार—

'उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥
ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये॥' इत्यादि (१।९८-९९)।

समयानुरोधात् संध्योपासनसावित्रीजपात्मा लघुर्वा। येन विना द्विजातयो निगर्हिता जायन्ते, न पुनर्विष्णु-शिवोपासनेन विनेति द्विजन्मनामवधानार्थं वैदिकः पटहप्रणादः। उत्तरार्धेन ब्राह्मणव्रतता स्मारिता। **रूप्यकखण्डलुब्ध** इति रूप्यकस्य पूर्णकलस्य खण्डः, अर्धं वा, चतुर्थांशो वा, अष्टमांशो वा, षोडशांशो वा, यथायोगमाहतरूपः; तत्र लुब्धो गृध्नुः। अत्र **मनु**शासनम्—

'पूर्वां संध्यां जपँस्तिष्ठेत्सावित्रीमार्कदर्शनात्।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात्॥
पूर्वां संध्यां जपँस्तिष्ठन्नैशमेनो व्यपोहति।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्॥' (२।१०१-१०२)

अकरणे दण्डः—

'न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः॥' (२।१०३)

जप्यस्य मन्त्रस्य स्वरूपं तस्य सारवत्ता—

'अकारं चाप्युकारं च मकारं च प्रजापतिः।
वेदत्रयान्निरदुहद् भूर्भुवः स्वरितीति च॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥

एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ।
संध्ययोर्वेदविद् विप्रो वेदपुण्येन युज्यते ॥' (२।७६-७८)

वैमुख्ये नीचता—

'एतयर्चाविसंयुक्तः काले च क्रियया स्वया ।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥'( २ । ८० ) ॥ १० ॥

विद्यया हि मनुष्यो भवति, मनुष्यो हि कर्मक्षेत्रे प्रभवतीति भावयता नासूयितव्यमित्याह–**प्रारब्धेति** । 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ' ( भ० गी० २ । ४७ ) इति भगवद्गीतिस्मरणादव्यग्रं प्रवर्तितव्यमिति तत्त्वम् । **विद्यापीति** । तथा च **कामन्दकीये** द्वितीयसर्गे– ' आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम् ॥ आन्वीक्षिक्याऽऽत्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीतौ नयानयौ ॥' इति । रघुवर्णने **कालिदासो**ऽपि—

'धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभि-
र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥' (रघु० ३ । ३० )

याज्ञवल्क्येन त्वेवं विद्या विभज्यते—

' पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' ( याज्ञ० १ । ३ )

विद्यानां पुरुषार्थसाधनज्ञानानां धर्मस्य च चतुर्दश स्थानानि हेतव इति । **विष्णुपुराणे** तु—

' अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्यां ह्येताश्चतुर्दश ॥

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्याः ह्यष्टादशैव ताः ॥'इति ।

अन्त्योपान्त्यविद्याविभागमालम्ब्य नलवर्णने श्रीहर्षोऽपि-

'अधीतिबोधाचरणप्रचारणै—
दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतः स्वयं
न वेद्मि विद्यासु चतुर्दशस्वयम् ॥
अमुष्य विद्या रसनाग्रनर्तकी
त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथग्जयश्रियाम् ॥' (नैषधी, १ । ४-५)

इत्युपरलोकितवान् । अन्यैरप्युच्यते—

"विद्या नाम नरस्य कीर्तिरतुला, भाग्यक्षये चाश्रयो,
धेनुः कामदुघा, रतिश्च विरहे, नेत्रं तृतीयं च सा ।
सत्कारायतनं, कुलस्य महिमा, रत्नैर्विना भूषणम्,
तस्मादन्यमुपेक्ष्य हेतुविषयं, विद्याधिकारं कुरु ॥" इति ॥ ११ ॥

सर्वहितमाचरन्नात्महितमपि विन्दति सर्वान्तर्गत्वादित्याह-**सुखमिति।** दृष्टान्ते घनः सान्द्रः, मेघश्च । सूरेः सूर्यस्य च आक्रमः । लोको जनः, भुवनं च । इत्यनुसंधेयम् ॥ १२ ॥

**सांस्कारिकं कर्म विधातुकामाः**
**पृच्छन्ति यत्तत् सुनिरूप्य लेख्यम् ।**
**न वा जिघृक्षारससंश्रयेण**
**नानाविधं भूरिच वस्तुजातम् ॥ १३ ॥**
**निक्षिप्यतां दृष्टिरितस्ततो वा**
**विमृश्यतां वा मनसा निकामम् ।**

भूरिव्ययाङ्गारतभूतलेऽस्मिन्
संस्कार एष प्रलयं नु यातः ॥ १४ ॥
पृथुक्रियाक्लृप्तिनिरूपितश्री-
रास्तां स सोमस्थविशेषयागः ।
न स्मर्यते क्वापि स जातियोगी
संस्कारशाखी बहुवित्तसाध्यः ॥ १५ ॥
यथा यथा शान्तिकपौष्टिकादि
संगच्छते साधु तथा तथैव ।
आदिश्यतां, क्वापि न लोभबुद्ध्या
कर्मोपदेशे घटना विधेया ॥ १६ ॥

अथ चतुर्भिः पुरोहितान्प्रत्याह—**सांस्कारिकामिति**। संस्क्रियतेऽनेन श्रौतेन स्मार्तेन वा कर्मणा आत्मा (क्षेत्रज्ञः) इति संस्कारः। तत्र तत्र जातौ सामान्यविशेषविहितश्रौतस्मार्तक्रियानुष्ठानद्वारा अतिशयाधायक इति यावत्। स संस्कारः प्रयोजनमस्येति सांस्कारिकं कर्म। विधातुकामाः अनुष्ठातुमभिलषन्तः यद् उपस्करणं भवतः पृच्छन्ति तत् कल्पसूत्रेषु सुनिरूप्य = पर्यालोच्य सामग्रीपत्रे भवद्भिर्लेख्यं = नामग्राहं विन्यसितव्यम्। एकस्य स्थाने द्वित्रादि न कल्पनीयं, कल्पितं च मानतो न वर्धनीयमित्येतदर्थमुत्तरार्धम् ॥

पर्यालोचनार्थमाह—**निक्षिप्यतामिति**। याजकैः सूच्यमानाद् व्ययाद् बिभ्यतो बहवो याज्या लुप्तसंस्काराः पुनः संस्कारं कर्तुकामा अपि न कर्तुमुत्सहन्ते। १९१७ खिस्ताब्दे **लवपुरे** ऽधिसंमेलनं मयका प्राहितस्य लेखस्य कश्चनभागः **काशीहिन्दुविश्वविद्यालय**—विवरणपत्रिकायां मुद्रितस्तावत्। ततो ज्ञानाञ्जनतूलिकायमाना पद्यद्वयीह प्रसङ्गादुद्ध्रियते—

" आस्तां कथा, हीतरसंस्क्रियाणा-
मुत्पद्य विप्रस्य कुलेऽपि केचित्।
यज्ञोपवीतादपि हीयमाना
दृष्टाः श्रुता माथुरकादयोऽद्य ॥
नात्रोपनेता न बहिष्क्रिया वा,
का नाम जातिर्न यतोऽपि मोक्षः।
सत्येवमुल्लासविशेषितश्रि
संमेलनं दीव्यतु तत्र तत्र ॥"

संमेलनकालान्निर्दिश्य तदुन्मुखा अभिमुखीक्रियन्ते–

" गङ्गावतारे, यमुनोपकण्ठे,
तयोः प्रयागेऽपि निरूपितश्रीः।
स एष संमेलनसंनिवेशः
कार्यात्मनाऽश्रावि कियान्न विघ्नः ॥"

संस्कारस्य अल्पव्ययसाध्यत्वमाह—**पृथुक्रियेति**। सोमस्थः सोमाख्यलतारससाध्योऽग्निष्टोमादिः, स तावत् पृथुक्रियाक्लृप्तिनिरूपितश्रीरिति तत्तच्छाखीयेषु श्रौतसूत्रेषु व्यक्तम्। आस्ताम्, बहुयोग्यतासाध्यत्वाद् दूरे तिष्ठतु। यद्यस्माकं शिक्षाभ्रंशेन द्विजत्वघटकः स्मार्तः संस्कार एव प्रतिदिनं क्षीयमाणो मरणोन्मुखः प्रतीयते, तर्हि सपरिकरस्य स्मार्ताधानस्य श्रौताधानस्य च बहूत्तरं विधेयस्य अग्निष्टोमादेः का वार्ता। स लोकवेदप्रसिद्धः, संस्कार एव फलप्रदत्वात् शाखी फलेग्रहिः, क्वापि गृह्यसूत्रेषु तदनुप्राणितासु मन्वादिस्मृतिषु वा बहुवित्तसाध्यो न स्मर्यत इत्याकलनीयम्।

उपजीव्योपजीवकत्वात् श्रौतस्मार्तयोः पौर्वापर्यभावोदयेऽपि उपनयनपूर्वत्वाद् वेदाध्ययनस्य स्मार्तं प्रागनुष्ठीयते। तत्र यथागृह्यसूत्रं कुमारस्य

उपनयनान्ताः, कुमार्या उपनयनवर्जं विवाहान्ताः संस्काराः द्विजत्वव-टकाः । उपनयनस्य कालोल्लङ्घने तु मनुर्व्रात्यत्वं स्मरति—

'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥
आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते ।
आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान् यौनांश्च संबन्धान्नाचरेद् ब्राह्मणः सह ॥' (२।३६-४०)

'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥
वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥' (२।६६-६७)

संध्योपासनानन्तरं द्वयोरपि संध्ययोः समित्प्रक्षेपादिरूपेयमग्निपरि-क्रिया (अग्निकार्यम्) स्वगृह्यसूत्रोक्तेन विधिना ब्रह्मचारिणा त्रैवर्णिकेन विधीयते ।

अथ यथाशाखमुपनीतः कुमारो यथानियमं वेदादि अधीयन् ब्रह्मचा-रीति व्यपदिश्यते । कृतकेशान्तस्नानः (संजातसमावर्तनः) स्नातक इति । विहितसहधर्मचारिणीसंयोगो गृहीति । एतस्य चतुर्थ्युत्तरकाले, दायाद्य-काले वा आवसथ्याधानं स्मर्यते; आवसथो गृहम्, तत्रस्थः अग्निः 'आ-वसथ्यः' इति, तस्य आधानं यथाविधिस्थापनम् । आवसथ्यः, गृह्यः, शालाग्निः, औपासन इति पर्यायाः । ब्रह्मचर्ये अनियतोऽग्निः, गार्हस्थ्ये

आवसथगृहशालोपासनानिबन्धनप्रवृत्तिनिमित्तविशेषात् तत्तदभिधानं श्रयन् नियतः स्मार्त इति समाख्यायते। सोऽयं गृही ब्राह्मणो वसन्ते,क्षत्रियो निदाघे, वैश्यः शरदि हेमन्ते वा, वैदिकेन विधिना उत्पादितस्य अग्नेर्गार्हपत्यादिरूपेण यद् आधानं विधत्ते, तत् श्रौतमिति। एवं कृताधानः प्रत्यहं सायंप्रातर्यदग्नौ होमं कुरुते, तद् अग्निहोत्रपदवाच्यम्। अग्निहोत्रं कुर्वाण आहिताग्निः प्रतिमासं दर्शपौर्णमासेष्टिभ्यां यजते। तदनु हविर्यज्ञसंस्थासु सोमयज्ञसंस्थासु चाधिकारी। अत्रोपपन्न एवाधिक्रियते, न पुनर्द्विजत्वघटकेषु संस्कारेष्विव अनुपपन्नोऽपि। तथा च स्मर्यते—

'त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद् द्विजः।
प्राक्सौमिकीः क्रियाः कुर्याद् यस्यान्नं वार्षिकं भवेत्॥' (याज्ञ०१।१२४)

प्राक्सौमिकक्रियाः, अग्निहोत्रदर्शपौर्णमासप्रभृतयः।

गृहिण आवसथ्याधानवत् (स्मार्ताग्न्याधानवत्) गार्हपत्याहवनीयान्वाहार्यपचनाधानं (श्रौताग्न्याधानम्) अप्यपेक्षते। तथा च स्मर्यतेऽग्निविभागपुरस्सरं कर्मविभागो भगवता **याज्ञवल्क्येन**—

"कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।
दायकालाहृते वापि, श्रौतं वैतानिकाग्निषु॥" (१।९७)

अथ द्विजत्वघटकाः संस्कारास्तेषां कालाश्च—

(१) गर्भाधानम्। एतद् ऋतुमत्यां भार्यायां क्रियते। षोडशरात्रिपरिमितो रजोदर्शनोपलक्षितः स्त्रीणामवस्थाविशेषः ऋतुः।

(२) पुंसवनम्। एतद् गर्भचलनात् प्राक्।

(३) सीमन्तोन्नयनम्। एतत् षष्ठेऽष्टमे वा मासि। पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात् सकृदेव कर्तव्ये, न तु प्रतिगर्भम्।

(४) जातकर्म।

(५) नामकरणम्। एतद् एकादशेऽहनि।

(६) निष्क्रमणम्। एतत् चतुर्थे मासि।

( ७ ) अन्नप्राशनम् । एतत् षष्ठे मासि ।

( ८ ) चूडाकरणम् । एतद् यथाकुलाचारम् । सशिखं विशिखं वा, 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव' (ऋ. ५ अष्ट. १ अध्या. २२ व.) इति मन्त्रलिङ्गात् । प्रथमादिवर्षे उपनयनेन सह वा । एवं कर्णवेधोपि ।

( ९ ) उपनयनम् । एतद् गर्भाष्टमादौ ।

(१०) वेदारम्भः । (स्वशाखाध्ययनारम्भः)

(११) केशान्तकर्म । (गोदानम्) एतद् अध्ययनानन्तरम् ।

(१२) समावर्तनम् ।

इदानीं दुर्दैवविलसितादिना उपनयनादि समावर्तनान्ताश्चत्वारोऽपि संस्कारा एकस्मिन्नेवाहनि नाट्यन्ते हन्त ! । वेदव्रतानां तु नाटकमपिना ।

एतद् वाजसनेयिनां माध्यंदिनप्रभृतीनां पारस्करगृह्यसूत्रानुसारेण निवेदितम् । एवमन्यत्रापि स्वस्वगृह्यानुरुद्धैव व्यवस्था । उक्तं च—

'बहल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥' इति ।

यथा खलु पारस्करीयैरनवलोभनाख्यं कर्म न क्रियते, आश्वलायनीयैस्तु तत् क्रियते । तथा च स्मर्यते आश्वलायनीये गृह्यसूत्रे—'उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च' (१ अध्या. १३ कंडि.) इति । एवमन्यदप्युदाहार्यम् । गर्भाधानादिसंस्कारेषु गृह्यसूत्रतो यावती सामग्री घटते, तत्र स्वल्प एव व्ययः । ब्राह्मणभोजनेऽपि तथैव । 'ततो ब्राह्मणभोजनम्' (पा. गृ. सू. १ कां. २ कं.) इति व्याकुर्वाणैः कर्कादिभाष्यकारैरेवं व्याख्यातत्वात्—'एकद्विबहुषु समासस्य तुल्यत्वाद् एकस्मिन्नपि चार्थस्य कृतत्वाद् एकस्यैव भोजनम्' इति । विशेषस्तु गृहस्थाश्रमशिक्षायां द्रष्टव्यः ।

अथ हविर्यज्ञसंस्थास्तु—अग्न्याधेयम्, अग्निहोत्रम्, दर्शपौर्णमासौ,

आग्रयणी, वैश्वदेववरुणप्रघाससाकमेधशुनासीर्यसंज्ञितानि चत्वारि चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी च।

सोमयज्ञसंस्थास्तु—अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी वाजपेयश्च। राजसूयाश्वमेधौ तु क्षत्रियविषयावेव।

इत्येवमादयो यज्ञा न केवलं ब्राह्मणेषु तदुपजीवकेषु कल्पसूत्रेष्वेव वा श्रूयन्ते, किंतु मन्त्रेष्वपीति कणेहत्य निरीक्षणीयम्। तथाहि— 'प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च–' (तैत्तिरीयसंहि. १ कां. ६ प्रपा. ६ अनुवा.) इत्यादिना; 'राजसूयं वाजपेयं–' (अथर्वसंहि. ११ कां. २५ प्रपा. ४ अनुवा.) इत्यादिना च श्राविता यज्ञाः। तथा–' ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः॥' (ऋ. सं. १० मं. ६ अ. ७१ सू.) इत्यादिना, तथैव निरुक्तव्याख्यानेन (नैगमकां. १ अध्या. ३ पा.) च यथावेदं होता, मैत्रावरुणग्रावस्तुदच्छावाकाः; अध्वर्युः, प्रतिप्रस्थातृनेष्टृन्नेतारः; उद्गाता, प्रस्तोतृप्रतिहर्तृसुब्रह्मण्याः; ब्रह्मा, ब्राह्मणाच्छंस्याग्नीध्रपोतार इति यज्ञधूर्वहास्तत्सहायाश्च। तथैव च–"यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते, स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपलानि चैतानि वै दश यज्ञायुधानि" (तैत्ति. संहि. १ कां. ६ प्रपा. ८ अनु.) इत्येवमादीनि यज्ञपात्राणि। तथैव च पुनः– "यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद, प्रति यज्ञेन तिष्ठति, न यज्ञाद् भ्रंशत, आ श्रावयेति चतुरक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः" (तैत्ति. संहि. १ कां. ६ प्रपा. ११ अनु.) इति यज्ञशब्दस्य मुख्यविषयाश्च। अत एव च—

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु॥'

इति पठ्यते । इति सर्वं यथायथमाकलनीयम् ॥

पुनरपि निवेदयते—**यथायथेति** । शान्तिकं दुष्टफलप्रदमूलनक्षत्रादिजन्मशान्तिकर्म । पौष्टिकं दीर्घकालजीवनादिफलकदैवतकर्म । आदिशब्देन विनायकग्रहशान्त्यादि मङ्गलम् । अत्र संप्रति महता आडम्बरेण कर्माणि अनुष्ठीयन्ते, यतो बहुत्र व्ययामयसंनिपातेन यजमानस्य कण्ठगताः प्राणा जायन्ते । नालमियता पुनरकाण्डेऽप्युपनयनादौ साटोपं ग्रहशान्त्यादयः संयोज्यन्ते । तत्पद्धतयस्तु मूलविसंवादिन्यो नवनवा इत्यपरो विशेषः ॥ १३–१६ ॥

**द्वेषेण रागेण परार्थनेन**
**स्वर्णादिकोपायनवर्त्मना वा ।**
**आलोच्यद्भिः सुकृतप्रणाशं**
**न्याय्या व्यवस्थाऽपरथा न नेया ॥ १७ ॥**

**नूनं परस्मै विहितोऽपचारो**
**विचार्यमाणः फलति स्वकेषु ।**
**परस्पराघातविशीर्णसंधि-**
**मग्नौ न किं ब्रह्मकुलं समन्तात् ॥ १८ ॥**

अथ द्वाभ्यां धर्मशास्त्रव्यवस्थापकान्प्रत्याह—**द्वेषेणेति** । दायभागे प्रायश्चित्ते च पृच्छ्यमाने प्रायो वस्तुविस्रावका हेतवो धर्मशास्त्रिणां संघर्षे विजृम्भन्ते तत्र यथादर्शनं परिगणना । इह राज्ञ एवं प्रतिकर्तव्यं स्मर्यते—

'रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक् पृथग्दण्ड्या विवादाद् द्विगुणं दमम् ॥' (याज्ञ. २।४)

कुलतो जातितो देशतश्च संबन्धिना भूयते, तत्र कुत्रापि कृतमकार्यकरणमात्मनि परिणमति तावत् । स्थूलदृष्ट्यापि यदि युष्माभिरपक्रियते, तर्हि यथासमयमस्माभिरप्यपकरिष्यत इत्यतिरोहितम् । एवं सुन्दोपसुन्द-

न्यायेन परस्पराघाताभ्यां विशीर्णसंधित्वं द्रष्टव्यम् । ब्रह्मकुलमित्युपलक्षणम्, तेन यत्र अन्याय्यं तत्रैव प्रेक्षसम् । ब्रह्मशब्दस्य शास्त्रावेदकत्वे तु गौडमैथिलदाक्षिणात्यनिबन्धाः संप्रदायग्रन्था वा उदाहरणानि । अत्रेदं **कालिदासीयं** सूक्तमपि न विस्मर्तव्यम्—

' द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥' (रघु. १।२८)

तस्य शिष्ट एव बन्धुर्दुष्ट एव शत्रुरिति मल्लिनाथः । कुलजातिदेशसंबन्धनिकषोपलायितमिति तत्त्वम् ॥ १७-१८ ॥

**चिरंतनोदन्तनिदर्शनेन**
**सद्ब्रह्मचर्यादिमहाव्रतेन ।**
**निधीयतां माणवकव्रजेषु**
**प्रशस्तविद्याबलवीर्यभावः ॥ १९ ॥**

**विद्याविकासाय मठा विधेया-**
**स्तत्रोच्चकैश्छात्रगणा निधेयाः ।**
**तत्रापि शुद्धा विधयोऽवधेया**
**यैस्ते स्युरभ्युन्नतनामधेयाः ॥ २० ॥**

**आयोज्यतां सत्पथरञ्जनाय**
**मलीमसानां मतभञ्जनाय ।**
**विशेषिता शिष्यपरम्परासौ**
**हृद्यासु विद्यासु कलोत्तरासु ॥ २१ ॥**

**चार्वाकचार्वीकमकर्तनासु**
**वैतण्डिकानां मतिमर्दनासु ।**
**यथा क्रमेत प्रतिभा बटूनां**
**तथा विधा संप्रति साधनीया ॥ २२ ॥**

अथ चतुर्भिः कुलपतीन् ( ब्रह्मचारिशिक्षकान् ) प्रत्याह—**चिरंतनेति** ।

ब्रह्मचर्यं हि चिरंतनानां यशस्वितायां निदानम् । तत्र मार्कण्डेयादीनामुदन्तो दूरे तिष्ठतु । नातिचिरंतनो भगवान् पाराशर्योऽपि १८१ एतद्वर्षात्मके वयसि **महाभारतं** निर्ममे इति तत एव सिध्यति । दीर्घजीवी **बुद्धो** भारताद्बहिरपि भुवं निजकीर्तिकरण्डमकार्षीत् । अल्पेन कालेन **दयानन्दस्वामी** प्रायेण वेदार्थविरुद्धामार्यसंस्थां प्रातिष्ठिपदिति वर्तमानं वृत्तम् । ब्रह्मचर्यं हि अभ्युदयस्य निःश्रेयसस्य च निदानत्वात् सता विशेष्यते । एवं सद् ब्रह्मचर्यं हि अपूर्वं वस्तु शेषेणापि निःशेषेण वर्णयितुमशक्यमिति मन्यामहे । एतन्मूला एव उत्तरे गार्हस्थ्यादय आश्रमाः श्रूयन्ते स्मर्यन्ते च । तदिदं महाव्रतम् । महत्त्वं च विनेयेषु प्रशस्तविद्याबलवीर्यनिधायकत्वेन । विद्यन्ते आभिरिति विद्याः ज्ञानविज्ञानलक्षणाः । बलन्ते प्राणन्ति एभिरिति बलानि । वीर्यन्ते विक्रम्यन्ते एभिरिति वीर्याणि । एतानि प्रशस्तानि । प्राशस्त्यं च स्वस्वकार्यकरणे अव्याहतप्रसरत्वम् । तथा चाथर्वणिकाः पठन्ति–

'ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥
ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।
अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीषति ॥
ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ॥

( अथर्व. ११ कां. २४ प्रपा. ३ अनुवा. )

विद्या धर्मप्रधानाः वेदादयः, अर्थप्रधाना आयुर्वेदादयश्च, तासां विकासः शब्दतः अर्थतः क्रियातः प्रवृत्तिः तस्यै । मठाः विविक्तेषु प्रदेशेषु उच्चावचाः पाठावासशालाः विधेयाः वृत्तिरूपेण योजनीयाः । तत्र उच्चैः उन्नतभावेन गुरुदोषाच्छादनं छत्रं शीलं येषां ते छात्राः त्रैवर्णिका ऐतरवर्णिकाश्च तेषां गणाः वर्गा विधेया योग्यभोजनाच्छादनदानेन

स्थापनीयाः। तत्रापि उभयत्रापि बाह्याभ्यन्तरभावेन शुद्धा नितान्तनिर्मलाः विधयः अध्ययनाध्यापननिरीक्षणलक्षणाः अवधेया निभालनीयाः। यैः ते अस्माकं छात्राः लौकिके पारलौकिके च विषयजाते प्राप्तव्युत्पत्ति-संपदः अभ्युन्नतनागधेया यशस्विनो न केवलं पदवीमात्रभाजो भवेयुः। विनेयेषु विनयाधानं विनेतुः प्रतिभाप्रभावारोपणम्। तत इदमपि **मुरारि**सूक्तं नोपेक्षणीयम्—

'अविनयभुवामज्ञानानां शमाय भवन्नपि
प्रकृतिकुटिलाद् विद्याभ्यासः खलत्वविवृद्धये।
फणिभयभृतामस्तूच्छेदक्षमस्तमसामसौ
विषधरफणारत्नालोको भयं तु भृशायते॥'

अधिगतशास्त्रार्थाः शिष्टानामनुग्रहाय दुष्टानां निग्रहाय आदेष्टव्या इति तात्पर्यम्।

चारुः लोकसिद्धो वाको वचनं येषां ते चार्वाकाः लौकायतिकाः। पृषोदरादिः। चार्वी बुद्धिरिति संमानोत्सञ्जनसूत्रे (१।३।३६) **काशिका**काराः। तत्र चारुशब्दात् 'वोतो गुणवचनात्' (४।१।४४) इति ङीप् इति **पदमञ्जरी**काराः। 'पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति। स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥' इत्येवंप्रायाश्चार्वाकदुरुक्तयः **सर्वदर्शन**संग्रहे द्रष्टव्याः। ज्योतिषः स्तोमो ज्योतिष्टोमः। 'वसन्ते ज्योतिष्टोमेन यजेत' इति श्रौतयागविशेषः। 'ज्योतिरायुषः स्तोमः' (८।३।८३) इति स्तोमशब्दावयवस्य सस्य षः। वैतण्डिकाः जल्पवितण्डापरायणाः। 'यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। स प्रतिपक्षस्थापनाहीनो वितण्डा।' इति (न्या. द. १।२।२-३) परमतनिराकरणपूर्वकस्वमतस्थापनरूपो वाक्यभेदो जल्पः, स्वपक्षाव्यवस्थापनेन परपक्षमात्रनिराकरणं वितण्डेति तात्पर्यम्। वस्तुतस्तु "तत्त्वाध्यवसायसंरक्षणार्थं

जल्पवितण्डे, बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" (न्या. द. ४ । २ । ५० ) इति ॥ १६-२२ ॥

भूयांसि शास्त्राणि न तानि सर्वै-
ज्ञातुं तथा श्रोतुमपि क्षमाणि ।
तस्मादितः सारमुदारभावं
निरूपयध्वं जनताहिताय ॥ २३ ॥

प्रायोऽधुना संस्कृतपुस्तकेभ्यो
वैमुख्यभाजो बहवो हि ते तु ।
प्रबोधनीयाः खलु राजवाणी-
वयस्यया दैशिकभाषयापि ॥ २४ ॥

प्रायेण सर्वप्रणयैकपात्रं
साधारणो धर्म इति प्रसिद्धम् ।
असावसाधारणधर्मलक्ष्म्या
संक्राम्यतामङ्ग ! विनेयवर्गे ॥ २५ ॥

यथा मिथः श्लिष्टविशिष्टतत्त्वं
प्रारब्धमुद्योग इति द्वयं हि ।
तथैव धर्मद्वयमेतदार्या !
भिन्नेतरद् भिन्नमिवावभाति ॥ २६ ॥

अथ चतुर्भिरुपदेशकान्प्रत्याह—भूयांसीति । उदारभावम्—

'अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥'

इत्येवमादिनिरूपितं मनसा कर्मणापि, न तु वाचैव विपुलहृदयाकूतमिति तत्त्वम् । सारं—हृदयग्रन्थिभेदकं विश्वजनानां लौकिकं पारलौकिकं वा प्रमेयम् । यद् विना आरभमाणोऽपि प्रारम्भोऽनेकधा भ्रश्यति, येन विना दत्तहस्तावलम्बनमपि भारतं बहुधा विषीदति, तस्य खलूदारभावस्य

सद्वाचाय न केवलं देशिक-वैदेशिक-विद्यापदवीलाभमात्रमेव प्रभवति; किं तु मनोनैर्मल्यनिदानं परमेश्वरोपासनमपि । अत एव **माध्यंदिनाः** पठन्ति—

'यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥'

( य. सं. ३४ । १–६ मं. )

एवं सौमनस्यं भजमानानां समवायः समुदेति । तथा च **बह्वृचा** अधीयते—

'समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥'

( ऋ. सं. १० मं. १२ अ. १६१ सू. )

भारतवर्षे ( हिन्दुस्थाने ) नानाविधासु देशभाषासु हिन्दुप्रकृतितया व्यापकतया च हिन्दीभाषैव मुख्या । तत्र तत्र देशे सा सापि भाषा । राजभाषा तु राजप्रकृतित्वात्तत्तत्काले शेषैव शिरोभिरुह्यत एव । परिशीलितराजभाषेण स्वाशयो देशभाषया वक्तुं लेखितुं वा यन्न पार्यते तन्महच्चित्रम् । राजभाषया प्रतिदशकं नवानां वेषोऽवश्यमन्यथा विधीयते, कतिपयानामाचारोऽपि खिलीक्रियते, यदि तावत्सपत्नीव देशभाषापि पीड्यते, तर्हि किमवशिष्येत ? धर्मभाषा संस्कृतं तु पूर्वमेव मृतभाषेति परिभाष्यते पण्डितंमन्यैः । इत्थं च सामञ्जस्याय **प्रायोऽधुने**त्यारभते । अन्यत्राप्यवादि—

'वेषं भाषां तथाचारं शास्त्रं च विविधागमम् ।
संरक्षता यथायोगं जन्मभूः सत्कृता भवेत् ॥'

प्रत्युपकारवैमुख्ये तु कृतघ्नता शिरस्यापतति ।

साधारणी असाधारणीति धर्मपद्धतिद्वयी सुप्रसिद्धा तावत् । तत्र प्रथमा साधारणत्वेव सर्वोपयोगिनी, द्वितीया नियतव्यक्तियोगिनी ।

कमपि समाजमाश्रयन्नेताभ्यां वियुज्यमानो न संमानस्थानं लभत इति तात्पर्यम् । इह साधारणधर्मदिक्—

'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥' (म. १० । ६३)

असाधारणधर्मदिक्—संध्योपासनादि । पूर्णषाड्गुण्यमहिनापि भगवान् रामचन्द्रः कृष्णचन्द्रो वा यत्संध्योपासनादि कर्म न ह्यहासीदिति पुराणेतिहासतो व्यक्तम् ।

साधारणासाधारणधर्मयोरिव प्रारब्धोद्योगयोः संहत्य कार्यकारितेति तात्पर्यम् । स्मर्यतेऽपि—

'दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥
केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः ।
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥
यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥'

(याज्ञ. १ । ३४९-३५१)

अहो उपदेशकाः, महोपदेशकाः, महानहोपदेशका वा जाग्रतु । उपदेशस्तु विविदिषोदय एवावतिष्ठते, सोऽयमनवतिष्ठमानः फलिष्यतीति मीमांसान्तरम् । इत्थं सत्यपि त एत इदानीं रागरञ्जितकरणा आह्वानेन तदाभासेन तदाघ्राणेन वा समाकृष्टा यानोन्मुखचरणा यत्र क्वापि ताण्डवितबाहून्मिषितविज्ञापनमुद्राः श्रुतिस्मृतिपुराणकथोपकथाव्याख्यानप्रणादैरधिसभं जनताश्रवणविवरैः सार्धमाशारन्ध्राणि पूरयन्ति । श्रुत्यादिभिस्त्वेवं श्राव्यते—

"तद्धोभये देवासुरा अनुबुबुधिरे; ते होचुः—हन्त तमात्मानमन्विच्छामः, यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति, सर्वांश्च कामान्, इतीन्द्रो हैव देवानामभिप्रवव्राज, विरोचनोऽसुराणाम्, तौ हासंविदानावेव

'समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः, तौ ह प्रजापतिरुवाच, किमिच्छन्ताववास्तामिति—''
( छां. उ. ८ प्रपा. ७ खं. ) ।

'नापृष्टः कस्यचिद् ब्रूयान्नचान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेद् ॥
अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥'
( म. २ । ११०-१११ )

अर्जुनं प्रति भगवान् वासुदेवोऽपि—
'तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥' ( गी. ४ । ३४ )

बहुत्र पुनरेवमुपलभ्यते—
'प्रत्यक्षीक्रियतेऽद्य वेदपुरुषो व्याख्याकशालाञ्छितो
दृश्यन्ते स्मृतयोऽपि दुर्बलदशाः स्वेच्छानियोगाङ्किताः ।
तर्कोद्भावनया पुराणघटनोपन्यासतां नीयते
क्षुभ्यद्धर्ममृगान्तरेषु वलते शार्दूलविक्रीडितम् ॥ १ ॥
साध्यन्ते परमोहनाय शतधा साध्यानि वेदादितो
वेदार्थेष्वपि साध्यभङ्गसमये श्रद्धाऽन्यथोत्पाद्यते ।
आपातामलवस्तुसंगतिकथाव्याजृम्भणाडम्बरै-
राशूत्पादितगौरवं प्रतिसभं निःशङ्कमाभाष्यते ॥'
एतौ मम ॥ २३-२६ ॥

(परस्परद्वेषविशेषमूला
ये सन्त्युपास्तौ विविधा विकल्पाः ।
श्रुतीः स्मृतीः पूर्वकृतीः प्रदर्श्य
ते वारणीयाः प्रतिभानवद्भिः ॥ २७ ॥

विष्णुः शिवो वापरदैवतं वा
फलाविशेषेऽपि यथाभिलाषम् ।
तद्ब्रह्मदृष्ट्या समुपासनीयं
गलत्प्रसादं परमादरेण ॥ २८ ॥

अद्वैतकं द्वैतविशिष्टशुद्ध-
निरूपितं द्वैतमिति प्रभिन्नम् ।
निम्बार्करामानुजवल्लभार्य-
मध्वा यथाशासनमामनन्ति ॥ २९ ॥

पूर्वः परः स्यात्पर एव पूर्वः
पक्षो यथावादमुदारवाचाम् ।
न तावता सिध्यति सत्यभावः
प्रकर्षतन्त्रा हि रणे जयश्रीः ॥ ३० ॥

न विष्णुशक्त्यादपरोऽत्र लक्ष्यो
न वस्तुतो वैष्णवयोगिताऽन्या ।
तथापि किंचिद्भ्रमकं निरूप्य
परस्परं दर्शनमारभन्ते ॥ ३१ ॥

अथ पञ्चभिरुपासकान्प्रत्याह—**परस्परेति** । अत्रैषा विरोधप्रशमन-दिक्—ईश्वरो निराकारः साकारश्च मीमांस्यते । तत्र निराकारो निरवयवः, साकारः सावयवः । उभयत्राप्यलौकिकत्वमस्यास्थीयते । तथा निराकारतायां श्रुतयः—

"अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते, स आत्मा, स विज्ञेयः ।"
(माण्डूक्योप. ७)

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः ।"
(मुण्डकोप. १।१)

'एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥' (श्वेताश्वतरोप. ६ अ. । ११)

'न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥' (श्वेता. ६ । ८)

'अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥' (श्वेता. ३ । १६)

'अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥' (कठोप. १ । ३)

साकारतायां तु नैकविधाः श्रुतयः । तत्रैका विधा—

'विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतो बाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रै-
र्द्यावाभूमी जनयन् देव एकः ॥' (श्वेता. ३ । ३)

द्वितीया विधा—

'यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं

- स नो बुद्धया शुभया संयुनक्तु ॥' (श्वेता. ३ । ४)

तृतीया विधा—

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥'(मुण्डकोप. २ । १)

एवमन्यापि विधा । अत्राकारः चक्षुरादिश्रवणेन कल्प्यत एव सुखप्रतिपत्तये, न पुनः पुरुषादिविधया नियम्यत इति सूक्ष्मेक्षिकया निरीक्षणीयम् । तथाच भगवान् **पतञ्जलिः**—'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । तत्र निरतिशयं सर्वज्ञबीजम् । स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।' (१।२४-२६) स एव पुनस्तस्य नामधेयं प्रणिधानं च सफलं सूत्रयामास—'तस्य वाचकः प्रणवः । तज्जपस्तदर्थभावनम् । ततःप्रत्यक्चेतनाधिगमोऽन्तरायाभावश्च।' (१।२७-२९) । एवं सावित्र्यपि तस्य वाचिका । सुवति कर्मणि प्रेरयतीति सविता । 'प्रचोदयात्' इति मन्त्रवर्णाद् अन्तर्यामी । तस्य इयं सावित्री, स्त्रीत्वमृचो विशेष्याभिप्रायेण । अथवा गायन्तं त्रायते; 'त्रैङ् पालने' 'आतोनुपसर्गे—' (३ । २ । ३) इति कः । किं वा गायेन गानेन त्रायत इति गायत्री भावविकारेषु उत्पत्ति स्थिति संहारपरिग्रहेण ब्रह्मविष्णुरुद्रपदाभिधेया, आकारचिन्तासु च शक्ति शक्तिमतोरभेदविवक्षया ब्रह्माणी-वैष्णवी-रौद्रीति व्यवह्रियमाणा देवतेति । ईष्ट इतीश्वरापरपर्यायं बृंहतीति ब्रह्मैव देवतानामेका देवता, देवतास्तु पुनरनेकाः, नैवं ब्रह्म, तच्चैकम् । 'अथातो ब्रह्मजिज्ञासा' (१।१।१) इति सूत्रयता वेदव्यासेन 'जन्माद्यस्ययतः' (१।१।२) इत्येकस्मादेव ब्रह्मणो जगतो जन्म स्थितिभङ्गं स्मृतम् । इत्थमेकस्मात् कारणब्रह्मणो जायमानं जगतो जन्मस्थितिभङ्गं भावविकारगत्या ब्रह्मविष्णुरुद्रैरुपचर्यते, कारणब्रह्मण एव वा ब्रह्मविष्णु-रुद्रप्रभृतीनि नामानि । तथा च श्रूयते **मैत्रायण्युपनिषदि**—

"अथ यो ह खलु वा वास्य राजसोंऽशोऽसौ, स योऽयं ब्रह्मा, अथ यो ह खलु वा ग्रास्य तामसोंऽशोऽसौ, स योऽयं रुद्रः, अथ यो ह खलु वा घास्य सात्त्विकोंऽशोऽसौ, स योऽयं विष्णुः" इति।

इदमखिलमुपासनादृष्टया दशश्लोकठवधे मयोपनिबद्धम्—

'तदोंपदार्थस्य वरेण्यमेतकद्

देवस्य भर्गः सवितुः प्रधीमहि।

ब्रह्मादिरूपत्रितयोपसंहृति-

र्यो नो धियः कर्मभुवि प्रचोदयात्॥

ब्रह्मत्वमापादनरागरञ्जितो

विष्णुत्वमाप्यायनकेलिकर्मठः।

रुद्रत्वमादानकलावलम्बितो

योऽभ्येति मायीव स साधु मृग्यताम्॥'

इत्थं च निराकारं ब्रह्मैव उपास्तिसौकर्यार्थं साकारं मीमांस्यमानं श्रूयत इति लभ्यते। एष एवाशयोऽन्यत्र स्फुटमभिधीयते—

'अतीतः पन्थानं तव च महिमा वाङ्मनसयो-

रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि।

स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः

पदे त्वर्वाचीने पतति न मनः कस्य न वचः॥'

गीतास्वस्मत्पदार्थ इवेह युष्मत्पदार्थ आत्मानुसंधेयः। सोऽयमैश्वर आकारो विविधं राजमानत्वाद् विराट्पदवाच्यः। स हि तावत् पुराणेतिहासागमेषु नानाभङ्ग्या प्रतायते—आकारआकृतिर्व्यक्तिरिति गुणानुयोगितया भूर्तं न व्यभिचरन्ति। एवमाकारप्रभृतयो नार्थान्तरम्। जात्याकृतिव्यक्तयः पदार्थ इत्यादि सूत्रयन् भगवान् **गौतमोऽप्यत्र** संवादी। 'व्यक्तिर्गुणविशेषाश्रयो मूर्तिः। आकृतिर्जातिलिङ्गाख्या। समानप्रसवात्मिका जातिः।' (न्या. द. २।२।६३-६६) लोकादृष्टेन

द्विपदनिकायेऽवतीर्णो भगवान् **वामनो रामः कृष्णश्च**, चतुष्पद-निकाये **वराहश्च**, द्विपदचतुष्पदाविलक्षणे **नृसिंहश्च**, अण्डजनिकाये **मत्स्यश्च**, अवतरिष्यन् **कर्की** ( कल्की ) च, कर्कः श्वेताश्वः कल्को दम्भः शाठ्यं च, एवमाविर्भूता भगवत्यो महाकालीमहालक्ष्मीमहासरस्वत्यश्च । इमान्यपि वामनरामकृष्णादिनामानि विष्ण्वादिनामवद् ब्रह्मणो नामानि मन्तव्यानि, इतरथा निरंकुशैश्वर्यायोगे तत्तदुपासनाविधायकानां वाक्यानां वैयर्थ्यमापतति । न हि पार्थिव इव सांकुशैश्वर्यः कश्चिदागमेषूपास्यत्वेनोपदिश्यते । यदपि एकत्र एकस्य प्राधान्यं परत्र तस्यैव उपसर्जनत्वम्, तदपि पारमार्थिकदृष्ट्या भिन्नस्वभावानां प्रमातृणां चित्तावतरणमात्रफलकम् । नहि भो ! एकं वस्तु वस्तुतोऽन्यथान्यथा नीयमानं परमार्थसद् भवितुमर्हति । अत एव मात्रेव हितकारिण्या श्रुत्या भेददृष्टिर्वार्यते—

'इन्द्रं मित्रं वरुणमग्निमाहु-<br>
रथो दिव्यः स सुपर्णो गरुत्मान् ।<br>
एकं सद् विप्रा बहुधा वदन्ति<br>
अग्निं यमं मातरिश्वानमाहुः ॥'

( ऋ. सं. २ अ. ३ अ. २२ व. । अ. सं. ६ कां. २१ प्रपा. ५ अनु. )

**कैवल्योपनिषदापि** श्राव्यते—

'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।<br>
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥' ( १खं.८)

इदमखिलं निरुपाधिकं भगवती **रामतापनी** स्पष्टमुपदिशति—

'रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।<br>
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥<br>
चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।<br>
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥

रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादिकल्पना ।
द्वि चत्वारि षडष्टासां दश द्वादश षोडश ॥
अष्टादशापि कथिता हस्ताः शंखादिभिर्युताः ।
सहस्रान्तास्तथा तासां वर्णवाहनकल्पना ॥
शक्तिसेनाकल्पना च ब्रह्मण्येवं हि पञ्चधा ।
कल्पितस्य शरीरस्य तस्य सेनादिकल्पना ॥' ( रा. पू. ता. ६-१० )

पुनरप्याह **विष्णुरिति** । यद्यपि 'वेवेष्टि' इति विष्णुः । 'शिवयति' इति शिवः—इत्यादिनीत्या विष्णुशिवपदार्थौ परस्परं संसृज्यमानावेकामेव व्यक्तिमाक्षिपतः, तथापि येषां दृशा सेव्यसेवकाविव, किं वा हेयोपादेयाविव तौ, यन्मूलिका दुर्विवेकमूढानां कलिकलिका नवनवा उन्मिषति ? तदुपशमायैतत्पुनरावेद्यते । इत्थं विष्णुः शिवो वा । 'यथाभिमतध्यानाद्वा' ( यो. सू. १।३९ ) इति पद्धत्या अपरदैवतं वा । तदिदं श्रुतिस्मृतिभिरुपदिश्यमानमेव, न त्वैच्छिकम्, अनवस्थापातात् । फलाविशेषेऽपि, फलानि पुरुषैरर्थ्यमानानि मुक्त्यवसानानि तदविशेषेऽपि । फलानां तरतमभावराहित्येऽपीत्यर्थः । नह्याकारभेदाद् आकारिभेद इहाश्रीयते, फलदातुरेकत्वेनाभ्युपगमादिति परमार्थः ( वे. द. ३।२।३८-४१ ) यथाभिलापम् । 'भिन्नरुचिर्हि लोकः' इति तत्त्वम् । 'तद्ब्रह्मदृष्ट्या समुपासनीयम्' इति ब्रह्मदृष्टयधिकरणस्मारणमुपासनाप्रपञ्चार्थम् ( वे. द. ४।१।५ ) उपासना हि विजातीयप्रत्ययेन अनन्तरितः सजातीयप्रत्ययप्रवाहः । यत्र विष्णुशिवादिपदार्थो विकल्पतया परिच्छिन्नःसमुपास्यते सा प्रतीकोपासना । प्रतीकोऽवयवः, ततः खण्डोपासनेति परिणमति । यत्र पुनः स पदार्थो ह्यपरिच्छिन्नः, सा अखण्डोपासनेति । 'गलत्प्रमादं-परमादरेण' इत्युपास्तौ क्रियाविशेषणकरणे—'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ( यो. सू. १।१४ ) इत्यादिपरिग्रहार्थे । उपासनासिद्धिषु देवतासांनिध्यमपि जायते । तथा च स्मर्यते **पातञ्जलयोगदर्शने** साधन-

पादे—'स्वाध्यायादिष्टदेवतासंप्रयोगः' (२।४४) तदेतन्महाभारते शान्तिपर्वणि मोक्षधर्मे नारदं प्रति नारायणेन स्पष्टमुच्यते—

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ॥' (३४० अध्या. ४५ श्लो.)

एतदेव 'अन्तस्तद्धर्मोपदेशात्' (वे. द. १।१।२०) इत्यादिसूत्रभाष्यतोऽपि व्यक्तम् । एतेन—

'एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ।
परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका ॥' (स. श. १३।६)

इत्येवमादि व्याख्यातम् । संप्रज्ञातपूर्वको ऽसंप्रज्ञातो योग इव साकारोपासनापूर्विका निराकारोपासनेति रहस्यम् । अत एव—

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्ते ऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥'

इति कल्पतरुणोपदिश्यते ।

इत्थं च साकारा निराकारेति उपासनाद्वयी—अपि उपासकोपास्यसंमतेति दर्शितम् । तत्र आकारभेदादेव उपास्यभेदो नतु पारमार्थिक इत्यपि दर्शितम् । आकारभेदोऽपि उपासकानुग्रहार्थमुपास्यलीलयैव यथायथमित्यपि च दर्शितम् । तत्र आकारभेदादेव उपास्यभेदो नतु पारमार्थिक इत्यपि दर्शितम् । तर्हि उपासनासु उपास्यमूलकः कलहावतारः उपासकस्य अभ्युदयनिःश्रेयसप्रतिबन्धीति प्रत्यक्षं चक्षुष्मताम् । प्रकृते गुणभेदेन विष्णुशिवयोर्मायिकविग्रहभेदेऽपि तयोरसाधारणः स्नेहबन्धो महाभारते स्मर्यते—

'यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु ।
नावयोरन्तरं किंचिन्मा ते भूद्बुद्धिरन्यथा ॥

'अद्यः प्रभृति श्रीवत्सः शूलाङ्को मे भवत्वयम् ।
मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ॥'
('शां. मो. ३४३ अध्या. १३३-१३४ श्लो.)

अहो इतोप्यधिकम्—

'अनस्तमितभारूपस्तेजसां तमसामपि ।
य एकोऽन्तर्यदन्तश्च तेजांसि च तमांसि च ॥
स एव सर्वभावानां स्वभावः परमेश्वरः ।
भावजातं हि तस्यैव शक्तिरीश्वरतामयी ॥
शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति ।
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव ॥'

इत्यादिसिद्धान्तमुन्मीलयितुं संसृज्यमानस्य भगवतोऽर्द्धनारीश्वरस्येव विष्णुशिवस्य समाहारमुपपादयितुं चेतोहारि हारिहरं रूपमजनिष्ट । यस्यागमेषु—'तारो माया प्रासादः शंकरनारायणाय नमः प्रासादो माया तारः' इति बीजमन्त्रोद्धारः । 'शूलं चक्रं पाञ्चजन्यमभीतिं दधतं करैः । स्वस्वभूषाच्छनीलार्द्धदेहं हरिहरं भजे ॥' इति च ध्यानम् । यस्य च ऋषिः (साक्षात्कर्ता) नारदः स्मर्यते । 'इह **हरिवंशे** विष्णुपर्वणि १८० अशीत्यधिकशततमेऽध्याये—' 'शिवाय शिष्णुरूपाय विष्णवे शिवरूपिणे—' इत्येवमादि **मार्कण्डेयेन** कृतो हरिहरात्मकस्तवोऽपि द्रष्टव्यः । अत एव केनचिदुक्तम्—

'उभयोरेका प्रकृतिः प्रत्ययभेदाच्च भिन्नवद्भाति ।
कश्चिन्मूढः कलयति हरिहरभेदं विनाशास्त्रम् ॥'

हरतीति हरिः=हरः । पूर्वत्र 'अच इः' (उ. ४ । १३९)-परत्र 'पचाद्यच्' (३ । १ । १३४) ॥

पुनरप्याह—**अद्वैतकमिति** । द्वैतादिविशेषितमद्वैतादि । ततः, निम्बार्काचार्या 'द्वैताद्वैतमिति; रामानुजाचार्या विशिष्टाद्वैतमिति; वल्लभा-

चार्याः शुद्धाद्वैतमिति, मध्वाचार्या द्वैतमिति प्रतिपद्यन्ते। एतेषां कालक्रमस्त्वेवं लभ्यते—

(१) विशिष्टाद्वैतवादिनां श्रीरामानुजाचार्याणां जन्मसंवत् १०७३ ।

(२) द्वैताद्वैतवादिनां श्रीनिम्बार्काचार्याणां स्थितिसंवत् १२१९ ।

(३) द्वैतवादिनां श्रीमध्वाचार्याणां मृत्युसंवत् १२५५ ।

(४) शुद्धाद्वैतवादिनां श्रीवल्लभाचार्याणां जन्मसंवत् १५३६ ।

अथ किं तावदद्वैतम्? यद् द्वैतादिना विशिष्यमाणं द्वैताद्वैतादिभूमिकां भजते। 'अदृष्टमव्यवहार्य—' इत्येवमादिश्रुतिनिरूपितमिति विज्ञेयम्। तदेतदद्वैतं विश्वमुपकर्तुं हृदयंगमया वेदान्तप्रक्रियया भगवता **वाल्मीकिना वासिष्ठे महारामायणे** पुनः पुनरुपश्लोकितम्। तदेव श्रौत्या मीमांसया दर्शयितुं भगवता **पाराशर्येण** ब्रह्मजिज्ञासाशास्त्रमुपदिष्टम्। यत्र जिज्ञासितं ब्रह्म निर्विशेषं निर्णीतम्। श्रूयते हि—

'पराञ्चि खानि व्यतृणत्स्वयंभू-
स्तस्मात्पराङ् पश्यति नान्तरात्मन्।
कश्चिद् धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन्॥' (कठ. ४।१)

सविशेषं ब्रह्म तु ध्येयाकारम्। इदमद्वैतं महाभारतादिष्वपि यथावसरं निरूप्यमाणं कर्णेहत्य निरीक्षणीयम्। इहेत्थं पञ्चकृत्वः श्रूयते—

"यद् वाचानभ्युदितं, येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि, नेदं—यदिदमुपासते॥
यन्मनसा न मनुते, येनाहुर्मनो मतम्।
तदेव ब्रह्म त्वं विद्धि, नेदं—यदिदमुपासते॥
यच्चक्षुषा न पश्यति, येन चक्षूंषि पश्यति।
तदेव ब्रह्म त्वं विद्धि, नेदं—यदिदमुपासते॥
यच्छ्रोत्रेण न शृणोति, येन श्रोत्रमिदं श्रुतम्।

तदेव ब्रह्म त्वं विद्धि, नेदं-यदिदमुपासते ॥
यत्प्राणेन न प्राणिति, येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि, नेदं-यदिदमुपासते" ( केन. १ । ४-८ )

निराकारं=निर्गुणं, साकारं=सगुणमिति द्विविधं ब्रह्म । तत्र पूर्वमेव निर्विशेषं मुख्यं जिज्ञासाकर्मभूतम्, परं तु सविशेषं गौणमिति प्रत्यापयितुं 'तदेव' इत्युत्तरार्धस्य पञ्चावर्तनानि । इदमेव ब्रह्म तावत् 'आदित्यो ब्रह्म' ( छां. ३ । १६ ) इत्येवमादिषु प्रतीकोपास्तिषु उत्कर्षाधानार्थमाम्नायते । यन्मूलकं 'ब्रह्मदृष्टिरुत्कर्षात्' (वे. द. ४ । १ । ५ ) इति सिद्धान्तितम् । आदित्यप्रभृतौ ब्रह्मदृष्टिरिव, न पुनर्ब्रह्मण्यादित्यदृष्टिरादिश्यते, अपकर्षप्रसङ्गात् । तेन पुराणेतिहासोपबृंहितेषु परमेश्वरलीलाविग्रहेषु यथाकार्यमतिशयतरतमभावस्मरणाद् ब्रह्मदृष्टयो व्याख्याताः । तत एव 'तत्र निरतिशयं सर्वज्ञबीजम्' ( १ । २५ ) इति **योगवार्तिके**—

'ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः ।
ततो न्यूनाश्च मैत्रेय देवा दक्षादयस्ततः ॥
ब्रह्मविष्णुशिवादीनां यः परः स महेश्वरः ।'

इत्यादि संदृब्धम् । तदेतद्ब्रह्मज्ञानं न लौकिकघटपटादिज्ञानमिव ज्ञातृज्ञेयभेदविजृम्भितम्, किं तु निर्गलितभेदबन्धो ब्रह्मभाव इति । तथा च श्रूयते—'ब्रह्म वेद ब्रह्मैव भवति' ( मु. ३ । २ ) "यत्र वा अस्य सर्वमात्मैवाभूत्, केन कं जिघ्रेत्, केन कं पश्येत्—" ( बृ. २ । ४ ) लौकिकप्रक्रियायां तु "यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति, तदितर इतरं जिघ्रति—" ( बृ. २ । ४ ) एवं ब्रह्मसाक्षात्कारात् प्राग् घटपटादीनामबाधः, अर्वाग् बाध इति व्यवस्थीयते । अत्र स्मर्यन्ते यथायथमेते श्लोकाः—

'देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥'

'अदृश्यं नेत्रवद् ब्रह्म द्रष्टृत्वं चास्ति नेत्रवत् ।
स्वात्मन्येवोपलम्भोऽस्य दर्शनं घटवन्न तु ॥'
'यदि वाचनिकाज्ज्ञानान्मुक्तिः स्याद् भावनां विना ।
शरीर-मानसैर्दुःखैर्मुच्येरन् सर्वजन्तवः ॥'

तदेतदेव ब्रह्म, **छान्दोग्ये** षष्ठप्रपाठके उद्दालक आरुणिः श्वेतकेतुं पुत्रम्—'ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो' ( ६ । ८-१६ ) इत्येवं नत्र वारानात्मत्वेन ग्राहितवान् । यस्मात्—'अयमात्मा ब्रह्म' (बृ. २ । ५ । १९) तस्मात्—'तदात्मानमेवावेदहं ब्रह्मास्मीति—' (बृ. १ । ४ । १०) 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः—' ( बृ. ४ । ५ । ६ ) इति । "आत्मेति तूपगच्छन्ति, ग्राहयन्ति च" ( वे. द. ४ । १ । ३ ) इति च । सोऽयमात्मैव वागर्थसृष्टिहेतुरिति दिक् ।

अद्वैतानुसारि मायादि वस्त्वपि तत्र तत्र दृश्यते । तथाहि **श्वेताश्वतराणां** मन्त्रोपनिषदि—'य एको जालवानीशत ईशनीभिः' ( ३ । १ ) 'एकैकं जालं बहुधा विकुर्वन्' ( ५ । ३ ) 'अस्मान्मायी सृजते विश्वमेतत्तस्मिँश्चान्यो मायया संनिरुद्धः' ( ४ । ९ ) मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' ( ४ । १० ) । **महाभारते**—'माया ह्येषा मया सृष्टा—' ( मोक्ष. ३४० । ४५ ) । **ब्रह्मसूत्रे**—'मायामात्रं तु—' ( ३ । २ । ३ ) इत्यादि । अत्र जालमायाशब्दौ समानार्थौ । अन्यत्रापि जालपदार्थ ऐन्द्रजालिके प्रसिद्ध एव । एवं मायापि; यतो मायी, मायावी, मायिक इति प्रथते । उक्तं च—'अघटितघटनापटीयसी माया ।'

**सौरेऽपि—**

'नासद्रूपा न सद्रूपा-माया नैवोभयात्मिका ।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी ॥'

सेयमनिर्वचनीयेत्यभिलप्यते । तत्र न सर्वथा निर्वचनागोचरोऽनिर्व-

चनीयपदार्थः, किंतु स परमार्थसतो ब्रह्मणः, तथा सर्वथा सत्तास्फूर्त्ति-वर्जिताच्छशशृङ्गाच्च विलक्षणः पारिभाषिको द्रष्टव्यः। तेन 'नानिर्वचनीयस्य तदभावात्' (सां. द. ५। ५४) इति सांख्योक्तं दूषणमपि दूरीभूतम्। अनिर्वचनीयख्यातौ तु 'नासदासीन्नोसदासीत्तदानीं—' (ऋ. सं. १० मं. ११ अ. १२६ सू.) इत्येवंजातीयाः श्रुतयोऽपि मानमितिदिक्।

इदमद्वैतदर्शनं वेदान्तानां वास्तविकं तत्त्वं प्रतीयते। यद्येवं नाभविष्यत्तर्हि दृष्टिसृष्टिवादपुरस्कारेण वासिष्ठमहारामायणं द्वात्रिंशता सहस्रैः कथमकरिष्यद् **वल्मीकजन्मा** । ततो वसिष्ठानुसारिणा पाराशर्येण भवितव्यम्। एवं तच्छिष्यपरम्पराप्रविष्टेन **शंकराचार्येण** शारीरकेण पाराशर्याभिमतो न तद्विरुद्धो ब्रह्मसूत्राणामाशयो निरूपित इति पर्यालोचनं नासमञ्जसम्॥

अथ बहुविधेषु ब्रह्मसूत्रभाष्येषु रामानुजाचार्यप्रभृतीनां चतुःप्रस्थानानां वैष्णवानां श्रीभाष्यप्रमुखाणि चत्वारि भाष्याणि । तत्र द्रविडभाषोपज्ञं **श्रीभाष्यम्**। यत्र विशिष्टाद्वैतं दर्शितम्। यन्मुखबन्धोऽयम्—

"अखिलभुवनजन्मस्थेयभङ्गादिलीले
विमतविविधभूतव्रातरक्षैकदीक्षे।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन्शेमुषी भक्तिरूपा॥ १॥
पाराशर्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसंजीविनीम्।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम्॥ २॥

भगवद्**बोधायन**कृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः, तन्मतानुसारेण सूत्राणि व्याख्यास्यन्ते" इत्यादि । इह व्याख्याकारः **सुदर्शनाचार्यः**—'बोधायनेन ह्यतिविस्तीर्णा वृत्तिः कृता। **द्रविड-**

भाष्यकारादयोऽपि परपक्षप्रतिक्षेपावनादरेण अतिसंक्षिप्तान् ग्रन्थान् रचयन्' इत्याह स्म ॥ **न्यायकोशकृन्माधवभीमाचार्यस्तु**— "शापवशाच्छूद्रजन्मप्राप्तेन **शठकोप**नाम्ना (नम्माळ्वार) द्रविडेन द्रविडभाषया वेदान्तप्रबन्धा विरचिताः । ततस्तान् प्रबन्धाननुरुद्ध्य, **बोधायनाख्यद्रविडब्राह्मण**कृतां ब्रह्मसूत्रवृत्तिं च सहकृत्य गीर्वाणभाषया ब्रह्मसूत्रस्य श्रीभाष्यमकारि **रामानुजाचार्येण**" इति विशेषमवादीत् ॥

विशिष्टाद्वैतं नाम; विशिष्टं च विशिष्टं च विशिष्टे, विशिष्टयोः अद्वैतमिति । विशिष्टं तु व्याकृतनामरूपविशिष्टं चिदचित्, अव्याकृतनामरूपविशिष्टं चिदचिदिति । सूक्ष्मचिदचिदात्मकशरीरविशिष्टस्य कारणभूतस्य परमात्मनः, स्थूलचिदचिदात्मकशरीरविशिष्टस्य कार्यभूतस्य परमात्मनश्चैक्यमिति वा । अत्र नियम्यनियामकभावेन शरीरशरीरिभावो वेदितव्यः; तत्र चिदचिदात्मकं शरीरं नियम्यम्, तद्विशिष्टः शरीरी नियामक इति द्रष्टव्यम् । तथा च श्रूयते—"यः पृथिव्यां तिष्ठन्, पृथिव्या अन्तरो, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयत्येष स आत्माऽन्तर्याम्यमृतः" (बृ. ३ । ७ । ३) इत्यादि । द्वैतविशिष्टमद्वैतं विशिष्टाद्वैतमित्यन्ये ।

इह चिदचिदीश्वरभेदेन, भोक्तृभोग्यनियामकभेदेन वा व्यवस्थाप्यमानास्त्रयः पदार्था अङ्गीक्रियन्ते । तथा चोक्तम्—

"ईश्वरश्चिदचिच्चेति पदार्थत्रितयं, हरिः ।
ईश्वरश्चित इत्युक्ता जीवा, दृश्यमचित्पुनः ॥"

तत्र चिच्छब्दवाच्या जीवात्मानः परमात्मनः सकाशाद् भिन्ना नित्या अणुपरिमाणाश्च । तथा च श्रुतयः—

'द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्य-
नश्नन्नन्यो अभिचाकशीति ॥' ( श्वे. ४ । ६ )
'न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥' ( क. १ । २ । १८ )
'वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥' ( श्वे. ५ । ९ )

अचिच्छब्दवाच्यं दृश्यं जडं जगत् । तद् भोग्यभोगोपकरणभोगायतनभेदात्त्रिविधम् । जगत् उपादानं कर्ता चेश्वरो वासुदेवादिपदवेदनीयः । उक्तं च—

'वासुदेवः स्वभक्तेषु वात्सल्यात्तत्तदीहितम् ।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु ॥
तदर्थं लीलया स्वीया पञ्चमूर्तीः करोति वै ।
प्रतिमादिकमर्चास्मादवतारास्तु वैभवाः ॥
संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं संपूर्णषड्गुणम् ॥
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो जीवप्रेरक ईरितः ॥
अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत् ।
विभवोपासने पश्चाद् व्यूहोपास्तौ ततः परम् ॥
सूक्ष्मे तदनुशक्तः स्यादन्तर्यामिणमीक्षितुम् ।' इति ।

उपासना च पञ्चप्रकारा । अभिगमनम्, उपादानम्, इज्या, स्वाध्यायः, योग इति । तत्राभिगमनं देवतास्थानमार्गस्य संमार्जनोपलेपनादि । उपादानं गन्धपुष्पादिपूजासाहित्यसंपादनम् । इज्या देवतापूजनम् ।

स्वाध्यायो नामार्थानुसंधानपूर्वको मन्त्रजपो वैष्णवसूक्तस्तोत्रादिपाठो नामसंकीर्तनतत्त्वप्रतिपादकशास्त्राभ्यासश्च । योगो देवतानुसंधानम् । अत्र **पञ्चरात्रं** प्रमाणम्, यत्प्रामाण्यं महता प्रयत्नेन **रामानुजाचार्येण** श्रीभाष्ये उत्पत्त्यसंभवाधिकरणे निरूपितम् । **मध्वाचार्य**स्तु पूर्णप्रज्ञ-दर्शने शास्त्रयोनित्वाधिकरणे—

'ऋग्यजुःसामाथर्वा च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥' इत्यूचे ॥

विष्णुस्वाम्युपक्रम**मणुभाष्यम्** । यत्र शुद्धाद्वैतम् । शुद्धयोः कार्य-कारणभूतयोर्जीवब्रह्मणोः अद्वैतं ऐक्यं यत्र तत् । शुद्धत्वं च माया-संबन्धराहित्यम्, तच्च इतरसंबन्धानवच्छिन्नकार्यकारणादिरूपद्वित्वप्रका-रकज्ञानप्रतियोगिकाभाववत्त्वम् । शुद्धं च तद् अद्वैतं च शुद्धाद्वैतमित्यपि केचित् । अत्र मते भक्तिमार्गस्यैव प्राधान्यम्, जीवब्रह्मणोरंशांशिभावः, स्वर्णकुण्डलवत्परिणामवादः, जगतः सत्यत्वमित्यादि स्वीक्रियते । तथा च प्रतिपाद्यतेऽणुभाष्ये तृतीयाध्यायस्य तृतीयपादे—'अथर्वणोपनिषत्सु पठ्यते । 'परब्रह्मैतद् यो धारयति रसति भजति ध्यायते प्रेमाति शृणोति श्रावयत्युपदिशत्याचरति सोऽमृतो भवति सोऽमृतो भवति'' इति ।

'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥' इति ।
'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्' इति ।

'स यथोर्णनाभिस्तन्तुनोच्चरेद् यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्ये-वमेवास्मादात्मानः' (बृ. २ । १ । २० ) इति च ॥

द्वैताद्वैतीयं **वेदान्तपारिजातसौरभम्** । यत्र कार्यात्मना भेदः,

कारणात्मना चाभेदः प्रतिपाद्यते । अत्र तत्त्वं तावत्त्रिविधम्, चिदचिद्ब्रह्मभेदात् । प्रतिज्ञासूत्रेणापि जिज्ञास्यं जिज्ञासुस्तदज्ञानमूलभूता त्रिगुणार्था माया चेति तत्त्वत्रयमुक्तम् । तथा च श्रुतिः—

'भोक्ता भोग्यं प्रेरितारं च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥' (श्वे. १।१२)

अचिद्वर्गभिन्नो ज्ञानस्वरूपो ज्ञातृत्वकर्तृत्वादिधर्मकोऽहमर्थरूपो भगवदायत्तस्वरूपस्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरं भिन्नो बन्धमोक्षार्हश्चित्पदार्थः । यदाहुः—

'ज्ञानस्वरूपं च हरेरधीनं
शरीरसंयोगवियोगयोग्यम् ।
अणुं हि जीवं प्रतिदेहभिन्नं
ज्ञातृत्ववन्तं यदनन्तमाहुः ॥
अनादिमायापरियुक्तरूपं
त्वेनं विदुर्वै भगवत्प्रसादात् ।
मुक्तं च बद्धं किल बद्धमुक्तं
प्रभेदबाहुल्यमथापि बोध्यम् ॥' इति ।

अचित्पदार्थस्त्रिविधः, प्राकृताप्राकृतकालभेदात् । तत्र गुणत्रयाश्रयभूतं द्रव्यं प्राकृतम् । तच्च नित्यं परिणामादिविकारि च । अप्राकृतं त्रिगुणप्रकृतिकालात्यन्तभिन्नमचेतनं च प्रकृतिमण्डलभिन्नदेशवृत्तिनित्यविभूतिविष्णुपदपरमव्योमपरमपदब्रह्मलोकादिपदाभिधेयम् । प्राकृताप्राकृतोभयभिन्नाचेतनद्रव्यविशेषः कालो नित्यो विभुश्च । ब्रह्म च अचिन्त्यानन्तनिरतिशयस्वाभाविकबृहत्तमस्वरूपगुणाद्याश्रयतः सर्वज्ञः सर्वशक्तिः सर्वेश्वरः सर्वकारणरूपः समानातिशयशून्यः सर्वव्यापकः सर्ववेदैकवेद्यः श्रीकृष्ण एव । यदाहुः—

स्वभावतोऽपास्तसमस्तदोष-
मशेषकल्याणगुणैकराशिम् ।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं
ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥' इति ।

'सर्वं खल्विदं ब्रह्म' (छां॰ ३।१४।१) इत्येवमादिवाक्यैश्चिदचितोर्ब्रह्मतादात्म्यमुपदिश्यते। एवं चोभयविधवाक्यानां स्वार्थे प्रामाण्यात् चिदचितोर्भिन्नस्वरूपयोरपि, इन्द्रियाणां भिन्नस्वरूपाणामपि "न वै वाचो न चक्षूंऽषि न श्रोत्राणि न मनांऽसीत्याचक्षते, प्राणा इत्येवाचक्षते" (५।१।१४) इति **छान्दोग्ये** प्राणेन्द्रियसंवादे प्रसिद्धानां प्राणायत्तत्वादेव प्राणाभिन्नत्ववद् ब्रह्मायत्तस्थितिवृत्तिमत्वेन ब्रह्माभिन्नत्वाच्चिदचिद्भिन्नाभिन्नं जिज्ञास्यं ब्रह्म सूत्रकाराभिमतम् । अत एव तत्त्वद्वयजिज्ञासाकाङ्क्षा नास्ति । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च सूपपन्ना । यदाहुः—

'सर्वं च विज्ञानमतोयथार्थकं
श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ।
ब्रह्मात्मकत्वादिति वेदविन्मतं
त्रिरूपितापि श्रुतिसूत्रसाधिता ॥' इति ॥

द्वैतपरायणं **पूर्णप्रज्ञदर्शनम्** । पूर्णप्रज्ञ आनन्दतीर्थश्चेति **मध्वाचार्यस्य** नामनी । यत्र द्वैतवादः । द्विधा इतं द्वीतम्, तदेव द्वैतम्, तस्य भावो वा । तथा च श्रूयते—

'यदा पश्यत्यन्यमीशमस्य
महिमानमिति वीतशोकः ॥' (श्वे. ४।७)

द्वैतमते जगतः सत्यत्वम्, जीवेशयोर्जडजीवयोर्जीवयोर्जडेश्वरयोर्जडयोश्चेति भेदपञ्चकम् परमात्मनः सर्वोत्तमत्वं स्वातन्त्र्यं च, जीवानां तु बहुविधत्वं पारतन्त्र्यं सायुज्यादि मुक्तिश्च । स्वतन्त्रस्य सेव्यस्य विष्णोः

परतन्त्रैः सेवकैः सेवैव कर्तव्या । सा हि अङ्कननामकरणभजनभेदात्त्रि-विधा । तत्राङ्कनं चक्रादीनां नारायणायुधानाम् । तथा च पठ्यते **शाकल्यसंहिता** परिशिष्टे—

"चक्रं बिभर्ति पुरुषोऽभितप्तं
बलं देवानाममृतस्य विष्णोः ।
स याति नाकं दुरितावधूय
विशन्ति यद्यतयो वीतरागाः ॥'
'देवासो येन विधृतेन बाहुना
सुदर्शनेन प्रयतास्तमायन् ।
येनाङ्किता मनवो लोकसृष्टिं
वितन्वन्ति ब्राह्मणास्तद् वहन्ति ॥" इति ।

नामकरणं पुत्रादीनां केशवादिविष्णुनाम्ना । भजनं तु दशविधम् । तत्र मनसा-दया,स्पृहा श्रद्धेति त्रिविधम् । वाचा—सत्यं, हितं, प्रियं, स्वाध्याय इति चतुर्विधम् । कायेन—दानं, परपरित्राणं, देवपूजनमिति त्रिविधम् ॥

अत्र सर्वत्र ब्रह्मणः सविशेषत्वम्, जीवस्य अणुत्वं चेति कतिपये सिद्धान्ताः समानाः । किंतु प्रकृतेः परिणामः सृष्टिरिति रामानुजाः; ब्रह्मण इति वाल्लभाः । त्रिविधं तत्त्वमिति रामानुजा नैम्बार्काश्च । स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिति माध्वाः । अङ्कनादिभेदेन त्रिविधा सेवेति माध्वाः; फलरूपा साधनरूपा द्विविधेति वाल्लभाः । तत्र मानसी श्रीकृष्णैकप्रवणतारूपा सेवा फलरूपा । शरीरेण धनादिना वा संपाद्यमाना सेवा साधनरूपेत्याहुः । वैकुण्ठलोकावाप्तिर्मुक्तिरिति माध्वाः, गोलोके परमानन्दसंदोहे वृन्दावने भगवदनुग्रहेण गोपीभावमवाप्य स्वसेव्यस्य श्रीपुरुषोत्तमस्य अखण्डरासोल्लासे निर्भररसावेशेन सेवैव मुक्तिरिति वाल्लभाः । एवमितरेऽपि विशेषा द्रष्टव्याः ॥

इह हरिविशिष्टाद्वैतवद् हरविशिष्टाद्वैतं वा हरिहरविशिष्टाद्वैतमपि निरूपयितुं शक्यम्। उभयत्र श्रौतीनां स्मार्तीनां च प्रमाणवाचां संरम्भ-साम्यात् । किं वा, हरिविशेषलिङ्गगवेषणापेक्षया हरविषये यजुर्वेदेष्वपि पर्याप्तप्रमाणदर्शनाद् अन्यत्रैवात्र गवेषणधावनप्रयासो नास्तीति पुरस्ताद् वैदिकनिर्णायकानाम् । तत्र हारिहररूपम्—

'सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम् ।
नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसंमतम् ॥'

इतिवत् प्रमीयते । एतेन अर्धनारीश्वरलीलाविग्रहो व्याख्यातः । इत्थं च **श्रीकण्ठाचार्यैः** शिवविशिष्टाद्वैतपरतया ब्रह्मसूत्रभाष्यं प्राणायीद् । यस्य च वेदान्तकल्पतरुपरिमलरचयित्रा **अप्पयदीक्षितेन** शिवार्क-मणिदीपिकाख्या व्याख्या त्रिंशत्सहस्रग्रन्था व्यधायि । अयमेव श्रीकण्ठा-चार्यः अणुभाष्यप्रकाशे गोस्वामि**पुरुषोत्तमेन** "शैवस्तु कश्चिद् रामानुजीयमतप्रदर्शनोत्तरं तन्मतचोरस्तु" इत्येवं व्यवजह्रे । सोऽयं श्री-कण्ठाचार्यः शंकराचार्यतः प्राचीन इति दाक्षिणात्याः । रामानुजाचार्यात् प्राचीन इति तु बहवः । तत्र—

'कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद् द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥'

इति तत्प्रशंसापद्ये कपर्दिमतग्रहणमपि साधकम् । **श्रीकण्ठ**भाष्य-तद्व्याख्यामुखबन्धौ त्वेवम्—

( १ ) ॐ नमोऽहंपदार्थाय लोकानां सिद्धिहेतवे ।
सच्चिदानन्दरूपाय शिवाय परमात्मने ॥ १ ॥
निजशक्तिभित्तिनिर्मितनिखिलजगज्जालचित्रनिकुरम्बः ।
जयति शिवः परमात्मा सकलागमसारसर्वस्वम् ॥ २ ॥

भवतु स भवतां सिद्ध्यै परमात्मा सर्वमङ्गलोपेतः ।
चिदचिन्मयः प्रपञ्चः शेषोऽशेषोऽपि यस्यैषः ॥ ३ ॥
नमः श्वेताभिधानाय नानागमविधायिने ।
कैवल्यकल्पतरवे कल्याणगुरवे नमः ॥ ४ ॥
व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने ।
पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते ॥ ५ ॥
श्रीमतां व्याससूत्राणां श्रीकण्ठीयः प्रकाशते ।
मधुरो भाष्यसंदर्भो महार्थो नातिविस्तरः ॥ ६ ॥
सर्ववेदान्तसारस्य सौरभास्वादमोदिनाम् ।
आर्याणां शिवनिष्ठानां भाष्यमेतन्महानिधिः ॥ ७ ॥

इहौपनिषदी मीमांसा समारभ्यते ।

( २ ) यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा
साकं सर्वैः पुराणस्मृतिनिकरमहाभारतादिप्रबन्धैः ।
तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति
प्राचैराचार्यरत्नैरपि परिजगृहे शंकराद्यैस्तदेव ॥ ६ ॥
तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः ।
अद्वैतवासना पुंसामाविर्भवति नान्यथा ॥ ७ ॥
अनुग्रहश्च देवस्य शक्त्या चिद्रूपया सह ।
यथावत्तं परिज्ञाय ध्यायद्भिः समवाप्यते ॥ ८ ॥
इति भगवता वेदव्यासेन सूत्रयता परं
सगुणमपि तत्साम्बं ब्रह्म न्यरूपि शिवाभिधम् ।
यदनुकरणादर्थानन्येऽपि संजगृहुर्बहून्
पणिनिजमुखाः सूत्रैर्विष्वङ्मुखत्वविभूषणैः ॥ ९ ॥
तदिदं ब्रह्मसूत्राणां तात्पर्यं सगुणे शिवे ।
प्रकटीकर्तुमाचार्यः प्रणिन्ये भाष्यमुत्तमम् ॥ १० ॥

श्रीकण्ठाचार्यकृतं भाष्यं यद्ब्रह्मसूत्राणाम् ।
प्रतिपदमतिगम्भीरं न शक्यते मादृशैर्बोद्धुम् ॥ ११ ॥

भाष्यमेतदनघं विवृण्वति
स्वप्नजागरणयोः समं प्रभुः ।
चिन्तयोम्मनृपरूपभृत्स्वयं
मां न्ययुङ्क्त महिलार्धविग्रहः ॥ १२ ॥

विशिष्टाद्वैतपरं श्रीकण्ठभाष्यं विवृण्वानोऽपि दीक्षितो महाभारतादितात्पर्यमद्वैतसिद्धान्तपरमेव मेने । एवं हि लक्ष्मणाचार्यानुयायी भूत्वापि **नीलकण्ठो** महाभारतमद्वैताशयेनैव व्याख्यातवान् । भीष्मपर्वणि गीताव्याख्यानोपक्रमे—'प्रणम्य भगवत्पादाञ्श्रीधरादींश्च सद्गुरून् । संप्रदायानुसारेण गीताव्याख्यां समारभे ॥' इत्युक्तवाँश्च । भगवत्पादाः शंकराचार्याः । शंकरः शिवावतार इति **कूर्मे** महापुराणे त्रिंशत्तमेऽध्याये युगवंशानुकीर्त्तने । भारतभावदीपकर्तुर्नीलकण्ठस्य लक्ष्मणाचार्यानुयायित्वम्—

'बाह्यः स्तेनाभिभाषी बहिरुदवसितं याति तर्कोऽप्रतिष्ठो
मीमांसाप्रातिहार्यं भजति गुणगणं यस्य संख्याति सांख्यः ।
हृत्पीठे योगशुद्धे निहितमुपनिषद्वाहवृन्दैः परं मे
भाग्यं श्रीलक्ष्मणार्यो जगति विजयते यस्य लेशाः शिवाद्याः ॥'

इत्यादि प्रारम्भलेखतो व्यक्तम् । **लक्ष्मण** इति रामानुजाचार्यस्य नामान्तरम् ॥

अथ ब्रह्म, तत्साधनफले च ब्रह्मसूत्राणां प्रतिपाद्यम् । तत्र निर्विशेषब्रह्मैव प्राधान्येन जिज्ञास्यमित्येतदर्थम् 'तदेव ब्रह्म त्वं विद्धि-नेदं यदिदमुपासते' इत्यादि प्रागुक्तम् । तत्र च प्रसक्तानुप्रसक्त्या अद्वैतं, विशिष्टाद्वैतं, शुद्धाद्वैतं, द्वैताद्वैतं, द्वैतमिति दर्शनानि गतानि । संसारदशायां द्वैतं, ब्रह्मसाक्षात्कारानन्तरमद्वैतमिति तत्र तत्र सुप्रतीतमेव, अन्यानि तु आक्षेपलभ्यानि । द्वैतं भविशेषब्रह्मोपासने प्रवणीभवदपि अद्वैतश्रुति-

तात्पर्यविरोधि। श्रुतिविरोधस्तु प्रतितन्त्रेऽप्यास्तिकदर्शने न सह्यते। तत एव कापिलाः—'नाद्वैतश्रुतिविरोधो जातिपरत्वात्' (सां. द. १।१२४) इति पठन्ति। द्वैतवादवाचस्पतीनां माध्वानामद्वैतश्रुतिविरोधसमाधिसरणिस्तु बहुत्रासमञ्जसा। यथा 'तत्त्वमसि' (छां. ६।८-१६) इति महावाक्यमाश्रित्योच्यते तैः—

'आह नित्यपरोक्षं तु तच्छब्दो ह्यविशेषतः।
त्वच्छब्दश्चापरोक्षार्थं तयोरैक्यं कथं भवेत्॥
आदित्यो यूप इतिवत्सादृश्यार्था तु सा श्रुतिः।
अतत्-त्वमिति वा छेदस्तेनैक्यं सुनिराकृतम्॥'

इत्यादि। पूर्णप्रज्ञदर्शनं हि द्वैतवादिनीनां श्रुतीनां संकेतस्थानम्। तत्र सशपथमिव द्वैतवादं वदन्तीनां बह्वीनां मूलं मृग्यम्। एवं द्वैताद्वैतीयेऽपि। तथा चाहू **रामानुजाचार्याः** श्रीभाष्ये जिज्ञासाधिकरणे—"भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्ता जीवगता दोषा ब्रह्मण्येव प्रादुः स्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः। स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः सत एव जीवभावाभ्युपगमाद् गुणवद् दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव। केवलभेदात्मवादिनां च अत्यन्तभिन्नयोः केनापि प्रकारेण ऐक्यासंभवादेव ब्रह्मात्मभावोपदेशो न संभवतीति सर्ववेदान्तपरित्यागः स्यात्" इति। शुद्धाद्वैतवादस्तु द्वैतप्रायः। तत एव **यज्ञेश्वरभट्टाः**—'वल्लभीया वस्तुतो द्वैतं प्रतिपद्यमाना अपि स्वसिद्धान्ते शुद्धाद्वैतं प्रतिपाद्यं वदन्ति' इति। तथा चोक्तं पुष्टिप्रवाहमर्यादायां **वल्लभाचार्यैः**—

'तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः।
भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत्॥
स्वरूपेणावतारेण लिङ्गेन च गुणेन च।

तारतम्यं न स्वरूपे देहे वा तत्क्रियासु वा ॥
तथापि यावता कार्यं तावत्तस्य करोति हि ॥'

विशिष्टाद्वैतवादे तु ब्रह्मतादात्म्योपदेशो नीलो घट इत्यादिवदुपपद्यते । तत्र-हि अभेदश्रुतयः प्रलयकालिकसूक्ष्मचिदचिद्विशिष्टब्रह्मपरतया, भेद-श्रुतयो निष्कृष्टयथाभूतार्थपरतया, निर्गुणश्रुतयो नैर्घृण्यादिहेयगुणाभाव-परतया च सामञ्जस्यं श्रयन्ते । उपासनासु सर्वत्र सविशेषं ब्रह्म समा-द्रियते । तत्र विशेषान्तराणि गवेषमाणा मायावादगन्धलेशमप्यसहमानाः शुद्धाद्वैतिनस्तु—"क्वचिद् गोकुलवृन्दाकाननसंचरद्गोपरूपमनल्पकल्प-द्रुमप्रसूनविरचितविचित्रस्थलीक—कालिन्दीसलिलकल्लोलसङ्गिमृदुतरपवन-चलदलकविराजमानगण्डमण्डलद्युतिमण्डितकुण्डलप्रभानुभावितवामांसामि-लन्मूर्धन्यमहामणिक—मुरलिकामुखावलीमिलदतितरलकरकमलयुगलाङ्गुली-वशंवदविविधस्वरमूर्छनामोहितव्रजवरनितम्बिनीकदम्बकटाक्षकुवलयार्चित-म्—" इत्यादि **वाणभट्टो**क्तिसधर्मिणीमाथर्वणीमुपनिषदमणुभाष्ये तृतीयाध्यायस्य तृतीयपादे दर्शयामासुः ।

अत्रेदमपि मीमांसनीयम्—पूर्वमीमांसेव उत्तरमीमांसापि सजातीयानेव मन्त्रब्राह्मणभागान् यथोपयोगं सूत्रयन्ती तथा भूतैरेव मन्त्रब्राह्मणभागैस्त-दनुगृहीतस्मृतिभागैश्च धर्ममिव ब्रह्म विविक्षाना प्रववृते । यत्र जैमिन्याश्म-रथ्यवादर्यौडुलोमिकाशकृत्स्नकार्ष्णाजिन्यात्रेयांश्च -प्रमाणयता भगवता बादरायणेन ब्रह्ममीमांसा संदब्धा । एवं गतिकैव धर्ममीमांसा । अत एते, न काणादाक्षपाददर्शने इव, न वा कापिलपातञ्जले इव स्थल विशेषे पर्यनुयोज्ये; किं तु आमूलाग्रं मान्ये । इह हि न पुराणेतिहासवद् यावद्भग-वद्विभवानां तद्धर्माणां च निरूपणावसरः । अपरथा हरिहरादिजिज्ञासा-नुरोधेन तत्तद्धर्माणां चाकलनाद् अन्यतमपुराणवद् इयमुत्तरमीमांसापि एक-देशिनी स्यात्, आकारभेदाद् विष्णुदत्तशिवदत्तादिवद् अशेषदेवतोपसंहारं परब्रह्मापि सर्वजिज्ञास्यं न स्यात् ॥

पुनरप्याह—**पूर्वः परः स्यात् पर एष पूर्व** इति । अत्र श्रीभाष्यादीन्युदाहरणानि । 'प्रकर्षतन्त्रा हि रणे जयश्रीः' इति **किरातार्जुनीय**पद्यस्य चरमचरणम् । इह रणो विजिगीषया वादलेखलक्षणः । तत्रैवंवादिनामन्योक्तयः—"

' दिगन्ते श्रूयन्ते मदमलिमगण्डाः करटिनः,
करिण्यः कारुण्यास्पदमसमशीलाः, खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ॥"

इति पण्डितराजो **जगन्नाथः** ॥

उपसंहरन्नाह— **न विष्णुशक्यादिति** । शक्योऽभिधावृत्तिप्रतिपाद्यो वाच्यार्थः । लक्ष्यो लक्षणाप्रतिपाद्यो लक्ष्यार्थः ' गङ्गायां घोषः ' इत्यादौ सुप्रतीतः । तथा च परमात्मनो विष्णोरेकत्वेन तदुपासकैर्वैष्णवैरपि स्वस्वदर्शनोपसंहारेण वैमत्यं निरस्य सहमतैर्भवितव्यमिति प्रतिफलितनिवेदनारहस्यम् ॥ २७—३१ ॥

**अथापरे तात्त्विकमर्ममुग्धा**
**गोप्यादिशब्दार्थविरुद्धबोधाः ।**
**आरोप्य जारप्रवरत्वमीशे**
**यथाश्रुतार्थं परिबृंहयन्ति ॥ ३२ ॥**
**पुरञ्जनाख्यानविवेचनेन**
**योगोत्थमायापरिभावनेन ।**
**आप्ताग्रणीनामपि माननेन**
**श्रीकृष्णचन्द्रे न कलङ्कसङ्गः ॥ ३३ ॥**
**योगाञ्जनं दार्शनिकं विधूय**
**न शक्यमालोकयितुं पुराणम् ।**
**अतोऽद्य मन्दप्रतिभोपनीत-**

मितस्ततः क्रीडनकायमानम् ॥ ३४ ॥
उपासना सीदति चित्रभक्तौ
क्व संयमस्यावसरोऽस्ति तावत् ।
वृताऽधुना साधुविधौ धुनाना
शृङ्गारिणां वल्गति रासलीला ॥ ३५ ॥
अहं हि कृष्णो भवती तु राधा
विलीयतां संप्रति भेदबाधा ।
इतीव शृङ्गारतरङ्गिणीनां
भावाम्बुधौ माद्यति संनिवेशः ॥ ३६ ॥

इदानीं पञ्चभिः कथाभट्टान् प्रति निवेदना—**अथापरे** इति । गोप्यादिशब्दार्थविरुद्धबोधाः, अतएव तात्त्विकमर्ममुग्धा इति विशिष्यन्ते । गोपी वा गोपो वा, गोपाविति वा प्रकृते स्त्रीं वा पुमांसं वा स्त्रीपुंसौ वा अभिदधन्न शूद्रादिव्यक्तिवचन उपपद्यते, श्रुतिस्मृतिसदाचारव्याकोपात् । ततो ग्राम्यधर्मेण ईशे=षाड्गुण्ययुजि कृष्णाख्येऽक्तरि जारप्रवरत्वमारोप्य यथाश्रुतार्थस्य परिबृंहणं न न्याय्यम् । ततश्च—

'श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तन-
व्यामर्दाद् गलितेऽपि चन्दनरजस्यङ्गे वहन् सौरभम् ।
कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं
बिभ्रत् कामपि वेणुनादरसिको जाराग्रणीः पातु वः ॥'

इत्येवंप्रायाः साहितीशासनतोऽपि विरुद्धाः कविकुलालापाः प्रलापा एव मन्तव्याः । तथाहि—इदं जगत् नामरूपाभ्यां गोपायति रक्षति; किं वा आत्मस्वरूपं गोपायति संवृणोति, इति गोपी प्रकृतिर्माया । आयाभावे पचाद्यच् गौरादिङीप् । एवम्, आत्मानं गोपायतीति गोपो जीवः । स्पष्टं चैतदादि—'क्लीँ कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इति पञ्चपदीव्याख्यानतो **गोपालतापन्याम्** ॥

उक्तमेव विशदयति—**पुरञ्जनेति**। पुरञ्जनोपाख्यानं **श्रीमद्भागवते** (विष्णुभागवते) चतुर्थस्कन्धे **प्राचीनबर्हिषं** प्रति **नारदेन** पञ्चभिरध्यायै—(२५-२९) वर्णितम्। तत्र पुञ्जरनीपुरञ्जनयोर्दाम्पत्यं तथा निरूपितं यथा प्राचीनबर्हिराकर्ण्यापि संदिहानो नारदमित्यमुक्तवान्—'भगवँस्ते वचोऽस्माभिर्न सम्यगवगम्यते। कवयस्तद्विजानन्ति न वयं कर्ममोहिताः॥' पुरञ्जनो जीवः पुरञ्जनी बुद्धिरिति रूपकम्। एवं भाषाभेदेन लेखे तात्पर्यानुद्घाटनप्रसङ्गे पाठकानां मोहो नासंभवी। तदिदमितरत्रापि यथाशास्त्रं संचार्य व्यामोहो निराकरणीय इति। तत्रोदाहरणादिक्—'शुक्रः शुशुक्वाँ उषो न जारः—' (ऋ. सं. १ अ. ५ अ. १३ व.) 'उषो न जारः पृथुपाजो—' (ऋ. सं. ५ अ.। २. अ.। १३ व.) एतदेव **पुनरैतरेये** ब्राह्मणे—'प्रजापतिर्वै स्वांदुहितरमभ्यध्यायद् दिवमित्यन्यआहुरुषसमित्यन्ये तामृष्यो भूत्वा रोहितं भूतामभ्यैत्—' (३ पञ्जिका ३ अध्याय)। जैमिनीयमीमांसादर्शन-शाबरभाष्यस्य **तन्त्रवार्तिके** सदाचारानुदाहृत्य त्रिवर्गसिद्ध्यर्थं विचार्यमाणे 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्—इत्यगम्यागमनरूपादधर्माचरणाद् धर्मव्यतिक्रमः' इत्युल्लिख्य 'प्रजापतिस्तावत् प्रजापालनाधिकारादादित्य एवोच्यते। स चारुणोदयवेलायामुषसमभ्युद्यन्नभ्यैत्। सा तदागमनादेवोपजायत इति तद्दुहितृत्वेन व्यपदिश्यते। तस्यां चारुणकिरणाख्यबीजनिक्षेपात् स्त्रीपुरुषयोगवदुपचारः।' (१।३।७) इति व्याख्यया प्राग्दर्शितमन्त्रब्राह्मणाशय एव वर्णितः। एवं शिवमहिम्नि। **पुष्पदन्ताचार्यः**—'

'प्रजानाथं नाथ! प्रसभमभिकं स्वां दुहितरं<br>
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा।<br>
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं<br>
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः॥'

इति श्रुतिमूलकविकर्मणा विनेयानां हरिहरस्तुतिशिक्षे उपदिष्टे । अथ 'उदीरय पितरा जार आ भगं—' ( ऋ. सं. ७ अ. । ६ अ. । १० व. ) अत्रत्यं जारपदमालम्ब्य तैत्तिरीयारण्यके—' गौरात्स्कन्दिन्नहल्यायै जारः—' ( १ प्रपाठ. १२ अनुवा. ) तथैव वाजसनेयिनां शतपथे ब्राह्मणे । अयमेव सुब्रह्मण्यानिगद इत्यभिधीयते, यः पाणिनिनापि स्मर्यते ( अष्टा. १ । २ । ३७ ) अत्रापि तन्त्रवार्त्तिके—' इन्द्रस्यापि । तत्पदस्थस्य च नहुषस्य परदाराभियोगाद् धर्मव्यतिक्रमः ' इत्युल्लिख्य ' एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैव अहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यत्यस्माद् अनेनैवोदितेन इत्यादित्य एवाहल्याजार इत्युच्यते । न तु परस्त्रीव्यभिचारात् । नहुषेण पुनः परस्त्रीप्रार्थनमियत्तानन्तरकालाजगरत्वप्राप्तयैव आत्मनो दुराचारत्वं प्रख्यापितम् । शच्याश्च पतिभक्तिनिमित्तपुण्यातिशयजनिततन्निराकरणात्राप्तप्रभावलाभः स्यात एव । ' ( १ । ३ । ७ ) इत्याख्यद् भट्टश्रीकुमारिलस्वामी । इदमिन्द्राहल्यावृत्तं वाल्मीकीये रामायणे बालकाण्डे ४८—४९ सर्गयोः कथाविधया स्मर्यते । इत्थंभूता भाषाभङ्ग्यो विनेयानां हृदयंगमा भवन्त्यः—

' मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ' ( म. २ । २१५ )

' गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये च श्वपदं कार्यं ब्रह्महण्याशिराः पुमान् ॥ ' ( म. ९ । २३७ )

इत्येवमादीनां श्रुतिसेविनीनां स्मृतीनां सुतरामुपादेयतां बोधयन्त्यः शिक्षापाठगुणनिकाः ।

योगोत्थमायापरिभावनं हि—

' न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥

एवमुक्त्वा ततो राजन् ! महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥' (गी. ११ । ८-९)

एवमादिभिः । आप्तग्रणीनां माननमपि व्यासभीष्मयुधिष्ठिरादिवचनैर्भारतादाकलनीयम् । न कलङ्की चन्द्र इव श्रीकृष्णचन्द्र इति भणितव्यम् । यदीत्थं नाभविष्यत्तर्हि—

'मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ।' (गी. ३ । २३)

इत्यादिवचनं सखायं प्रति कथं प्रावर्त्तिष्यत । कथं वा सखा—

'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥' (गी. १८ । ७३)

इत्यवदिष्यत् ॥

प्रतिफलितां पुराणेतिहासगभीरतां दर्शयति—**योगाञ्जनमिति** । पुराणं नाम सृष्टिस्थितिप्रलयानां वेदप्रसिद्धानां **मनुहरिश्चन्द्र**प्रभृतीनां च वर्णनाय व्यासमुनिविरचितो ग्रन्थः । अत इत्युत्तरार्धेन वेषभाषेङ्गितचेष्टितनिर्मितपिताडम्बरचरणैर्वीणावेणुवादनादिनिपुणैः कथकैः कथ्यमाना कथा स्त्रीबालप्रायाँल्लोकान् प्रीणयमानापि साधुसमितावमानैवेति निवेदितम् ॥

अचतुर्मुखेन ब्रह्मणा द्विभुजेन हरिणा अभाललोचनेन स्मरारिणा भगवता वेदव्यासेन, सुहृत्संमितया वाचा विनेयानामविलम्बितं धर्मप्रवृत्तये प्रणीतस्य पुराणस्य रहस्यतिरोधाने समुन्मिषति 'अपदोपतैव विगुणस्य गुणः' इत्यस्याप्युपमर्दावसर इत्याह—**उपासना सीदतीति** । चित्रस्य भक्तिः चित्रा वा भक्तिः । इयं वाल्लभादिसंप्रदायिनां देवमन्दिरेषु सुस्पष्टैव । संयमः प्राङ् निरूपितः ।

पुनरप्याह—**अहमिति** । आलप्यालभेतत् ॥ ३२—३६ ॥

**अहो इदानीं विकसद्वितर्का**
**चार्वाककल्पा जनताऽजनिष्ट ।**

इत्युच्चकैर्हैतुकवादपूर्वा
प्रारम्भणीया महितापि वार्ता ॥ ३७ ॥

यथागताम्नायरहस्यसूक्ति-
सरोजिनीभञ्जनतत्परेषु ।
समन्ततो नास्तिककुञ्जरेषु
तत्पूर्वसिंहायितमारभध्वम् ॥ ३८ ॥

किं नागतः सोऽद्य विवादकालः
प्रेक्षावतां यत्र महांसि वाहाः ।
त्रयी धनुर्व्याकरणादि मौर्वी
षड्दर्शनी दिव्यशरा भवेयुः ॥ ३९ ॥

योगप्रसक्तोरुपदेशशक्ती-
र्देशानुरक्तीः शतधा प्रसार्य ।
अयन्तु वर्णाश्रितमौखिकार्थ-
संपादनायां कृतकार्यभावम् ॥ ४० ॥

परोपमर्देऽपि न दैन्यभावं
कदाचिदप्यात्मनि योजयध्वम् ।
योगोत्थवीर्येण समूलघातं
क्लेशान्विनिघ्नन्त उदाचरध्वम् ॥ ४१ ॥

अथ पञ्चभिः परोपकारपरायणान् पुरुषप्रकाण्डान् प्रत्याह—अहो-इदानीमिति। अङ्ग! सांप्रतमसांप्रतमेतदुपनतम्, यत् जनता जनानां लोकानां समूहः सभ्यजातिश्रेणिः, समुचितशिक्षाणामभावेन वैकल्येन अनादरेण वा, विकसन्तः अनर्गलमुद्यन्तः वितर्काः=श्रुतिस्मृतिसदाचार-विरुद्धा आशङ्का यस्याः सा विकसद्वितर्का भवन्ती चार्वाककल्या लौकायतिकप्राया अजनिष्ट अजनि। यतो लोके प्रत्यक्षरूपेण आयतं घटपटमठादिवद् विततमेव वस्तुजातं सत् जानाना ज्ञापयमानाश्च ते

प्रवर्तन्ते। तत एव लौकिकसुखपरायणैश्चार्वाका इति मन्यन्तेऽनुमोदन्ते च। अत्रेदं मीमांस्यते, सर्वासु ज्ञातिषूपलभ्यमाना एते चार्वाकवचनाः—

'न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥' (सर्वदर्शनसं.)

एवमादि प्रच्छन्नं प्रत्यक्षं वा प्रतिपादयन्त इत्यमुद्गिरन्ति—

'यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥' इति।

अथ—'त्याज्यं सुखं विषयसंगमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा।
व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्या-
न्को नाम भोस्तुषकणोपहितान् हितार्थी॥'
(प्रबोधचन्द्रोद.) इति च।

स्यादेतद् यदिनाम प्रत्यक्षमेव प्रमाणं प्रमेयं च संगच्छेत? नानुमानमनुमेयमागम आगमिकं च। वस्तुतो हि प्रत्यक्षमेव प्रमाणं प्रमेयं चेत्यपि वक्तुं न शक्यम्, मनसस्तद्गोचरस्य सुखदुःखादेश्च अप्रत्यक्षत्वप्रसङ्गात्। तथा बहुत्र प्रत्यक्षं दृश्यमानमपि वस्तु नानुमानागमावन्तरेण याथात्म्यज्ञानफलकं स्यात्। उदाहरन्ति च—

"तलवद् दृश्यते व्योम, खद्योतो हव्यवाडिव।
न तलं विद्यते व्योम्नि, न खद्योतोऽपि हव्यवाट्॥
वितस्तिमात्रं गगने प्रत्यक्षेणेन्दुमण्डलम्।
दृश्यतां, तत्र मानं स्यादनुमानागमौ विना॥"

इत्यादि। किं च वस्तुदर्शनमात्रेण न कश्चन प्रेक्षावान् तत्र प्रवर्तते ततो निवर्तते वा प्रवृत्तिनिवृत्त्योरिष्टानिष्टसाधनताज्ञानमेव बीजम्। अत एव 'विषं भुंक्ष्व' इति केनचिदुक्तस्त्वं यदि ब्रूयाः—विषभक्षणान्मनुष्या म्रियन्ते मनुष्यश्चाहम् अतो न भुञ्जे—तर्हि 'मनुष्यजातीयस्य ममेदं वस्तु मारकं विषयजातीयत्वात्' इत्यनुमानमकामेनापि भवताङ्गीकृतमेव।

एवम्—' न स्वर्गो नापवर्गो वा—' इत्यादि अनुपलब्ध्या प्रतिषेधयता भवता अनुपलब्धिलिङ्गकमनुमानमाश्रितमिति ॥

इह धर्माधर्मात्मकालौकिकपरलोकसाधने विप्रतिपन्नान् प्रति तत्साधनानि पुरस्कर्तव्यानि । सिद्धेषु तेषु धर्माधर्माधिष्ठातृतया चेश्वरसिद्धिः स्याद् अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वदर्शनात् । तत्साधनार्थमाहुरुदयनाचार्याः—

" सापेक्षत्वाद,नादित्वाद्, वैचित्र्याद्, विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्ते,रस्ति हेतुरलौकिकः ॥" (न्यायकुसु. १.स्तव.)

तथाहि—कार्यकारणभावानभ्युपगमे परप्रतिपत्तिफलकवचनप्रयोगानुपपत्तेः, यथा यथा तन्निराकरणाय प्रयत्नः क्रियते तथा तथा तस्यैवापत्तेरिति व्याघात एव-तथापि साधकं विना न तत्सिद्धिरिति चेत्; तत्राह-सापेक्षत्वादिति । विवादपदस्य सापेक्षत्वात् सहापेक्षया वर्तमानत्वात् कादाचित्कत्वादित्यर्थः । तच्च किंचित्कालासंबन्धित्वे सति किंचित्कालसंबन्धरूपं कार्याणां प्रत्यक्षसिद्धमित्यनन्यथासिद्धमेतत् । तथा चायं प्रयोगः—' कार्यं सहेतुकं कादाचित्कत्वाद् भोजनजन्यतृप्तिवत् ' इति । ननु हेतुरपि यदि सदातनस्तदा तत्सापेक्षस्य कार्यस्यापि सदातनत्वापत्तिरिति कादाचित्कत्वमहेतोरिवाकाशादेः सहेतोरपि सपक्षाद् व्यावृत्तमित्यगमकं स्यादिति हेतुः कादाचित्को वाच्यः—तथा च तस्यापि कादाचित्कत्वं हेत्वपेक्षयेत्यनवस्थापत्तिः अहेतुकत्वे च तद्वदेव कार्यमप्यहेतुकं कादाचित्कं स्यादिति चेत्; तत्राह—अनादित्वादिति । हेतोरपि कादाचित्कत्वं स्वहेतुकादाचित्कत्वादेव । प्रामाणिकी चेयमनवस्था बीजाङ्कुरवन्न दोषावहा । ननु कारणमात्रसिद्धावप्येकमेकजातीयं वा कारणमस्तु कार्यजातस्य, तच्चास्मदादिनैव शक्यज्ञानमिति न तदर्थमुपदेशो न वा विलक्षणसामग्रीजन्यं कार्यं सिद्ध्यतीत्यत आह—वैचित्र्यादिति । भिन्नजातीयकारणानन्तरं तथाभूत-

कार्यविषयकं प्रत्यक्षमेव विचित्रे साधने मानम् । यद्वा वैचित्र्यं कार्यस्य विचित्रहेतुकत्वे लिङ्गम् । तथा च—'कार्यं विचित्रकारणवद् विचित्र-कार्यत्वात्' इति प्रयोगः । तथापि दृश्यमानविचित्रहेतुकमेव कार्य-मस्त्विति न धर्माधर्मसिद्धिरित्यत आह–विश्ववृत्तित इति । विश्वेषां प्रेक्षावतां परलोकार्थितया तपःस्वाध्यायदानादिषु प्रवृत्तिः प्रेक्षावत्प्रवृत्ति-त्वेन सफला मन्यते, फलसाधनत्वं च तेषामाशुविनाशित्वेन न स्यादिति तज्जन्यफलानुकूलमदृष्टं परिकल्प्यते । तथापि तद् अदृष्टं भोग्यनिष्ठम् उत् भोक्तृनिष्ठम् ? अन्त्येऽपि किं प्रतिभोक्तृनिष्ठम् साधारणं वा ? इत्यत आह—प्रत्यात्मनियमादिति । भुक्तेः सुखदुःखसाक्षात्कारस्य प्रत्ये-कात्मनियतत्वात् लाघवाच्च तदुपपादकं प्रतिभोक्तृनियतमेवादृष्टं कल्प्यते इत्यरित हेतुरलौकिकोऽतीन्द्रिय इति । किं च । अदृष्टाधिष्ठातृतया परमेश्वरः सिद्ध्यति । अधिष्ठानं प्रेरणा । अधिष्ठातुरधिष्ठेयगतफलानु-कूलव्यापारवत्त्वमिति यावत् । तत्र प्रकृते इच्छैव । न चास्मदादीनाम-दृष्टाधिष्ठातृत्वं संभवति जायमानायामपीच्छायां ततः फलानुपपत्तेः । परमेश्वरस्य तु सत्यसंकल्पतया अधिष्ठातृत्वमुपपद्यते । अपि च । अधि-ष्ठेयगोचरापरोक्षज्ञानवत एवाधिष्ठातृत्वस्य रथशकटादौ दर्शनाद् अज्ञाते-ऽधिष्ठानादर्शनाच्च, प्रकृतेऽपि अदृष्टगोचरापरोक्षज्ञानवत एवेश्वरस्या-धिष्ठातृत्वम्, न त्वेनंरूपाणां जीवानामिति भावः । तथा चायं प्रयोगः— 'विमतमधिष्ठानमधिष्ठेयगोचरापरोक्षज्ञानपूर्वकमचेतनाधिष्ठानत्वात् तक्षा-दिकृतवास्याद्यधिष्ठानवत्' । अतएव **गौतमः**—'ईश्वरः कारणं पुरुष-कर्माऽऽफल्यदर्शनात्' (न्या. द. ४ । १ । १९) इति **वर्धमानोपा-ध्याय**प्रमुखाः ।

इहेदमपि पुनर्न्यायाचार्योक्तमाकलनीयम्—

"विफला विश्ववृत्तिर्नो, न दुःखैकफलापि वा ।
दृष्टलाभफला नापि, विप्रलम्भोपि नेदृशः ॥ (न्यायकुसु. १ स्तव.)

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनम्, न परलोकार्थी कश्चिदिष्टापूर्तयो प्रवर्तेत । नहि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत् । लाभपूजाख्यात्यर्थमिति चेत्, लाभादय एव किं बन्धनाः ? न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः, यतो वाऽनेन लब्धव्यं यो वैनं पूजयिष्यति, स किमर्थम् ? ख्यात्यर्थमनुरागार्थं च जनो दातरि मानयितरि च रज्यते, 'जनानुरागप्रभवा हि संपदः' इति चेत् । न । नीतिनर्मसचिवेष्वेव तदर्थं दानादिव्यवस्थापनात् । त्रैविद्यतपस्विनो धूर्तवका एवेति चेत् । न । तेषां दृष्टसंपदं प्रत्यनुपयोगात् । सुखार्थं तथा करोतीति चेत् । न । नास्तिकैरपि तथाकरणप्रसङ्गात् । संभोगवत् । लोकव्यवहारसिद्धत्वाद् अफलमपि क्रियते वेदव्यवहारसिद्धत्वात् संध्योपासनवदिति चेद्—गुरुमतमेतत्, न तु गुरोर्मतम् । ततो नेदमनवसर एव वक्तुमुचितम् । वृद्धैर्विप्रलब्धत्वाद् बालानामिति चेत् । न । वृद्धानामपि प्रवृत्तेः । न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते । तेऽपि वृद्धतरैरित्येवमनादिरिति चेत् । न तर्हि विप्रलिप्सुः कश्चिदत्र, यतः प्रतारणशङ्का स्यात् । इदं प्रथम एव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत् । किमसौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति । केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः नह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः । यतः पाखण्डाभिमतेष्वप्येवं दृश्यत इति चेत् । न । हेतुदर्शनाभ्यां विशेषात् । अनादौ चैवं भूतेऽनुष्ठाने प्रतायमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, नत्वनुष्ठानागोचरेण कर्मणा । अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात् । एतेन यज्ञतपःस्वाध्यायादिरेव स्वर्गादिहेतुरिति विशङ्कालितम् ॥

यदपीह—'नित्यसत्वा भवन्त्येके नित्यासत्वाश्च केचन ।
विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः ॥' इत्यादि दृशा—
'अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्'
(न्या. द. ४ । १ । १२)

इति **गौतमीयं** पूर्वपक्षसूत्रं तत्—
"हेतुभूतिनिषेधो न, स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैव, मवधेर्नियतत्वतः ॥" (न्यायकुसु. १ स्तव.)

इत्यनेन समाहितम् । तथाहि—हेतुनिषेधे भवनस्य अनपेक्षितत्वेन सर्वदा भवनम् अविशेषात् । भवनप्रतिषेधे प्रागिव पश्चादपि अभवनम् अविशेषात् । अहेतुश्च कार्यस्वरूपमवस्तु च तदा स्वानुपाख्यविधिरापतति । स्वं कार्यम्, अनुपाख्यम् अलीकम् , स्वभावादेव कार्यस्य कादाचित्कत्वम् । अवधेर्नियतत्वत इति सर्वत्र हेतुः । नियतावधिककार्यदर्शनादिति तदर्थः ॥

अत्राक्षपादीनि सूत्राणि—
"पूर्वाभ्यस्तस्मृत्यनुबन्धात्—जातस्य हर्षभयशोकसंप्रतिपत्तेः"
(न्या. द. ३ । १ । १६)

जातः कुमारकः अस्मिन् जन्मनि अगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयात् । ते च स्मृत्यनुबन्धादुत्पद्यन्ते नान्यथा, स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति, पूर्वाभ्यासश्च पूर्वजन्मनि सति नान्यथेतिसिद्ध्यति । अत्र स्मृतिरुदिते तयोर्लिङ्गे । शोकादिवदात्मवती बाल्यावस्था स्मितरुदितादिमत्त्वात् । बाल्यावस्था वयोधर्मो यौवनावस्थावत् । ततश्च शोकादिमदात्मवत्वेन स्मृतिवदात्मवत्वम्, तेन संस्कारवदात्मवत्वम्, तेन पूर्वानुभववदात्मवत्वम्, तेन पूर्वशरीरसंबन्धवदात्मवत्वम् साध्यम्, सर्वत्र यौवनावस्था दृष्टान्त इति **वात्स्यायन**प्रमुखाः ।

'प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्' (न्या. द. ३ । १ । २२)

प्रेत्य मृत्वा जातमात्रस्य बालकस्य यः स्तन्याभिलाषः स तावदाहाराभ्यासजनितः । पूर्वाभ्यस्तसूत्रेऽवगतोऽयमर्थः प्रपञ्चार्थं पुनः सूत्रितः ।

'वीतरागजन्मादर्शनात्' ( न्या. द. ३ । १ । २५ )

सरागो जायत इत्यर्थादापद्यते । अयं जायमानो रागानुवद्धो जायते । रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः । पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनि शरीरमन्तरेण नोपपद्यते । सोऽयमात्मा पूर्वशरीरानुभूतान् विषयान् अनुस्मरन् तेषु तेषु रज्यते तथा चायं द्वयोर्जन्मनोः प्रतिसंधिः । एवं पूर्वशरीरस्य पूर्वतरेण, पूर्वतरस्य पूर्वतमेनेत्यादिना अनादिः चेतनस्य शरीरयोगः । अनादिश्च रागानुवन्ध इति सिद्धं नित्यत्वम् इति **वात्स्यायनः** ।

अत्रात्मनः प्रथमे नित्यत्वहेतौ—'पद्मादिषु प्रबोधसंमीलनविकारवत् तद्विकारः ।' 'नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ।' ( न्या. द. ३ । १ । २०–२१ ) इति शङ्कासमाधी । अनित्येऽपि विकारदर्शनादनैकान्त इति शङ्कासूत्रार्थः । पञ्चात्मकानां पद्मादीनां विकारा उष्णकालादिनिमित्तकाः, मनुष्यादीनां तु मुखविकासादयो हर्षादिनिमित्तका इति न तुलनेति समाधिसूत्रार्थः ।

द्वितीये नित्यत्वहेतौ—'अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ।' 'नान्यत्र स्मृत्यभावात् ।' ( न्या. द. ३।१ । २३–२४ ) इति शङ्कासमाधी । प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थं शङ्कासूत्रमित्यु**द्द्योतकरः** । अन्यत्र अयसि प्रवृत्त्यभावान्न व्यभिचारः । प्रवृत्तिर्हि चेष्टानुमिता लिङ्गं नतु क्रियामात्रमिति **विश्वनाथभट्टाचार्यः** ।

तृतीये नित्यत्वहेतौ—'सगुणद्रव्योत्पत्तिवत्तदुपपत्तिः ।' 'न संकल्पनिमित्तत्वाद्रागादीनाम् ।' ( न्या. द. ३ । १ । २६–२७ ) इति शङ्कासमाधी । तदुपपत्तिः आत्मनो रागजन्म ॥

अत्र प्रशस्तपादभाष्यापराख्यपदार्थधर्मसंग्रहानुसारी **विश्वनाथ-**

**पञ्चानन**ग्रन्थः—

"आत्मेन्द्रियाद्यधिष्ठाता, करणं हि सकर्तृकम् ।
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ॥
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ।
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ॥
धर्मा धर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ।
प्रवृत्त्याद्यनुमेयोऽयं, रथगत्येव सारथिः ॥
अहंकारस्याश्रयोऽयं, मनोमात्रस्य गोचरः ।
विभुर्बुद्ध्यादिगुणवान् ( काणादे गौतमे नये ) ॥"

अलमियता समानतन्त्रप्रस्तावेन ॥

वस्तुत आत्मनि न प्रमाणापेक्षेति प्रतिपाद्यते—

"प्रमातृतास्पदे तत्र प्रमाणं नोपयुज्यते ।
करणात्कर्तुराधिक्यमन्यैरप्युपपाद्यते ॥
स्वतन्त्रः खलु कर्तेति शाब्दिकैरप्युदीर्यते ।
तच्च स्वातन्त्र्यमन्येभ्यः कारकेभ्यः प्रधानता ॥
यत्प्रभावात्प्रमाणानां प्रमाणत्वव्यवस्थितिः ।
तत्रैव तदपेक्षेति न किं व्यर्थं वचो भवेत् ॥
लौकिकानां प्रमाणानामनाश्वासाद्धि यौक्तिकैः ।
ईश्वरस्य प्रमाणत्वं प्रमातृत्वेऽप्युदाहृतम् ॥
प्रमातरि प्रमाणं किमिति पृच्छन्प्रमातृताम् ॥
विजहाति नवा, नाद्यः, प्रश्नस्यानुपपत्तितः ।
न द्वितीयश्च कल्पः स्यात्, प्रमाणं किमु विस्फुरेत् ॥
इति हि प्रश्नतात्पर्यं तत्रात्मन्यैक्यसंमतौ ।
मयि त्वयीति भेदोऽयं न कदाचन युज्यते ॥
नानात्मत्वे स्वविषयं प्रमाणं प्रति भावना ।

पृच्छ्यते प्रतिवादीति महन्मौर्ख्यं प्रसज्यते ॥
भ्रान्तिश्चेदात्मनि भ्रान्त्या बुद्धे रज्जुभुजङ्गवत् ।
वाच्यं प्रमाणमित्येतदुन्मत्तवचनायते ॥
अथ नास्त्येव मे तत्र प्रतीतिरिति कथ्यते ।
तत्र प्रमाणं पृच्छ्येत कीदृग् वोत्तरमुच्यताम् ॥
अगोचरः प्रमाणानामत आत्मा महेश्वरः ॥" इति ॥

चार्वाकस्य कर्म शंसँस्तत्प्रतीकारार्थमाह—**यथागतेति** । पूर्वे तावद् अक्षपादवात्स्यायनोद्योतकरवाचस्पत्युदयनप्रभृतयः सुगृहीतनामधेयाः ।

इह वेदविषयिणी चार्वाकोक्तिरित्थंप्राया—

'अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
प्रज्ञापौरुषहीनानां जीविका धातृनिर्मिता ॥' ( सर्वदर्शन. ) ॥

प्रायेण महाकुलप्रसूता अपि प्रकृत्या दुर्ललिता दृष्टसुखपराभूता नवनवा लौकायतिकस्वभावा लोकयात्रिकैरुपलभ्यन्ते तदर्थं पुनर्विशिष्याह—**किंनागतः सोऽद्य विवादकाल इति** । स लोकागमपरीक्षाप्रसिद्धः, विवादकालः वादिप्रतिवादिवाकोवाक्यावसरः, पारम्परीणां शिक्षाणामनुन्मेषेण वैधुर्येण वा किमद्य माण्डलिककण्डने भारतमण्डले नागतः? आगतेऽप्यननुमया पार्श्वप्रेक्षिकैव । अनुमयैव प्राक् 'चार्वाकचार्वीक्रम-कर्तनासु' इत्यत्र प्रतिक्षेपाणामनपूर्वतायामपि तत्र परिष्कारसंस्काराणमर्यादया अपूर्वताभवनाय लिङा विधिराश्रीयते । यत्र विवादकाले प्रेक्षावतां प्रतिभाशालिनां महांसि ब्रह्मवर्चसप्रभावाः, उह्यन्ते वाह्यन्ते वा वाहाः जलस्थलव्योमसाधारणाः । व्यस्तं रूपकम् । त्रयी दर्शितरीत्या ऋग्यजुःसामलक्षणा वेदचतुष्टयी, धनुः कार्मुकम् । व्याकरणादि षडङ्गम्, मौर्वी । वेदानां व्याकरणादीनां च अङ्गाङ्गिभाव उपकार्योपकारकभावनिबन्धनः । तथाहि—वेद्यन्त इति वेदाः—शिक्षया शिक्ष्यन्ते, छन्दसा छाद्यन्ते, व्याकरणेन व्याक्रियन्ते, निरुक्तेन निरुच्यन्ते, कल्पेन कल्प्यन्ते, ज्योति-

देण द्योत्यन्ते, इति योगैर्यथायथं शब्दतोऽर्थतोऽनुष्ठानतश्च रक्ष्यमाणाः पारम्पर्येण श्रोत्रियाणां हृदयदुर्गेष्वावर्तमानाः। षड्दर्शनी—वैशेषिकन्यायौ, सांख्ययोगौ, पूर्वोत्तरमीमांसे इति द्वन्द्वत्रयी दिव्यशराः। दिव्यत्वं च लक्ष्याव्यभिचारित्वादि। भवेयुरिति यथायोगं योजनीयम्।

ननु व्याकरणादिषट्क इव न वैशेषिकादिषट्के परस्परमैकमत्यम्, वैमत्ये संहत्य कार्यकारिता कथं स्यात्। सांख्ययोगयोर्गुणानामिव द्रष्टव्या। किं वा परमार्थतो न तावद् दर्शनानां वैमत्यं, किं तु तदाभास इति लघूकृत्य मनाङ् निरूप्यते—काश्यपेन **कणाद**महामुनिना महेश्वरप्रसादाद् धर्मं प्रधानीकृत्य वैशेषिकतन्त्रं व्यरचि प्राक्, तदनु **गौतमेन** महामुनिना कथां प्रधानीकृत्य न्यायतन्त्रमिति। अनयोस्तर्क इति साधारणी समाख्या। 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इति **मनुस्म**रणात्। कणादोक्तेषु द्रव्यादिसप्तपदार्थेषु गौतमोक्तानां प्रमाणादिषोडशपदार्थानामन्तरभावो भवतीति सिद्धान्तमुक्तावलीप्र**काशादितो**ऽवसेयम्। एवं मतभेदेऽपि न वैशेषिकन्यायतन्त्रयोर्वैमत्यम्। पदार्थसूत्रे त्विमे—'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' (वै. द. १। १। ४) 'द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः। तच्चेश्वरचोदनाभिव्यक्ताद् धर्मादेव' इति **प्रशस्तपादः**। षट्पदार्थकथनं भावाभिप्रायेण वस्तुतोऽभावोऽपि पदार्थान्तरतया मुनेरिष्टः। अतएव—'कारणाभावात् कार्याभावः। नतु कार्याऽभावात् कारणाभावः' (वै. द. १।२।१-२) इत्यादि संगच्छते॥ 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' (न्या. द. १।१।१) इति॥ इह धर्मपदं श्लिष्टं द्रष्टव्यम्॥

**कपिलेन** महामुनिना ज्ञानं प्रधानं कृत्वा सांख्यतन्त्रं निरूपितम्।

सांख्योक्तानि प्रकृतिप्रभृतीनि तत्त्वान्युपादाय यथावसरमीश्वरमपि सूत्रयता मुनिशिरोमणिना **पतञ्जलिना** उपासनां प्रधानं कृत्वा योगतन्त्रमनुशिष्टम्। एवं तत्त्वादिसाम्यान्न सांख्ययोगयोरपि वैमत्यम् । वस्तुतस्तु योगतन्त्रं सांख्यपदाभिधेयमपि लभ्यते, योगदर्शनभाष्यस्य **व्यासदेवेन** सांख्यप्रवचनाख्याकरणात् । प्रकृतिप्रभृतीनि तत्त्वानि तु भगवता कपिलेन **तत्त्वसमासे** निर्दिष्टानि—'अष्टौ प्रकृतयः, षोडश विकाराः । पुरुषः ।' इति ॥ अव्यक्तं बुद्धिरहंकारः पञ्चतंन्मात्राणीति प्रकृतयः, एकादश इन्द्रियाणि पञ्च महाभूतानीति विकाराः, इति पुरुषेण समं पञ्चविंशतिः । ननु योग इव सांख्येऽपि षड्विंश ईश्वरः कस्मान्न गृह्यते ? गृह्यत एवेति तत्त्वम् । तत एव **श्वेताश्वतराणां**-मन्त्रोपनिषत्सु श्रूयते—

'नित्यो नित्यानां चेतनश्चेतनाना—
मेको बहूनां यो विदधाति कामान् ।
तत्कारणं सांख्य-योगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥' ( ६ । १३ )

यदि योगानामिव सांख्यानामीश्वरः प्रतिपाद्यो न भवेत्, तद्वचनाद्वा वेदानां प्रामाण्यं न भवेत्; तर्हि आस्तिकषड्दर्शन्यां सांख्यं कथं गण्येत, कथं वा सांख्ययोगयोः समानतन्त्रता तैर्थिकैः परिभाष्येत । एवं च सांख्यदर्शनं निरीश्वरमिति स्वप्नेऽपि न वक्तव्यम् । यत्तु पुनः **कपिलेन** सांख्यषडध्याय्याम्—'ईश्वरासिद्धेः' ( १ । ६२ ) 'ईदृशेश्वरसिद्धिः सिद्धा' ( ३ । ५७ ) इति सूत्रितं तथोत्तरमीमांसायां सांख्ययोगौ प्रत्युक्तौ, तदाशयोऽग्रे प्रतिपादयिष्यते ॥

भगवता **जैमिनिना** महामुनिना, तद्गुरुणा भगवता **वेदव्यासेन** मुनिमूर्धन्येन च मन्त्रब्राह्मणरूपानविकलान् वेदानेव धर्मब्रह्माभिधित्सया कर्मज्ञानप्रधानाभ्यां पूर्वोत्तरमीमांसाभ्यां विभज्य धर्मब्रह्ममीमांसानामनी दर्शने निरमायिषाताम् । तत्र पूर्वतन्त्रं पूर्वमीमांसापदेन, उत्तरतन्त्रमुत्तर-

मीमांसापदेन, वेदानामन्तिमसिद्धान्तत्वाद् वेदान्तपदेनापि प्रख्याप्यते। एवं वेदान् विभज्य यथाविभागं प्रतिपदार्थं प्रतिवाक्यार्थमनुवर्तमाने इमे मीमांसे एकशरीरे एव, तदा क्व वैमत्यमुत्प्रेक्षेत? तथाहि—

'तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥'

(ऋ.सं. १० मं. ८ अनु. ९० सू.। य.सं. ३१। ७। अ.सं. १९ कां. १ अ. ६ सू.)

"प्रजापतिरकामयत प्रजायेय भूयान् स्यामिति, स तपोऽतप्यत, स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम्, ताँल्लोकानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्—" इति। (ऐतरेय ब्रा. ५ पञ्जिका. ५ अध्या. ७ ब्रा.)। "स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि" इति (शतपथब्रा. १४ कां. ४ प्रपा. ५ अध्या. ४ ब्रा.)।

'ऋचः सामानिच्छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रितः ॥'

(अथर्वसं. ११ कां. २४ प्रपा. ४ अनु.)

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत, आकाशाद् वायु,र्वायोरग्नि, रग्नेरापो,ऽद्भ्यः पृथिवी, पृथिव्या ओषधय, ओषधिभ्योऽन्न,मन्नाद्रेतो, रेतसः पुरुषः" (तैत्ति. उप. २। १)

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद् ब्रह्मेति" इति (तैत्तिरीयोप. ३। १)

इत्येवंप्रकारा प्रादुर्भावपद्धतिः।

'प्रजापतिर्यज्ञानसृजता,ग्निहोत्रं च—' इत्यादि ।

( तैत्तिरीयसं. १ कां. ६ प्रपा. ६ अनु. )

'राजसूयं वाजपेयम्—' इत्यादि च यज्ञाख्यानम् ।

( अथर्वसं. ११ कां. २५ प्रपा. ४ अनु. )

'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च–' इत्यादि यज्ञपात्राणि ।

( तै. सं. १ कां. ६ प्रपा. ८ अनु. )

'ऋचां त्वः पोपमास्ते—' इत्यादय ऋत्विजः ।

( ऋ. सं. १० मं. ६ अनु. ७१ सू. )

'अहे वुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः ।
ऋचः सामानि यजूंष्यपि साहि श्रीरमृता सताम् ॥'

( तैत्तिरीयब्रा.१ अष्ट. २ अनु. )

इत्येवमर्धादपि भूयानधिको वेदभागः क्रियार्थः ।

'यस्य भूमिः प्रमान्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥'

( अथर्वसं. १० कां. २३ प्रपा. ४ अनु. )

'सपर्यगाच्छुक्रमकायमव्रणमस्नाविरंशुद्धमपापविद्धम् ।'

( वाजसनेयिसं. ४० । ८ )

इत्येवमुपासना ज्ञानार्थ इति ।

इत्थं क्रियार्थो वेदभागः पूर्वमीमांसया, उपासनाज्ञानार्थ उत्तरमीमांसया च मीमांस्यते स्म । अत्र 'उच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति' इत्युक्त्या मन्त्राणामनेकार्थयोगत्वेऽपीदंकयापि युक्त्याऽन्यथयितुं न शक्यते, यद् वेदानां तदुद्भूतानां कल्पानां सनातनव्यवहाराणां चाकलनात् पूर्वोत्तरमीमांसयोः पर्यालोचनाच्च **यज्ञ ईश्वर** इति द्वयमेव मुख्यं मन्त्राभिधेयम्, इतरत्संपातपतितम् । इत्थं च क्रियाविषयो यज्ञ उपासनाज्ञानविषय ईश्वर इति निष्पन्नम् । इज्यते अनेनात्र वेति यदर्थे यजनकरणिका यजनाधिकरणिका भावना स ईश्वर इति चेतनो न जड इति लोकतोऽप्यवसीयते । तथा च श्रूयते स्मर्यतेऽपि—

"यज्ञेन यज्ञमयजन्त देवा-
स्तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः सचन्त,

यत्र पूर्वे साध्याः सन्ति देवाः ॥" (य. सं. ३१ । १९)

"सहयज्ञाः प्रजाः सृष्ट्वा, पुरोवाच प्रजापतिः ।

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥

देवान् भावयताऽनेन, ते देवा भावयन्तु वः ।

परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥" (भ. गी. ३ । १०-११)

यज्ञ इति 'यज—देवपूजासंगतिकरणदानेषु' इति प्रकृतितः 'यज-याच—' (३ । ३ । ९०) इति सूत्रेण नङि नियम्यते । 'यज्ञो वै विष्णुः' इत्यप्याम्नायते । किं बहुना—

'यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः ।

अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥'

(अथ. सं. १० कां. २३ प्रपा. ४ अ.)

इत्येवंजातीयकश्रुतिपरिगृहीतानां ब्रह्मणो विराडवयवघटकानामग्नि-वायुसूर्यप्रमुखाणां तथा निरुक्तनिरूपितानां तद्भक्तिप्रकाराणां यजनद्वारेण ब्रह्मप्रीणनपर्यवासनकं सविशेषप्रस्थानमेवावस्थान्तरत्वेन चरमभूमिमासाद्य निर्विशेषप्रस्थानमशिश्रियदिति पुराणेतिहासतोप्यतिरोहितम् । एतेन जैमिनिदर्शनं निरीश्वरमिति भ्रान्तिविलसितम् । भवतश्चात्र श्लोकौ—

'यथा चाङ्गोपचारेण जीवात्मा खलु तुष्यति ।

तथाग्न्यादिप्रीणनेन परमात्मा प्रसीदति ॥

योगेन रूढ्योभाभ्यां वा कोप्यग्निरभिधीयताम् ।

ऋगादिगीतभूमायं किंततो व्यतिरिच्यते ॥

इत्थं मीमांसापरिग्रहेणैव—

'नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।

देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥'

'अमरीकबरीभारभ्रमरीमुखरीकृतम् ।

दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥'

इत्येवमादयः परः सहस्राः सूक्तयः संगच्छन्तेऽन्यथा तासामनुपपत्तयः पुरःसरन्ति । अत्र इन्द्रवरुणभवशर्वरुद्रमृडेतिजातीयान् सूत्रांशान् प्रणयन्नत्रभवान्**पाणिनि**रप्यनुकूल एवेति सुदूरेक्षिकया परीक्षणीयम् । इति **द्वन्द्वत्रयी** ॥

कालकलनयापि पृथिव्यादिभूतवद् वेदा हि स्वप्रामाण्यवादाय परं न कामयन्ते, तत एतत्पूर्वोत्तरमीमांसयोस्तर्कादिना समं संवादे परीक्ष्यमाणे वेदस्य तर्कादिना क्रियानन्वय इति पुरस्तात् । ईश्वरः—सृष्टिरिति प्राधान्येन द्वेधा विचारभूमिः । प्रतिपादकप्रतिपाद्यभेदेन द्वेधा सृष्टिः । सूक्ष्मस्थूलभेदेन प्रतिपादकप्रतिपाद्यावपि द्वेधा । तत्र सूक्ष्मः प्रतिपादकः परापश्यन्तीमध्यमाविभक्तः समाधिप्रत्ययः, स्थूलः प्रतिपादकः वैखरीविवर्त्त ऋग्यजुः सामविभक्तः । अस्यैवाङ्गोपाङ्गप्रभृतयो विभूतयः । सूक्ष्मः प्रतिपाद्यः—आकाशादितन्मात्राणि, स्थूलः प्रतिपाद्यः—आकाशादिमहाभूतानि स्थावरो जङ्गमश्च । स्थावरोऽपि चेतनाचेतनभेदेन द्वेधा । तत्र चेतनाः—उद्भिज्जाः । अचेतनाः पर्वतादयः । जङ्गमोऽपि जरायुजाण्डजस्वेदजभेदेन विभक्तः । जरायुजेष्वपि मनुष्याः, तत्रापि ब्राह्मणादयश्चत्वारो वर्णाः, तत्रापि द्विजातयः इत्यादिरूपो मन्त्रब्राह्मणलभ्यो वस्तुविभागः ॥

**वैशेषिकीयं** धर्मप्रकरणं वेदनित्यताप्रतिक्षेपवर्जं मीमांसासंमतम्—'तद्दुष्टभोजने न विद्यते । दुष्टं हिंसायाम् । तस्य समभिव्याहारतो दोषः । तददुष्टे न विद्यते । पुनर्विशिष्टे प्रवृत्तिः । समे हीने वा प्रवृत्तिः । एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ।' (वै. द. ६।१।६-१२) इत्यादि । 'दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय । अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय । चातुराश्रम्यमुपधा अनुपधाश्च ।' (वै. द. ६।२।१-२) इत्यादि । एवम**क्षपादीये** तत्त्वज्ञानोत्पत्तितद्विवृद्धिप्रकरणे—'दोषनिमित्तानां तत्त्व-

ज्ञानादहंकारनिवृत्तिः । दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः । तन्निमित्तं त्ववयव्यभिमानः ।' (न्या. द. ४ । २ । १-३) इति । 'समाधिविशेषाभ्यासात् । नार्थविशेषप्राबल्यात् । क्षुदादिभिः प्रवर्तनाच्च । पूर्वकृतफलानुबन्धात्तदुत्पत्तिः । अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः । अपवर्गेऽप्येवं प्रसङ्गः । न, निष्पन्नावश्यंभावित्वात् । तदभावश्चापवर्गे । तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः । ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः । तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयिभिरभ्युपेयात् ।' (न्या. द. ४ । २ । ३८-४८) इति च । इह 'नार्थ—' इति सूत्राभ्यां शङ्का 'पूर्वकृत—' इत्यनेन समाधिः, तथा 'अपवर्ग—' इति सूत्राभ्यां शङ्कासमाधी ॥

यत्तूभयत्र शरीरेभ्य आत्मनां पृथक् साधनार्थम्—'प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाप्रयत्नाश्चात्मनो लिङ्गानि' (वै. द. ३ । २ । ४) 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्' (न्या. द. १ । १ । १०) इति लिङ्गप्रदर्शनं तथा तत्र 'संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ बुद्धयः सुखदुःखेच्छाद्वेषौ प्रयत्नाः संस्कारो धर्माधर्मौ' इति समवायसंबन्धिनां चतुर्दशानां गुणानामाख्यानं तद् आधानाभ्युदयनिःश्रेयसकामान् प्रति प्रथमभूमिकायामात्मपरीक्षणाभिप्रायेण नेतव्यम् । परमार्थतो निष्क्रियो निर्गुणो निर्मलो नित्यश्चेतनश्चात्मेति श्रवणस्मरणाभ्याम् । तथा च भगवता **वासुदेवेन** गीता स्मृत्या श्रुतिः—

"न जायते, म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो,
न हन्यते हन्यमाने शरीरे ॥" (भ. गी. २ । २०)

अत्र मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यद्प्यात्मानं गुणानुष-

ङ्गप्रसङ्गात्परमात्मनीश्वरे संख्यादिपञ्चकं बुद्धिरिच्छाप्रयत्न इति वा संख्या-बुद्धीच्छाप्रयत्नसुखानीति वा गुणोत्प्रेक्षणं, तत् साकारोपासनाभिप्रायेण नेतव्यम्। यदपीश्वरस्य सृष्टिं प्रति निमित्तकारणत्वं परमाणुद्व्यणुक-प्रभृतीनां समवायिकारणत्वम्, तदङ्ग। प्राकृतांल्लौकायतिकानविप्रति-पन्नान् भूतात्मभ्यो भौतिकपिण्डेभ्यो जीवात्मनो भोक्तॄन् पृथग् ग्राहयतां तार्किकाणां कुलालदण्डमृत्खण्डघटादिलौकिककार्यकारणभावकथनानु-रूपम्। एतेन व्यवहारभूमिषु आकाशादीनां नित्यत्वं वेदादीनामनित्यत्वं चेति व्याख्यातप्रायम्। यत्तु **न्यायकुसुमाञ्जलौ** पञ्चमस्तबके **श्वेता-श्वतर**शाखिनां 'विश्वतश्चक्षुः—' इतिमन्त्रविवरणे पतत्रपदेन परमाणु-ग्रहणं तदिदं खलु परमाणुकृते त्रयीगवीनिष्पीडनमन्याय्यम्। तथा च तदुक्तिः—"पक्षेन परमाणुरूपप्रधानाधिष्ठेयत्वम्, ते हि गतिशीलत्वात् पतत्रव्यपदेशाः, पतन्तीति।" इति **तर्कसंमेलनदिक्**॥

**सांख्यीय**मात्मादिकमीश्वरासिद्धिप्रतिक्षेपवर्जं मीमांसासंमतम्—'शरीरादि व्यतिरिक्तः पुमान्' (सां. द. १। १३९) 'जडप्रकाशायोगात् प्रकाशः' (१। १४५) 'अस्त्यात्मा-नास्तित्वसाधनाभावात्। देहादिव्य-तिरिक्तोऽसौ वैचित्र्यात्' (६। १-२) 'असङ्गोऽयं पुरुष इति' (१।१५) 'निर्गुणत्वमात्मनोऽसङ्गादिश्रुतेः' (६।१०) इत्यात्मा। 'संघात-परार्थत्वात् पुरुषस्य' (१।६६) 'संहतपरार्थत्वात्। त्रिगुणादिविपर्ययात्। अधिष्ठानाच्चेति। भोक्तृभावात्। कैवल्यार्थप्रवृत्तेः।' (१। १४०-१४४) इत्यात्मास्तित्वे युक्तयः। 'न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः। स्वभावस्यानपायित्वाद्—अननुष्ठानलक्षणमप्रामाण्यम्। नाशक्योपदेश-विधिरुपदिष्टेऽप्यनुपदेशः।' (१। ७-९) 'न कालयोगतो-व्यापिनो नित्यस्य सर्वसंबन्धात्। न देशयोगतोऽप्यस्मात्। नावस्थातो-देहधर्मत्वात् तस्याः। न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च।' (१। १२-१४। १६) 'न कर्मणाऽप्यतद्धर्मत्वात्' (१। ५२) इत्यात्मबन्धनिरासः। 'चिद-

वसानो भोगः' (१।१०४) 'चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात्' (६।५५) वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाश्च। तन्निवृत्तावुपशान्तोपरागः स्वस्थः। कुसुमवच्च मणिः।' (२।३३-३५) निःसङ्गेऽप्युपरागोऽविवेकात्। जायास्फटिकयोरिव नोपरागः किं त्वभिमानः। ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः।' (६।२७-२६) 'ध्यानं निर्विषयं मनः' (६।२५) 'रागापहतिर्ध्यानम्। वृत्तिनिरोधात् तत्सिद्धिः। धारणासनस्वकर्मणा तत्सिद्धिः। स्थिरसुखमासनम्। निरोधश्छर्दिविधारणाभ्याम्। स्वकर्म-स्वाश्रमविहितकर्मानुष्ठानम्। वैराग्यादभ्यासाच्च।' (३।३०-३६) इत्यादि। **योगे**ऽपि—'द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः' (यो. द. २।२०) 'योगश्चित्तवृत्तिनिरोधः। तदा द्रष्टुः स्वरूपेऽवस्थानम्। वृत्तिसारूप्यमितरत्र। वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः। प्रमाणविपर्ययविकल्पनिद्रास्मृतयः।' (यो. द. १।२-६) 'अभ्यासवैराग्याभ्यां तन्निरोधः' (१।१२) 'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' (१।१४) 'व्याधि-स्त्यान-संशय-प्रमादाऽऽलस्या-ऽविरति-भ्रान्तिदर्शना-ऽलब्धभूमिकत्वा-ऽनवस्थितत्वानि (६) चित्तविक्षेपास्तेऽन्तरायाः। दुःखदौर्मनस्याङ्गमेजयत्व-श्वासप्रश्वासा (४) विक्षेपसहभुवः। तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः। मैत्री करुणा-मुदितोपेक्षाणां (४) सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' (१।३०-३३) 'तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः। समाधिभावनार्थः क्लेशतनूकरणार्थश्च। अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः' (२।१-३) 'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेक-ख्यातेः। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि। अहिंसासत्यमस्तेयब्रह्मचर्याऽपरिग्रहा यमाः' (२।२८-३०) 'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' (२।३२) 'अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः। सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्। अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थापनम्।

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः । अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः' (२।३५-३६) 'तारकं सर्वविषयं सर्वथा विषयक्रमं चेति विवेकजं ज्ञानम्।' (३।५३) 'कर्माऽशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्' (४।७) 'तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्' एवमादि ।

अत्रोभयत्र न वैशेषिकवन्नवा न्यायवद् इच्छासुखदुःखप्रभृतयोऽन्तःकरणगुणा आत्मसु परिगण्यन्ते, किं तु यथास्थानमेवाद्रियन्ते । परमेवं सत्यपि सुखप्रतिपत्तये वैशेषिकादिवद् आत्मानोऽनेके प्रतिपाद्यन्ते । सुखप्रतिपत्तिस्त्वेवम्—

'जन्ममरणकरणानां
प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं
त्रैगुण्यविपर्ययाच्चैव ॥'

इत्यैश्वरकृष्णीया सूत्रार्थानुकूला कारिका । अत एतदुक्तं माध्यमिकान् विनेयान् प्रति मध्यमभूमिकायामात्मपरीक्षणाभिप्रायेण संगमनीयम् । युज्यते चेत्थं कोशगूढस्यात्मपदार्थस्य प्रादुष्करणम् । वस्तुतो नात्मानोऽनेके । तथा च पठ्येते श्रुतिस्मृती—

'एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥'
'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥'

तर्के परमाणुवत् सांख्ये प्रकृतिर्जगत्कारणमिति लोकानुसरणम् । एवं यथासंभवं श्रुतिसमयपरिपालनेऽपि स्वस्वप्रतिज्ञातपदार्थतत्त्वानियमितसंचारेणावान्तरवैषम्यं सहजम् । अथापि परमाण्वादिवत् प्रकृत्यादि न वेदशरीरात् शब्दार्थाभ्यामतितरां विप्रकृष्टम् । तत एव हि सांख्याः प्रकृत्यादिपदार्थान् श्रुतितात्पर्यतः सूत्रादिषु संक्रामयन्तः परीक्ष्यन्त इति

नातितिरोहितम् । इह—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः (सरूपाः) अजा ये तां जुषमाणां भजन्ते (अजो ह्येको जुषमाणोऽनुशेते) जहत्येनां भुक्तभोगां नुतस्तान् (जहात्येनां भुक्तभोगामजोन्यः)।' इत्येवमादयः श्रुतिसूत्रानुगता **वाचस्पतिमिश्र-**प्रमुखाणां सूक्तयोऽपि निदर्शनम् (सा. त. कौ. मङ्ग. । श्वेताश्व. उप. ४-अ. ५ मं.)।

इह पुनरीश्वरासिद्धिप्रतिक्षेपस्त्वेवंतात्पर्यकः—निष्क्रियो निर्गुणो निर्मलो नित्यश्चेतनश्चायमात्मेति सांख्यैरङ्गीक्रियत एव । स विभुरिति प्रायः सर्वतन्त्रसिद्धान्तः । महामुनिना **कणादेन** सूत्रितमपि 'विभवान्महानाकाशस्तथा चात्मा' (वै. द. ७ । १ । २२) अस्माभिरपि पठ्यते—

'जरायुजादिके संघे चिह्लिङ्गानामवेक्षणात् ।
अचितोऽप्यात्मयोगित्वमाकाशवदपेक्ष्यताम् ॥'

'तत्रात्मा मनश्चाप्रत्यक्षे' (वै. द. ८ । १ । २) इति काणादाः । नैयायिकास्तु जीवात्मैव मानसप्रत्यक्षविषय इत्याहुः । आत्मनो विभुत्वेन तस्य सर्वगतत्वं सुप्रसिद्धं तावत् । अयमेवात्मा पुरुष इत्यभिलप्यते सांख्यैः । जीवस्तु कर्तृत्वभोक्तृत्वादिविशिष्टो देहीति । तथाच सूत्र्यते—'विशेषकार्येऽपि जीवानाम्' (सां. द. १ । ९७) 'विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्' (सां. द. ६ । ६३) अयमेव जीवपदार्थः **श्वेताश्वतरोपनिषत्सु** विततं व्याक्रियते—

"गुणान्वयो यः फलकर्मकर्ता,
कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा
प्राणाधिपः संचरति स्वकर्मभिः ॥
अङ्गुष्ठमात्रो रवितुल्यरूपः
संकल्पाहंकारसमन्वितो यः ।

बुद्धेर्गुणेनात्मगुणेन चैव
आराग्रमात्रो ह्यप ( व ) रोऽपि दृष्टः ॥
वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥
नैव स्त्री, न पुमानेष, न चैवायं नपुंसकः ।
यद् यच्छरीरमादत्ते, तेन तेन स युज्यते ॥
संकल्पनस्पर्शदृष्टमोहै-
र्ग्रासाम्बुवृष्ट्या चात्मविवृद्धिजन्म ।
कर्मानुगान्यनुक्रमेणदेही
स्थानेषु रूपाण्यभिसंप्रपद्यते ॥
स्थूलानि सूक्ष्माणि बहूनि चैव
रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषां
संयोगहेतुरपरोऽपि दृष्टः ॥" इति ( ५ । ७-१२ )

एवं च सांख्यानां पुरुषपदार्थ एवेश्वर इति निपुणं परीक्षणीयम् । स चायं भगवान् प्रकृतेऽवच्छेदकभेदेनान्तर्यामिरूपः साक्षी । सुकृत-दुष्कृतभारवाही जीवस्तु पृथक् । किं वा, तस्कराणामिव तेषाम्—'ईश्वरा-सिद्धेः' 'ईदृशेश्वरसिद्धिः सिद्धा' इत्येवं भाषाभङ्गिरपि ईश्वरग्रहणमनुमाप-यति । आत्मशब्दवत् पुरुषशब्दोऽपि नैकार्थः । तत एव परमात्मा, पुरुषविशेषः, पुरुषोत्तम इति चाख्यायते । परमेश्वरः परब्रह्मेत्यप्यर्थः । अत्र सांख्यानाम्—'अजामेकां–' ( श्वे. उ. ४ । ५ ) इति मातृभूतायाः श्रुतेरनन्तरं तदनुजे श्रुती अपीमे स्मर्तव्ये—

'द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य-

नश्नन्नन्यो अभिचाकशीति ॥
समाने वृक्षे पुरुषो निमग्नो-
ऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीश-
मस्य महिमानमिति वीतशोकः ॥' ( श्वे. उ. ४ । ६-७ )

इति **सांख्यसंमेलनादिक** ।

इत्थं च तर्कसांख्ययोर्मीमांसाभ्यां परमार्थतो वैमत्याविरोधेऽपि परस्परमनयोः किंमूलको विरोध इति चेत्, सुखावबोधार्थं नैपुण्यार्थं वा प्रतिज्ञातयोः परमाणुप्रकृतिवादमुख्ययोरधिकरणसिद्धान्तयोर्योगक्षेममूलक इति साधु समाधीयताम् । इत्थमपि पुनर्मीमांसाभ्यां तर्कसांख्ये किमर्थं प्रतिक्षिप्ते ? आर्षज्ञानप्रतिष्ठार्थमिति प्रतिपद्यताम् । अतोऽनार्षज्ञानप्रतिष्ठार्थे मीमांसा-प्रतिक्षेपोऽन्याय्य इति व्यक्तम् । तथाच लभ्यते **पराशरो**पपुराणादौ—

"अक्षपादप्रणीते, च काणादे, सांख्ययोगयोः ।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः ॥
जैमिनीये, च वैयासे, विरुद्धांशो न कश्चन ।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥ " इति ।
( सांख्यप्रवचनभाष्यभूमि० )

इह मामकोऽपि श्लोकः—

'वेदङ्गवदुपाङ्गानि कृतानि स्युर्महात्मभिः ।
तदान्योन्यं मतक्षेपो न जायेत विदांवराः ॥' इति ।

शरीरादिव्यतिरिक्त आत्मेति सर्वतन्त्रसिद्धान्तः । उत्तरमीमांसायामपि प्रसङ्गादुक्तम्—"एक आत्मनः शरीरे भावात् । व्यतिरेकस्तद्भावाभा-वित्वान्नतूपलब्धिवत्" ( वे. द. ३ । ३ । ५३-५४ ) इति । अत्र **भारती-तीर्थो**क्तावधिकरणश्लोकौ—

"आत्मा-देहस्तदन्यो वा चैतन्यं मदशक्तिवत् ।

भूतमेलनजं देहे, नाऽन्यत्राऽऽत्मा, वपुस्ततः ॥
भूतोपलब्धिर्भूतेभ्यो विभिन्ना विषयित्वतः ।
सैवात्मा, भौतिकाद्देहादन्योऽसौ परलोकभाक् ॥"

"पृथिव्यादीनां भूतानामुपलब्धिर्भूतेभ्यो व्यतिरिक्ता भवितुमर्हति, विषयित्वात् । यद् यद् विषयि, तत्तद् विषयादतिरिक्तम्, यथा रूपात् चक्षुः" इत्यादि । आत्मनोऽनेकत्वं सगुणत्वं विभुत्वमिति तार्किकाः प्रतिपेदिरे । तत्र सांख्यास्तु सगुणत्वं न मेनिरे, जीवात्मनस्तु बुद्ध्यहंकारयोरन्तर्भावं चक्रिरे । वेददृष्ट्या तु तस्य अनेकत्वसगुणत्वे विरुद्धे । तत एव सूक्ष्मतरतममीमांसादृष्ट्या चरमभूमिकायामात्मपरीक्षणमुपनतम् । तच्च प्रागपि यथाप्रसङ्गं बहुत्रागतम् । ब्रह्म-ईश्वर-आत्मेति नार्थान्तरम् । इह अन्तःकरणावच्छेदेन आत्मपदार्थ एव पिप्पलमनश्नन्नश्नन् साक्षी भोक्तेति श्रूयते स्मर्यते च—

'अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥' ( कठो. १ । २ । २२ )
'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।' ( कठो. १ । ३ । ४ )
'न तस्य कार्यं करणं च विद्यते' ( श्वे. ६ । ८ )
'साक्षी चेता केवलो निर्गुणश्च' ( श्वे. ६ । ११ )

'नैनमूर्ध्वं न तिर्यञ्चं
न मध्ये परिजग्रभत् ।
न तस्य प्रतिमा अस्ति
यस्य नाम महद्यशः ॥' ( श्वे. ४ । १९ )

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥' ( गी. १८ । ६१ )

"राहुरदृश्योऽपि यथा
शशिबिम्बस्थः प्रकाशते, तद्वत् ।

सर्वगतोऽप्ययमात्मा
विषयाश्रयणेन धीमुकुरे ॥" (अभिनवगुप्तपादाचा. ८)

गणितागमोपपन्नया अनुमाश्लिष्टया प्रत्यक्षदृशा तु—'भूभाऽदृश्यापि यथा शशिबिम्बस्था' इति वा पाठो भौतिकविज्ञानवादिभिः पठ्यताम्।

अत्रेदमपि पुनराकलनीयम्—धर्मवद् ब्रह्मापि जिज्ञास्यं चोदनागम्यम्। यतो धर्मब्रह्मणी उभे अपीन्द्रियागोचरे। अस्तु साध्यो धर्मो ज्ञानकालेऽविद्यमानत्वात् इन्द्रियागोचर इति चोदनागम्यो भवतु तावत्, सिद्धं ब्रह्म तु बृहत्त्वाद् बृंहणत्वाद्वा आत्मैव श्रूयते। स चायमहमस्मीत्यहंप्रत्ययेन आ च हालिकात् सुप्रीतः किमिति चोदनागम्यः। सत्यम्। आत्मा मूलाविद्यया स्वस्मिन्नाविर्भूतमहमस्मीति प्रतीतिप्रत्यायकमहंकारमभेदेन गृह्णीते; स्वाभेदेन गृहीतोऽयमहंकारः आत्मचैतन्यानुस्यूतः प्रपञ्चजातं प्रकाशयन्नात्मानमानन्दयतीत्यानन्दमय इति। ततोऽहं विजानामीति बुद्धिं विवर्तयन् विज्ञानमय इति। ततोऽहं मन्ये इति मननमास्फालयन् मनोमय इति। ततोऽहं प्राणिमीति श्रवणदर्शनादीन्द्रियवृत्तिपुरस्कारेण व्याप्रियमाणः प्राणमय इति। ततो मानवोऽहमित्याद्यभिमन्यमानः शरीरवानिति। ततोऽहं परिच्छदवानिति शरीरतोऽपि बाह्याननेकप्रकारान् पुत्रकलत्रप्रभृतीन् विषयान् गृह्णानस्तत्र तत्रोपरज्यत इति। उपरक्तश्च तेषु सकलेषु विकलेषु वा अहमेव सकलो विकलो वेत्यभेदेन प्रतिपद्यते। तदेवमपरिच्छिन्ने चैतन्यैकरसेऽद्वितीये प्रत्यगात्मनि शरीरादिनिबन्धनेनाध्यासेन परिच्छिन्नत्वादिप्रत्ययावहो दोषः प्रसजति, यन्मूलकोऽयमात्मविकल्पावतरः, स मा प्रसाङ्क्षीदिति—"आत्मनस्तु कामाय सर्वं प्रियं भवति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, मैत्रेयि! आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम्।" (बृ. ४।५।६) इत्येवंजातीयाः श्रुतयः, 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः॥' इत्येवं-

प्रभृतयस्तदनुगामिन्यः स्मृतयश्च जज्ञिरे। ननु 'अशब्दमस्पर्शमरूपम्–' (कठ. १।३) इत्यादिश्रुत्या ब्रह्मणो लिङ्गाभावेनातीन्द्रियत्वमुपपद्यताम्; अहमस्मीत्यहंप्रत्ययप्रत्ययिन आत्मनो भिन्नभिन्नावभासेन संदिग्धत्वं च संगच्छताम्; अयमात्मा ब्रह्म, (बृ. २।५।१९) तत्त्वमसि, (छां. ६।८) अहं ब्रह्मास्मि, (बृ. १।४।१०) इत्येवमादिश्रुतिशासनेन तत्त्वंपदार्थशोधनेन च शास्त्रानुभवप्रामाण्यसिद्धेरस्यौपनिषदपुरुषत्वमपि संघटताम्। परमत्र नित्यनिर्वृत्ते क्रियाकारकादिप्रसरानवकाशाच्चोदनायाः किं कार्यमिति व्यर्थैव सा। न ह्येवमेकान्ततो वक्तव्यम्। कण्ठचामीकरवद् ब्रह्मात्मलाभस्यापि चोदनाजन्यत्वात्। तर्हि वराक्या तया स्वार्थस्त्यक्तो भवेत्। मैवं भोः! धर्म इव ब्रह्मणि नियोगमलभमाना सा ब्रह्मात्मभावं ज्ञापयन्ती ज्ञाने ज्ञातव्याभावादेव विरमति। एवं च ज्ञानस्य मानसव्यापारत्वेऽपि यथाभूतब्रह्मात्मविषयकत्वान्न चोदनातन्त्रत्वम्। अत एव नियोज्याकाङ्क्षायां लिङाद्युत्थाप्यमानाप्यार्थीभावना आत्मनि हानोपादानासंभवान्न पराक्रमते।

अयमात्मलाभोपदेशो गीतास्वधिकारिभेददर्शनेनासंहताभ्यामपि भाषाभङ्ग्या संहताभ्यामिव प्रतीयमानाभ्यामेककालिकाभ्यां ज्ञानयोगकर्मयोगशब्दव्यपदिष्टाभ्यां सांख्ययोगनिष्ठाभ्यामुपदिष्टः। यत्र देहभृतोऽशेषकर्महानासंभवेऽपि कर्तव्याकर्तव्यप्रवर्तनप्रवणाभिः फलाभिसंधिहापनोन्मुखीभिः सकलाभ्युदयनिःश्रेयससाधनीभिः सूक्तिभिर्नैष्कर्म्यसिद्धिपर्यन्तोऽपूर्वः कर्मयोग उपदिश्यत इति पुनःपुनर्विभावनीयम्। **इत्यात्मपरिचयः॥**

ब्रह्मैव जगतः कारणमिति तत्र तत्र दर्शितमेव। तच्चाभिन्ननिमित्तोपादानलक्षणम्। तदिदमूर्णनाभदृष्टान्तेन लौकिकपरीक्षकाणां बुद्धिसाम्यं दर्शयन्ती **मुण्डकश्रुतिरावेदयति**—

"यथोर्णनाभिः सृजते गृह्णते च,
यथा पृथिव्यामोषधयः संभवन्ति।

यथा सतः पुरुषात् केशलोमानि,
तथाऽक्षरात् संभवतीह विश्वम् ॥"
( प्रथममुण्ड. १ खं. ७ मं. )

**श्वेताश्वतरश्रुतिरपि—**

'यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः स्वभावतः ।
देव एकः स्वमावृणोति स नो दधातु ब्रह्माव्ययम् ॥' ( ६ । १० )

ऊर्णनाभो हि तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं, स्वशरीरप्रधानतया उपादानं च भवति । एवं ब्रह्मापि स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतया उपादानं च भवति । तथा च स्पष्टं पठ्यते—

"ईश्वरोऽनन्तशक्तित्वात्-स्वतन्त्रोऽन्यानपेक्षकः ।
इच्छामात्रेण सकलं सृजत्यवति हन्ति च ॥
न कारकाणां व्यापारात्-कर्ता स्यान्नित्य ईश्वरः ।
नापि प्रमाणव्यापाराज्-ज्ञाताऽसौ स्वप्रकाशकः ॥
ज्ञातृत्वमपि कर्तृत्वं स्वातन्त्र्यं तस्य केवलम् ।
या चेच्छाशक्तिवैचित्री, साऽस्य स्वच्छन्दकारिता ॥"
( वार्तिक का. )

अत एव कारणजिज्ञासायां **श्वेताश्वतरो**पनिषत्सु वस्तुगत्या संभावितानां कालादिकारणवादानां प्रतिक्षेपपूर्वकं परमात्मशक्तिः श्राव्यते—

"ॐ— ब्रह्मवादिनो वदन्ति,
किं कारणं ब्रह्म, कुतः स्म जाता,
जीवाम केन, क्व च संप्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु,
वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥
कालः, स्वभावो, नियति, र्यदृच्छा,
भूतानि, योनिः पुरुष इति चिन्त्या ।
सयोग एषां नत्वात्मभावा-

दात्माप्यनीशः सुखदुःखहेतोः ॥
ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि
कालात्मयुक्तान्यधितिष्ठत्येकः ॥ ( १ । १-३ )

एतेन "कपिलः प्रधानमाह, द्रव्यादीनि कणभुगस्य विश्वस्य । कालं कारणमेके, स्वभावमितरे,ऽपरे जगुः कर्म ॥" इत्याद्युक्तयो लौकिकक्रम-विकासवाददृष्ट्या निरूपिताः पर्यालोचनीयाः । एवं-ब्रह्मण एव जगतो मातापितृत्वे निर्णीते तार्किकाणां परमाणुकारणवादो वेददृशा सुतरामुद-स्यते । तत्र मन्दानां भ्रमो मा भूदिति भगवता वेदव्यासेन **वेदान्त-दर्शनस्य** द्वितीयाध्याये द्वितीयस्मिन्पादे स खलु निराकारि—'उभय-थापि न—अत्यन्तमनपेक्षा' ( १२-१७ ) इत्यादिसूत्रैः । इहेमौ **भार-तीतीर्थो**क्तावधिकरणश्लोकौ—

"जनयन्ति जगत्, नो वा, संयुक्ताः परमाणवः ।
आद्यकर्मजसंयोगाद् द्व्यणुकादिक्रमाज् जनिः ॥
सनिमित्तानिमित्तादिविकल्पेष्वाद्यकर्मणः ।
असंभवाद,संयोगे जनयन्ति न ते जगत् ॥"

एवं 'पत्युरसामञ्जस्यात्—अन्तवत्त्वमसर्वज्ञता वा' ( ३७-४१ ) इति सूत्रैस्तटस्थेश्वरवादः; तथा 'उत्पत्त्यसंभवात्—विप्रतिषेधाच्च' ( ४२-४५ ) इति सूत्रैर्जीवोत्पत्तिवादो निराक्रियते । एतयोरपि **भारतीतीर्थो**क्तौ पूर्वपक्षसिद्धान्तश्लोकौ—

"निमित्तेश्वरवादोऽयं—युक्तो, वाथ न युज्यते ।
युक्तः, कुलालदृष्टान्तान्नियन्तृत्वस्य संभवात् ॥
न युक्तो, विषमत्वादिदोषाद् ब्रह्माण्डनायके ।
ईश्वरे हि, निमित्तत्वं त्याज्यं श्रुतिविरोधतः ॥"[१]

"जीवोत्पत्त्यादिकं पञ्चरात्रोक्तं युज्यते, न वा।
युक्तं, नारायणव्यूहतत्समाराधनादिवत् ॥
युज्यतामविरुद्धांशो, जीवोत्पत्तिर्न युज्यते।
उत्पन्नस्य विनाशित्वे कृतनाशादिदोषतः ॥"

इत्थं च नार्षज्ञानमन्तरेण तर्कमात्रेण जगत्कारणादि प्रतिपत्तुं शक्यमिति श्रुतिस्मृती दर्शयतः—

'नैषा तर्केण मतिरपनेया
प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ। (कठोप. १।२।९)

'अचिन्त्याः खलु ये भावा न ताँस्तर्केण योजयेत्।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥'

'तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः'
(वे. द. २।१।११)

इतश्च नागमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम्, यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति, उत्प्रेक्षाया निरङ्कुशत्वात्। तथाहि—कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते, तैरपि उत्प्रेक्षितास्ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां शक्यं समाश्रयितुं पुरुषमतिवैरूप्यात्। अथ कस्यचित्प्रसिद्धमाहात्म्यस्य कापिलस्य अन्यस्य वा संमतस्तर्कः प्रतिष्ठित इत्याश्रीयेत एवमपि अप्रतिष्ठत्वमेव, प्रसिद्धमाहात्म्याभिमतानामपि तीर्थकराणां कपिलकणभुक्प्रभृतीनां परस्परविप्रतिपत्तिदर्शनात्। अथोच्येत अन्यथा वयमनुमास्यामहे यथा नाप्रतिष्ठादोषो भविष्यति, नहि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम। एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्केणैव प्रतिष्ठाप्यते। केषांचित्तर्काणामप्रतिष्ठत्वदर्शनेन अन्येषामपि तज्जातीयकानां तर्काणामप्रतिष्ठितत्वकल्पनात् सर्वतर्काप्रतिष्ठायां च सर्वलोकव्यवहारोच्छेदप्रसङ्गः। अतीतवर्तमानाध्वसाम्येन ह्यनागतेऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय प्रवर्तमानो लोको दृश्यते। श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिराकरणेन सम्यगर्थनिर्धा-

रणां तर्केणैव वाक्यप्रवृत्तिनिरूपणरूपेण क्रियते। मनुरपि चैवमेव मन्यते—

'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥' इति।
'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥'( १२। १०५-१०६ )

इति च ब्रुवन्। अयमेव च तर्कस्यालङ्कारो यदप्रतिष्ठितत्वं नाम। एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति। न हि पूर्वजो मूढ आसीदित्यात्मनापि भवितव्यमिति किंचिदस्ति प्रमाणम्, तस्मान्न तर्काप्रतिष्ठानं दोष इति चेत्, एवमप्यविमोक्षप्रसङ्गः। यद्यपि क्वचिद् विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते तथापि प्रकृते तावद् विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य। न हीदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धमागममन्तरेणोत्प्रेक्षितुमपि शक्यम्। रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः, लिङ्गाद्यभावाच्च नानुमानादीनामिति चावोचाम। अपि च सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः, तच्च सम्यग्ज्ञानमेकरूपं वस्तुतन्त्रत्वात्। एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थो लोके तद्विषयं ज्ञानं सम्यग्ज्ञानमित्युच्यते। यथा अग्निरुष्ण इति। तत्रैवं सति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना। तर्कज्ञानानां तु अन्योन्यविरोधात् प्रसिद्धा विप्रतिपत्तिः। यद्धि केनचित्तार्किकेणेदमेव सम्यग्ज्ञानमिति प्रतिपादितं तदपरेण व्युत्थाप्यते, तेनापि प्रतिष्ठापित्तं ततोऽपरेण व्युत्थाप्यत इति च प्रसिद्धं लोके। कथमेकरूपानवस्थितविषयं तर्कप्रभवं सम्यग्ज्ञानं भवेत्। न च प्रधानवादी तर्कविदां मुख्यः सर्वैस्तार्किकैः परिगृहीतो येन तदीयं मतं सम्यग्ज्ञानमिति प्रतिपद्येमहि। न च शक्यतेऽतीतानागतवर्तमानास्तार्किका एकस्मिन् देशे काले च समाहर्तुं येन तन्मतिरेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात्। वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वोपपत्तेः तज्जनितस्य ज्ञानस्य सम्यक्त्वमतीतानागतवर्तमानैः सर्वैरपि तार्किकै-

रपह्नोतुमशक्यम् । अतः सिद्धमस्यौपनिषदस्य ज्ञानस्य सम्यग्ज्ञानत्वम् । अतोऽन्यत्र सम्यग्ज्ञानत्वानुपपत्तेः संसाराविमोक्ष एव प्रसज्येत । अत आगमवशेन आगमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति स्थितम् । इति शारीरकग्रन्थः ॥

तार्किकाणां परमाणुकारणवाद इव सांख्यानां प्रकृतिकारणवादः प्रकृत्यादिशब्दसाम्यश्रवणेऽप्यर्थभेदाद् वैदिकविज्ञानविरोधीति व्यक्तमेव । तत एव ' ईक्षतेर्नाशब्दम् ' ( वे. द. १ । १ । ५-११ ) इत्यादिना प्रकृतिपर्यायस्य प्रधानस्याशब्दत्वमवेदप्रमाणकत्वमुक्तम् । तथा-' रचनानुपपत्तेश्च नानुमानम् ' ( वे. द. २ । २ । १-१० ) इत्यादिना विश्वरचनायामप्रयोजकत्वं च तस्य दर्शितम् । एवं सांख्यकारणवादस्वीकारेणैव-' एतेन योगः प्रत्युक्तः ' ( वे. द. २ । १ । ३ ) इति योगस्य प्रत्याख्यानम् । तथानेकात्मवादस्वीकारोऽप्येतेषामवैदिक इत्युक्तप्रायम् । सर्वेषां स्मृतिकाराणां प्रधानं **मनुरपि**—

' सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥' ( १२ । ९१ )

इत्यनेन सर्वात्मत्वदर्शनमेव प्रशशंस । वस्तुतस्तु आत्मनो विभुत्वं प्रतिपद्यमानानामेषामवच्छेदकभेदेनाकाशस्येवात्मनो भेदवर्णनादप्यभेदे एव तात्पर्यमवसीयते । अन्यथाऽविशेषेणात्मनो विभुत्वप्रदर्शनं तार्किकादीनामसमञ्जसं स्यात् । सांख्ययोगौ तु श्रुतिनिष्पन्नावेव स्मृतिपुराणेतिहासकृतां विशिष्येश्वरमभिदधतां प्रतीयेते संमतौ । तत एव **महाभारतेऽपि**—
( शांतिप. मोक्षध. )

" ' बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु । '

इति विचार्य—

' बहवः पुरुषा लोके सांख्ययोगविचारणे ।'

इति परपक्षमुपन्यस्य, तद्व्युदासेन—

'बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥'

इत्युपक्रम्य—

"ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति भूतेषु स्वैरचारी यथासुखम् ॥"

इति सर्वात्मतैव निर्धारिता ( अध्या. ३५१-३५२ ) ।

उपनिषद इव सांख्यस्य योगस्यापि श्रुतिनिष्पन्नत्वं तथैकोन्मुखं चेमौ मन्त्रौ दर्शयतः—

"तद्वेद गुह्योपनिषत्सु गूढं,
तद्ब्रह्मा वेदते ब्रह्मयोनिम् ।
ये पूर्वदेवा ऋषयश्च तद्विदु,-
स्ते तन्मया अमृता वै बभूवुः ॥" ( श्वेता. ५ । ६ )

'तत्कारणं सांख्ययोगाधिगम्यम्' ( श्वेता. ६ । १३ )

उप=समीपे ब्रह्मणो निषीदन्ति=तात्पर्येण वर्तन्त इत्युपनिषदः । किं वा—

"प्रवृत्तिहेतून्निःशेषाँस्तन्मूलोच्छेदकत्वतः ।
यतोऽवसादयेद्विद्या, तस्मादुपनिषद्भवेत् ॥
यथोक्तविद्याबोधित्वाद् ग्रन्थोऽपि तदभेदतः ।
भवेदुपनिषन्नामा, लाङ्गलं जीवनं यथा ॥" इति ।

उपनिषदिति उप-निपूर्वात् सदेरवसादनार्थविषयात् क्विपि साध्यते । संख्यायते=विचार्यते इति संख्या=सम्यग्ज्ञानम् । सा प्रतिपाद्यत्वेन अस्त्यत्रेति सांख्यम् । युज्यते=एकीभूयते इति योगः । उपनिषदो वेदान्ता इत्येकम् । इह यथावसरं श्रीमद्भगवद्गीतासंवादोऽपि पर्यवेक्षणीयः ।

एतेन श्रौतावेव सांख्ययोगपदार्थौ मध्यमविनेयानां सुखप्रतिपत्त्यर्थं प्रकृति-पुरुषादिशब्दार्थविशेषेण दर्शनतां नीतौ **कपिलपतञ्जलिभ्या**मिति स्पष्टम् । अत्रेमौ मन्त्रावुदाहार्यौ—

'तमेकनेमिं त्रिवृतं षोडशान्तं
शतार्धारं विंशतिप्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं
त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥
पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां
पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् ।
पञ्चावर्तां पञ्चदुःखौघवेगां
पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥' (श्वेता. १ । ४-५)

एकेति प्रकृतिः । त्रीति गुणाः । षोडशेति सैकादशेन्द्रियं भूतपञ्चकम् । शतार्धेति पञ्चाशत् । तथा च पठ्येते—

"एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात्, तस्य च भेदास्तु पञ्चाशत् ॥
पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा, तुष्टिर्नवधा,ऽष्टधा सिद्धिः ॥" (४६, ४७)

इत्यैश्वरकृष्णीये सांख्यदर्शनानुरूपे कारिके । इह—

'भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥' (सां. का. ४८)

इत्यविद्याऽस्मितारागद्वेषाभिनिवेशानां यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकानां विपर्ययभेदानामवान्तरभेदाः ।

'एकादशेन्द्रियवधाः सहबुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥' (सां. का. ४९)

इत्यष्टाविंशतिभेदा अशक्तिः ।

'आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
वाह्या विषयोपरमात्पञ्च च नवतुष्टयोऽभिमताः ॥' ( सां. का. ५० )

इति प्रकृत्युपादानकालभागा यथासंख्यमम्भः–सलिलौघवृष्टिसंज्ञकाः, शब्दरूपरसगन्धस्पर्शविषयाश्च पारसुपारपारावारानुत्तमाम्भ उत्तमाम्भःसंज्ञकाः संहृत्य नव तुष्टयः ।

'ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ–' ( सां. का. ५१ ) इति ।

अध्ययनम्–तारमिति, शब्दः–सुतारमिति, ऊहः–तारतारमिति, सुहृत्प्राप्तिः–रम्यक इति, दानं–विवेकज्ञानस्य शुद्धिः 'दैप् शोधने' इति पाठात् सदामुदितमिति, त्रयो दुःखविघाताः–प्रमोदमुदितमोदमाना इति च परिभाष्यन्ते । विंशतीति । सविषया दशेन्द्रियवृत्तयः । अष्टकैः षड्भिरिति । अव्यक्तमहदहंकारपञ्चतन्मात्राणीति करणाष्टकम् ( १ ) यमनियमेत्यादि योगाङ्गाष्टकम् ( २ ) 'ऊहादिभिः सिद्धिरष्टधा' ( सां. द. ३ । ४४ ) इति सिद्ध्यष्टकम् ( ३ ) 'ततोऽणिमादिप्रादुर्भावः कायसंपत् तद्धर्मानभिघातश्च' ( यो. द. ३ । ४५ ) इत्यपरसिद्ध्यष्टकम् ( ४ ) घ्राणवाग्रसनचक्षुःश्रोत्रमनोहस्तत्वच इति ग्रहाष्टकम् ( ५ ) गन्धवक्तव्यरसरूपशब्दकामकर्मस्पर्शा इत्यतिग्रहाष्टकम् ( ६ ) त्रिमार्गेति । देवयानपितृयानकीटादिप्राप्तिरूपाः । द्विनिमित्तेति । सुखदुःखे । एवं संसारस्य चक्ररूपता दर्शिता ॥

पञ्चस्रोतोऽम्बूनि ज्ञानेन्द्रियाणि । पञ्च योनयो महाभूतानि । पञ्च प्राणाः वायवः । पञ्च बुद्ध्यादयः शब्दस्पर्शरूपरसगन्धविषयज्ञानभेदाः । पञ्च शब्दादय आवर्ताः पञ्च दुःखानि इन्द्रियजन्यानि । पञ्चाशत् पूर्वमन्त्रे वर्णिताः । पञ्च पर्वाणि अविद्यादीनि । एवं संसारस्य नदीरूपता व्याख्याता ॥

इत्थं च भोः ! आत्मविभुत्वमभ्युपगच्छतां स्वर्गापवर्गयोः श्रद्दधतां

दर्शनकृतां कश्चिल्लक्ष्यभेदात् कुहचिद् भाषाभङ्गाद् वैमत्येऽपि सामंत्याय-तिक एकार्थ आपतति। भवति चेह दर्शनोपसंहारश्लोकः—

"सांख्यं वेदत एव विश्वविवृतिः संख्यायते संख्यया,
योगाद् युज्यत एव विश्वविभवो विश्वेश्वरश्चेतसि।
ज्ञानं कर्म च मन्त्रयन्त्रिततनोर्मीमांस्यते ब्राह्मणात्,
तान्येकं हि गुरूपदेशविधिना बन्धच्छिदे कल्पते॥"

द्वादशदर्शनीति लौकिकः कलकलः। तत्र षड्दर्शनी गतैव, आगता शिष्टा। तत्रापि चार्वाकं दर्शनमिति व्यामोहमात्रम्। तस्य—

'पिब खाद च जातशोभने
यदतीतं वरगात्रि तन्न ते।
न हि भीरु गतं निवर्तते
समुदयमात्रमिदं कलेवरम्॥' (षड्दर्शनसमुच्च.)

इत्येवंरूपतया पशुविशेषधर्मावधारणात्। **आर्हतबौद्धदर्शने** तु तर्कसांख्ये इव माननीये। एतयोर्मूलभूतावर्हद्-बुद्धपदार्थौ—'अर्हः प्रशंसायाम्' (३।२।१३३) 'मतिबुद्धिपूजार्थेभ्यश्च' (३।२।१८८) इति सूत्राभ्यां **पाणिनिना** स्मृतौ। मैत्र्यादिवासनावासितान्तःकरणैराप्तैः—

"यं शैवाः समुपासते शिव इति, ब्रह्मेति वेदान्तिनो,
बौद्धा बुद्ध इति, प्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः, कर्मेति मीमांसकाः,
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः॥"

इत्येवं सामञ्जस्यप्रदर्शनपूर्वकमर्हद्बुद्धौ प्रतिपाद्येते॥

जैनेषु विवसनाः सवसनाश्चेति भेदद्वयी **मेरुतुङ्गा**चार्याणां प्रबन्ध-चिन्तामणितो विज्ञायते। तत्र विवसना **दिगम्बराः** सवसनाः **श्वेताम्बरा** इति व्यपदिश्यन्ते। बौद्धेषु सर्वशून्यत्ववादिनो **माध्य-**

**मिकाः**, बाह्यार्थशून्यत्ववादिनो **योगाचाराः**, बाह्यार्थानुमेयत्ववादिनः **सौत्रान्तिकाः**, ज्ञानान्वितोभयार्थत्ववादिनो **वैभाषिकाश्चेति** भेदचतुष्टयी।

तत्रार्हत्स्वरूपमाप्तनिश्चयालंकारे—

'सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः॥'

इत्युक्तं **महंचन्द्रसूरिभिः**। इह जीवाजीवाख्यौ द्वावस्तिकायौ। अस्तीति कायत इति। कै शब्दे, 'आदेच उपदेशेऽशिति' (६।१।४५) इत्यात्वे कर्मणि घञि आतो युक्चि सिद्ध्यति। अस्तिकायः-तत्त्वम्। तथा चोच्यते **पद्मनन्दिभिः**—

"चिदचिद् द्वे परे तत्त्वे, विवेकस्तद्विवेचनम्।
उपादेयमुपादेयं, हेयं हेयं च सर्वतः॥
हेयं तु कर्तृरागादि, तत्कार्यमविवेकिनः।
उपादेयं परं ज्योतिरुपयोगैकलक्षणम्॥"

जीवाऽजीवाऽऽस्रवबन्धसंवरनिर्जरामोक्षाः सप्तास्तिकाया इति पूर्वयोरेव प्रपञ्चः। तत्र जीवाः संसारिणो मुक्ताश्च। तेऽपि समनस्काः अमनस्काश्च। अमनस्काः त्रसाः स्थावराश्च। तत्र त्रसा द्वीन्द्रियाः शङ्खगण्डोलप्रभृतयः। तस्य श्रोत्रं चक्षुर्घ्राणं च नास्ति, त्वग्रसने तु स्तः। स्थावराः पृथिवीजलतेजोवायुवनस्पतयः। स्थावरेषु वनस्पतीनामेव अमनस्कजीवत्वम्। आकाशो धर्माधर्मौ कालः पुद्गलाश्चेति चत्वारोऽस्तिकाया अजीवस्यैव प्रपञ्चः। तत्र रूपगन्धरसस्पर्शशब्दवन्तः पुद्गलाः। तेऽपि अणवः स्कन्धाश्च। भोक्तुमशक्या अणवः, द्व्यणुकादयः स्कन्धाः। द्व्यणुकादिस्कन्धानां भेदात् (भङ्गात्) अणवः, अण्वादीनां संघातात् (संयोगात्) द्व्यणुकादयश्च। क्वचिद् भेदसंघाताभ्यां स्कन्धोत्पत्तिः। तत एव पूरयन्ति गलन्तीति पुद्गला अभिलप्यन्ते। तेच पृथिवी जलं

तेजो वायुरिति भेदेन चतुष्प्रकाराः । आश्रवत्यनेन जीवो विषयेष्वित्याश्रवः । उक्तं च जैनैः—

' शरीरवाङ्मनः कर्मयोग एवाश्रयो मतः ।
शुभाशुभविकल्पोऽसौ पुण्यपापानुषङ्गतः ॥'

मिथ्यादर्शनाविरतिप्रमादकषायवशाद् योगवशाच्चात्मा सूक्ष्मैकप्रदेशावगाहिनामनन्तानन्तप्रदेशानां पुद्गलानामाश्लेषणं यत्करोति स बन्धः । उक्तं च जैनैः—

' सकषायतयादत्ते जीवोऽसंख्यप्रदेशगान् ।
पुद्गलान् कर्मणो योग्यान् बन्धः स इह कथ्यते ॥
मिथ्यादृक् च प्रमादाश्च योगाश्चाविरतिस्तथा ।
कषायाश्च स्मृता जन्तोः पञ्च बन्धस्य हेतवः ॥ '

कषति हिनस्ति कुगतिप्रापणादात्मानमिति कषायः क्रोधो मानो माया लोभश्च । आश्रवलक्षणं भवप्रवाहद्वारं संवृणोतीति संवरः । उक्तं च जैनैः-

' आश्रवाणामशेषाणां निरोधः संवरः स्मृतः ।
कर्म संव्रियते येनेत्यन्वयस्यावलोकनात् ॥
धर्मात्समितिगुप्तिभ्यामनुप्रेक्षानुचिन्तनात् ।
असावुदेति चारित्रादरिषड्जयादपि ॥ '

अर्जितस्य कर्मणः केशोल्लुञ्चनादितपःप्रभृतिभिर्निर्जरणं निर्जरा । उक्तं च जैनैः—

' यथाकालकृता काचिदुपक्रमकृताऽपरा ।
निर्जरा द्विविधा ज्ञेया कर्मक्षपणलक्षणा ॥'

सप्तमोऽस्तिकायस्तु—

" अभावाद् बन्धहेतूनां निर्जरायाश्च, यो भवेत् ।
निःशेषकर्मनिर्मोक्षः स मोक्षः कथ्यते जिनैः ॥

ज्ञानदर्शनचारित्रैरुपायैः परिणामिनः ।
भव्यस्यायमनेकाङ्गविकलैरेव जायते ॥" इति ।
" ज्वालाकलापवद् वह्नेरूर्ध्वमेरण्डबीजवत् ।
ततः स्वभावतो याति जीवः प्रक्षीणबन्धनः ॥
लोकाग्रं प्राप्य, तत्रैव स्थितिं बध्नाति शाश्वतीम् ।
ऊर्ध्वं धर्मास्तिकायस्य विप्रयोगान्न यात्यसौ ॥ " इति च ।

त एते जीवादिमोक्षान्ताः सप्तास्तिकायाः सप्तभङ्गीन्यायेन व्यवस्थाप्यन्ते । तथा च पठ्यते—

' तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥
क्रमेणोभयवाञ्छायां प्रयोगः समुदायभृत् ।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥
आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥
समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते ।'

स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योती । यथाहुः—

' वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम् ।
स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ॥'

युगपद् अस्तित्वनास्तित्वयोर्विवक्षाया वाचः क्रमवृत्तित्वाद् उभयं युगपद् अवाच्यम् । आद्योऽस्तित्वभङ्गोऽन्त्येन असत्त्वेन सह युगपद् अवाच्यः । अन्त्यश्च आद्येन भङ्गेन सह युगपद् अवाच्यः । समुच्चितरूपश्च भङ्ग एकैकेन सह युगपद् अवाच्य इत्यर्थः । अयमाशयः—घटादेर्हि सर्वात्मना सदेकरूपत्वे प्राप्यात्मनापि अस्त्येव स इति तत्प्राप्तये यत्नो न स्यात्—अतो घटत्वादिरूपेण कथंचिदस्ति, प्राप्यत्वादिरूपेण

कथंचिन्नास्ति, एवमनेकरूपत्वं वस्तुमात्रस्यास्थेयमिति । तत्र वस्तुनोऽस्ति-त्वविवक्षायाम्—'स्यादस्ति' इति प्रथमो भङ्गः । प्रवर्तनास्तित्वविवक्षा-याम्—'स्यान्नास्ति' इति द्वितीयः । क्रमेणोभयविवक्षायाम्—'स्यादस्ति च नास्ति च' इति तृतीयः । युगपदुभयाविवक्षायाम्—'अस्ति–नास्ति' इति शब्दयोः सकृदक्रमयोग्यत्वात् 'स्यादवक्तव्यः' इति चतुर्थः । आद्यचतुर्थभङ्गयोर्विवक्षायाम्—'स्यादस्ति चावक्तव्यश्च' इति पञ्चमः । द्वितीयचतुर्थभङ्गयोर्विवक्षायाम्—'स्यान्नास्ति चावक्तव्यश्च' इति षष्ठः । तृतीयचतुर्थभङ्गयोर्विवक्षायाम्—'स्यादस्ति च नास्तिचा-वक्तव्यश्च' इति सप्तमो भङ्गः । एषां समाहारः सप्तभङ्गीति ।

वैमत्यजिहीर्षाशामिहापि सांमत्यं पूर्ववत्पर्यवेक्षणीयम् । तथाहि-**यल्लोकतत्त्वनिर्णया**दिषु—

'कर्मानुभावनिर्मितनैकाकृतिजीवजातिगहनस्य ।
लोकस्यास्य न पर्यवसानं नैवादिभावश्च ॥
तस्मादनाद्यनिधनं व्यसनोरुभीमं
जन्मारदोपदृढनेम्यतिरागतुङ्गम् ।
घोरं स्वकर्मपवनेरितलोकचक्रं
भ्राम्यत्यनारतमिदं हि किमीश्वरेण ॥'

इत्येवंप्रायं **हरिभद्रसूरि**प्रभृतीनामुक्तिजातं तदपि खल्वभ्युगपमसि-द्धान्ताभिप्रायेण नेतव्यम् ।

यत्पुन**र्द्विजवदनचपेटा**दिषु—

'कोपे सति स्यात् कुत एव मुक्तिः
कामेऽथवा तत्प्रतिबन्ध एव ।
रागेऽपि च स्यान्न फले विशेष-
स्तस्मान्न चैते हृदयेऽवधार्याः ॥'

इत्येवमादि विनेयान् प्रति सद् उपक्रममाणा आप्यर्थवादादितात्पर्यग-

जनिमीलिकया प्राकृतदृशा ब्रह्मादिभावेषु असद् उत्प्रेक्षमाणा **हेमाचार्य**प्रमुखा उपलभ्यन्ते । तत्र प्रागेव दर्शितं समाधिवर्त्म ।

यदपि पुनः—

" हंहो श्वेतपटाः ! किमेष कपटाटोपोक्तिसंटङ्कितैः
संसारावटकोटरेऽतिविकटे मुग्धो जनः पात्यते ।
तत्त्वातत्त्वविचारणासु यदि वो हेवाक आस्ते, तदा
सत्यं कौमुदचन्द्रमङ्घ्रियुगलं रात्रिंदिवं ध्यायत ॥"

इति **कुमुदचन्द्र**दिगम्बराणां **देवसूरि**श्वेताम्बरान् प्रति दुरुक्तिकरणं, तदनु देवसूरिश्वेताम्बराणां कुमुदचन्द्रदिगम्बरान् प्रति—

" कः कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यङ्घ्रिणा,
कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं काङ्क्षति ।
कः संनह्यति पन्नगेश्वरशिरोरत्नं वतंसश्रिये,
यः श्वेताम्बरशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥"

इति तदनुरूपमुत्तरम्, तत्कियत् समानतन्त्रोपयोगीति त एव गणिनः प्रमाणम् ॥

अथ चतुःप्रस्थानानां बौद्धानां मतसमासस्त्वेवम्—

" तत्र बौद्धमते तावद् देवता सुगतः किल ।
चतुर्णामार्यसत्त्वानां दुःखादीनां प्ररूपकः ॥
दुःखं संसारिणः स्कन्धा, स्तेच पञ्च प्रकीर्तिताः ।
विज्ञानं, वेदना, संज्ञा, संस्कारो, रूपमेव च ॥
समुदेति यतो लोके रागादीनां गणोऽखिलः ।
आत्मात्मीयस्वभावाख्यः समुदयः स संमतः ॥
क्षणिकाः सर्वसंस्कारा इत्येवं वासना तु या ।
स मार्ग इति विज्ञेयो, निरोधो मोक्ष उच्यते ॥" ( षड्दर्शनसमु. )

सुगतो बुद्धभट्टारक इति । दुःखसमुदयमार्गनिरोधा इति चत्वारि

आर्यसत्त्वानि । तत्र दुःखनामधेयस्य आर्यसत्त्वस्य विज्ञानवेदनासंज्ञासंस्काररूपाणि पञ्च स्कन्धाः प्रचयविशेषाः । तत्र विज्ञानमिति विशिष्टं ज्ञानं सर्वत्तणिकत्वज्ञानम् । यदुक्तं **ज्ञानश्रिया**—

" यत् सत् तत् क्षणिकं, यथा जलधरः, सन्तश्च भावा इमे,
सत्ताशक्तिरिहार्थकर्मणि, मितेः सिद्धेषु सिद्धा च सा ।
नाप्येकैव विधा ऽन्यदापि परकृन्नैव क्रिया वा भवेद्,
द्वेधापि क्षणभङ्गसंगतिरतः साध्ये च विश्राम्यति ॥"

वेद्यत इति वेदना, पूर्वभवपुण्यपापपरिणामवद्धाः सुखदुःखानुभवरूपाः । कश्चिद् भिक्षुर्भिक्षामटँश्चरणकण्टके लग्ने प्राह—

' इत एकनवतेः (?) कल्पे शक्त्या मे पुरुषो हतः ।
तेन कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः ! ॥'

संज्ञानामकोऽर्थः । सर्वमिदं सांसारिकं सचेतनाचेतनव्यवहरणं संज्ञामात्रं=नाममात्रम् । नात्र कलत्रपुत्रमित्रभ्रात्रादिसंबन्धो घटपटादिपदार्थसार्थो वा पारमार्थिकः । तथा च तत्सूत्रम्—

" तानीमानि, भिक्षवः ! संज्ञामात्रं व्यवहारमात्रं कल्पनामात्रं संवृतिमात्रम्ः अतीतोऽध्वांऽनागतोऽध्वा सहेतुको विनाश आकाशं पुद्गलाः " इति ।

इह परभवविषयसंतानपदार्थनिरीक्षणप्रबुद्धपूर्वभवानुरूपसंस्कारस्य प्रमातुः " स एवायं देवदत्तः, सैवेयं दीपकलिका " इत्याद्याकारेण ज्ञानोत्पत्तिः संस्कारः । यदाह—

" यस्मिन्नेव हि संतान आहिता कर्मवासना ।
फलं तत्रैव संधत्ते, कार्पासे रक्तता यथा ॥"

रूपमिति रणरणायमाणपरमाणुपुञ्जः । बौद्धमते हि स्थूलरूपस्य जगति विवर्तमानपदार्थजातस्य तद्दर्शनोपपत्तिभिर्निराक्रियमाणत्वात् परमाणवः एव तात्त्विकाः ।

" पञ्चेन्द्रियाणि, शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि च ॥" ( षड्दर्शनसमुच्च. )

दुःखाद्यार्यसत्त्वसंलग्नान्येवायतनानि । धर्मायतनमिति धर्मप्रधानमायतनं चैत्यस्थानमिति । एतानीन्द्रियादीनि द्वादश । जातिजरामरणभवोपादानतृष्णावेदनास्पर्शनामरूपविज्ञानसंस्कारा अविद्यारूपाणि द्वादशायतनानि चेति **मणिभद्र**वृत्तिसंक्षेपः ॥

दृश्यत आत्मानेनेति दर्शनम् । ज्ञानसामान्यवृत्तेः ' दृशिर् प्रेक्षणे ' इत्यस्मात् करणे ल्युट् । तच्चात्मदर्शनमनेकप्रकारकं गतम् । यदि दर्शनकृतो लक्ष्यभेदो वा भाषाभङ्गो वा न प्रवर्तेत तर्ह्यात्मनोऽति गहनत्वेऽपि भिन्नभिन्ना स्वरूपविधा न प्रादुःष्यात् । तदिदं परमार्थविप्लावकं स्वस्वसमयोत्थितं दर्शनवैषम्यं परिहृत्य साम्यमास्थेयम् ॥

स्मरन्ति चैवमाप्ताः—

" सर्वभूतेषु चात्मानं, सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी, स्वाराज्यमधिगच्छति ॥" ( मनु. १२ । ९१ )

" विद्याविनयसंपन्ने ब्राह्मणे, गवि, हस्तिनि ।
शुनि चैव श्वपाके च, पण्डिताः समदर्शिनः॥"( भ. गी. ५ । १८ )

" अहिंसा, सत्यमस्तेयं, शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥" ( मनु. १० । ६३ )

" यतः प्रवृत्तिर्भूतानां, येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य, सिद्धिं विन्दति मानवः ॥"( भ. गी. १८ । ४६ )

भवति चात्रोपसंहारश्लोकः—

' देहो मन्दिरमत्र शान्तिमधुरैर्ज्ञानक्रियाप्रक्रमै-
जीवात्मन् ! परमात्मभावकलने सौभाग्यमुन्मील्यताम् ।
नास्ते वाङ्मयविश्वभूमनियतिः ख्यातिः कथं यन्त्र्यता-
मित्थं द्वादशदर्शनीगमनिकाप्यालोच्यतामास्थया ॥'

यदर्थमुत्तेजना तत्संघकर्तव्यमाह—**योगप्रसक्तीरिति** ॥ योगो ज्ञान-कर्मलक्षणः । तत्र ग्राह्यताप्रदर्शनेन प्रसक्तयो दृढप्रवृत्तयः । उपदेशशक्तयः=मैत्र्यादिवृत्तीनामादर्शभावेन जनतोद्धारसामर्थ्यानि । देशानुरक्तयः= 'अहमेतस्य देशस्य परमाणुभिर्लब्धजन्मा कथमेनमुपकुर्याम्' इति, 'अहो ! एतस्मिन् सकले विकले वा अहमेव सकलो विकलो वास्मीति च' विविधदैवतविशिष्टस्य स्वदेशस्य भक्तयः । 'यथायथं शतधा प्रसार्य' इति प्रतिकर्मान्वेति । एवं ब्रह्ममुखान्वयिनां तत्र भवतां कर्तव्यं विभागतः समाप्यत इति परमार्थः ।

क्लेशपरिहारार्थमाह—**परोपमर्देऽपीति** । दैन्यभावं हृदयदौर्बल्यम् । तथा चाभाणकः—'अर्जुनस्य प्रतिज्ञे द्वे न दैन्यं न पलायनम् ।' योगोत्थवीर्यम् आध्यात्मिकबलम् । तच्च परमात्मोपासनादासाद्यते । तत्र च—

'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥' (६ । १७)

इति **भगवद्गीतिरपि** स्मर्तव्या ॥ ३७–४१ ॥

**ववर्ति मात्रादिचतुष्टये हि**
**शास्त्रार्थसंरम्भसमासियोगः ।**
**जिज्ञास्यते तत्र निरूप्यमाणो**
**दुर्ज्ञानमायी बहुधा विसर्पन् ॥ ४२ ॥**

**यदीयनानाविधकूटनीति-**
**निरूपणापीडनकान्दिशीकाः ।**
**मानानपेक्षाद्भुतमेयमूर्तौ**
**जगद्गुरौ मातरि निःश्वसन्ति ॥ ४३ ॥** (युगलकम्)

**अद्धा परेशं न विलोकयन्त-**
**स्तत्कार्यजातं न विभावयन्तः ।**

**लोकानकस्मादवधारयन्त-**
**स्तर्केण लौकायतिका जयन्ति ॥ ४४ ॥**

न तावद् यत्किमपि दर्शनगन्धि प्रमाणभूतमेवेति त्रिभिः साधारणा-न्प्रत्याह—**वर्वर्तीति** । माता मानं मेयं मितिरिति मात्रादिचतुष्टयम् । दुष्टं वेदविरुद्धं ज्ञानमेव मायी, नाटके सूत्रधार इव बहुभूमिकाकृत् । रूप-कम् । तदनुरूपं 'बहुधा विसर्पन्' इति विशेषणम् ॥ ४२ ॥

मायित्वं दर्शयति—**यदीयेति** । यदीयाः=दुर्ज्ञानमायिनः संबन्धिन्यः, या नानाविधाः=उच्चावचहेतुवादशरीराः, कूटनीतयः=वाग्जालानि, तासां या निरूपणाः=साकूतमुपपादनाः, ताभिर्यानि पीडनानि=अरुन्तुदा-वमर्दाः, तैः कान्दिशीकाः=भयद्रुताः परलोकभीरवः । मानानपेक्षा, अद्भुता मेया, मूर्तिर्यस्य तस्मिन् । मानानपेक्षत्वम्, 'सर्वव्यापिनमा-त्मानम्—' इत्यादिश्रवणात् (श्वेता. १ । १६) । अद्भुतत्वम् 'अणो-रणीयान् महतो महीयान्—' इत्यादिश्रवणात् (श्वेता. ३ । २०)। मेयत्वम् 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः—' इत्यादिश्रवणात् (श्वेता. ३ । १३) । जगद्गुरौ मातरि निःश्वसन्तीति चतुरस्रम् । लोके पीडिताः शिशवो मातरि निःश्वसन्तीति प्रसिद्धम् । मातृपदं श्लिष्टम् ॥ ४३ ॥

नवनवाँश्चार्वाकान् प्रत्याह—**अक्षणा परेशमिति** । लोकायत-मधीयते विदुर्वेति लौकायतिकाः । उक्थादित्वात् 'क्रतूक्थादिसूत्रान्ता-ट्ठक्' (पा. सू. ४ । २ । ६०) इमे अधीतिवेदने लौकिकव्यवहारमात्र-प्रयोजने । ते हि घटपटादिवत् परमेश्वरमलभमानाः पारमेश्वरे लोकवै-चित्र्ये वस्तुशक्तिमुत्प्रेक्षमाणाः लोकान् स्वभावभूतानाद्रियमाणाः स्वोद्भाविताँ-स्तर्कांश्च मन्यमानाः समाना दीव्यन्ति । दीव्यन्तुतरां तावत्, इहेदं प्रत्यवस्थानम्—प्रमाता हि प्रमाणेन प्रमेयं प्रमिण्वन् प्रमितिं प्रतिपद्यते,

प्रतिपद्यमानश्च श्रद्धेयवाक: स्यादिति परीक्षणसंरम्भरङ्गावतरणफलम् ।
लौकायतिका: पुन: प्रत्यक्षेणैव लोकयात्रां कुर्वाणा:—

'यं विनिद्रा जितश्वासा: संतुष्टा: संयतेन्द्रिया: ।
ज्योति: पश्यन्ति युञ्जानास्तस्मै योगात्मने नम: ॥'

इत्येवंगम्यरूपं परमेश्वरं कथमिव लभेरन् । पुरा **पाराशर्यपार्था**-
दिभिर्लभ्यमानमपि **श्रीकृष्णा**ख्यपारमेश्वरवैभवं दुर्योधनादिवत् कथं
श्रद्दधेरन् । श्रद्धानार्थमेव—'मानानपेक्षाद्भुतमेयमूर्तौ जगद्गुरौ मातरि
नि:श्वसन्ति' इत्यारब्धम् । अत्र श्लेषमर्यादया निर्विशेषं सविशेषं चेत्युभय-
लक्षणं ब्रह्म संदब्धम् । तथा —

"भूभाऽदृश्यापि यथा शशिबिम्बस्था प्रकाशते, तद्वत् ।
सर्वगतोऽप्ययमात्मा विषयाश्रयणेन धीमुकुरे ॥"

इत्यादिनीत्या अतीतानागतकालेषु अलौकिककर्माभिव्यक्तिषु महाव्यक्तिषु
विराज आत्मन: प्रतीति: सुप्रतीतैव । प्रत्यक्षेणैव सर्वं वस्तु निर्णेतुं
शक्यत इति नियमोऽप्यभ्युपगन्तुं न शक्यते । प्रमेयस्य वस्तुनो वैलक्षण्यादा-
नन्त्याच्च । यथा खल्वस्माभिर्भुज्यमानापि भू: स्वाकारप्रतिपत्तयेऽनुमानागमा-
वपेक्षते । तथा हि—भूर्गोलाकृतिर्नियतगोलच्छायावत्त्वात्, यद् यन्नियत-
गोलच्छायकं तत् तद् गोलाकृतिकं, यथा कन्दुक:, तथेयम्, तस्माद् गो-
लाकृतिर्भूरिति गणितागमवेदी प्रतिपद्यते । अत इदमप्युपपद्यते—

'यथास्मदादिभिर्लोकैर्भूलोकेऽत्र प्रवृत्यते ।
तथैव चन्द्रलोकेऽस्मिन्पितृलोकै: खलूष्यते ॥'

अत एव च—

"सकृदुद्गतमब्दार्धं पश्यन्त्यर्कं सुरासुरा: ।
पितर: शशिगा: पक्षं, स्वदिनं च नरा भुवि ॥" इति । ( सूर्यसिद्धान्तगो. )

कल्प्यते, चन्द्रलोके कश्चिल्लौकायतिको विराजत इति । तदा—तदीयया
दृशा भुवि सन्तोऽपि वयमसन्तो गण्यामहे इति महद्वैषम्यम् । भूलोक:

सलोकः, चन्द्रादिलोको विलोक इत्यत्र कतमस्तकोऽवतार्येत? कष्टंभोः! सत्त-कैस्तु वैशेषिकनैयायिकाभ्यां वायुवरुणादित्यलोकास्तदनुकूलाः शरीरिणो मन्यन्त एव। इतश्च स्मर्यते (वे. द. ३।१।१६ सू. भा.) **द्रोणधृष्टद्युम्न**-प्रभृतीनां **सीताद्रौपदी**प्रभृतीनां च अयोनिजत्वम्। तत्र द्रोणादीनां योषिद्विषयैकाहुतिर्नास्ति, धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्त इति वैलक्षण्यम्। स्पष्टोऽयमर्थो वेदान्तदर्शनशारीरके रंहतिपादे (३।१।१) प्रश्ननिरूपणाभ्याम्। तत्र प्रश्नः—'वेत्थ यथा पञ्चम्यामाहु-तावापः पुरुषवचसो भवन्ति" (छां. उ. ५ प्रपा. ३।३) इति। निरू-पणं (प्रतिवचनं) च—द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वाग्निषु श्रद्धा-सोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा "इति तु पञ्चम्यामाहुत-वापः पुरुषवचसो भवन्ति" (छां. उ. ५ प्रपा. ६।१) इति। किं च, जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुष्प्रकारेषु भूतेषु स्वेदजोद्भिज्जयोर्ग्राम्यधर्म-मन्तरेणैवोत्पत्तिर्दृश्यते। बलाकाप्यन्तरेणैव रेतःसेकं गर्भं धत्त इति प्रसिद्धिः। एवमचेतनेष्वप्याकलनीयम्। अतश्च चेतनाचेतनानां वस्तुजातानां वैचित्र्य-विभावनेन तथा प्रेक्षावत्कारुकर्मादर्शभूतानां प्रासादादीनां पर्यवेक्षणेन नो वस्तुशक्तिमात्रविश्रान्तं जगद्वैचित्र्यमिति **लौकायतिकैः** पौनःपुन्येन समालोचनीयम्। तथा च पठ्यते—

> ज्ञाते पदार्थविज्ञाने देहतत्त्वचयेऽपि च।
> न यन्त्रवद् देहयन्त्रं कोऽपि चालयितुं क्षमः॥

ब्रह्मतत्कार्ये प्रतिसंदिहानास्तु—

> "अजन्मानो लोकाः किमवयववन्तोऽपि, जगता-
> मधिष्ठातारं किं भवविधिरनादृत्य भवति।
> अनीशो वा कुर्याद्, भुवनजनने कः परिकरो (रं)
> यतो मन्दास्त्वां प्रत्यमरवर! संशेरत इमे॥"

इत्येवंप्रायाः परीक्षितव्याः । स्थाने हि—

'एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् ।
आस्ते न धीरवीरस्य भङ्गः संगरकेलिषु ॥'

इति खण्डनखण्डखाद्योक्तिः । ब्रह्मशब्दः श्लिष्टः ॥ ४२-४४ ॥

**प्रक्षेपयोगान्शतधा वदन्तो**
**यथामतं मानमुदाहरन्तः ।**
**शब्दार्थशक्तीः परिवर्तयन्तो**
**न स्वां भुवं पर्यनुयोजयन्ति ॥ ४५ ॥**

**यथोत्तरासाकलनप्रसङ्गे**
**यथा निरीशावधिकः प्रलापः ।**
**तथा परिक्षिप्तपदार्थवाक्य-**
**विकल्पकोटिः प्रणवावसाना ॥ ४६ ॥**

**द्वित्र्यादिगीतं बहुभिर्गृहीतं**
**परम्पराप्राप्तमतिप्रतीतम् ।**
**यद्वस्तु तद्वस्तु न हातुमेत-**
**च्छक्यं हि हाने भुवनान्तरं स्यात् ॥ ४७ ॥**

इदानीं त्रिभिरुच्छृङ्खलान्निर्दिशति—**प्रक्षेपयोगानिति** । यद्यपि—पारम्पर्येण श्रोत्रियाणां हृदयागारेष्वावर्तमाना भगवती त्रयी निरामयैव; क्वचित् पारम्पर्यशैथिल्येऽपि सा शिक्षया शिक्षिता, व्याकरणेन व्याकृता, प्रातिशाख्येन प्रतिशाखमनुशिष्टा, निरुक्तेन निरुक्ता, कल्पेन प्रतिकल्पं कल्पिता, पूर्वोत्तरमीमांसाभ्यां मीमांसिता च सती शब्दार्थशरीराभ्यामविकलैव । तथा त्रयीपरिचारिका मनुयाज्ञवल्क्यभगवद्गीतिप्रभृतयः कतिपयाः स्मृतयोऽपि निर्बाधाः; क्वचिल्लेखकाध्यापकाध्येतृदोषेणान्यथा भवनेऽपि ताः—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

इति **वाक्यपदीया**दिदिशा परिगृह्यमाणाः सुस्थाः । इत्थंप्रायाणि अङ्गोपाङ्गानि, तदीयानि कतिपयानि व्याख्यानानि च । तथापि पुराणेतिहासनिबन्धप्रभृतयो बहुत्र खिलाः संजाताः । तत्र खिलतायां कालक्रमेण विदुषामादरसंकोचो वादिनां मतोपमर्दसंदर्भश्च कारणम् । अत एव पुराणादिदृष्ट्या–'प्रक्षेपयोगान् शतधा वदन्तः' इति न्याय्यमपि, परं न सार्वत्रिकम् । तथा–'यथामतं मानमुदाहरन्तः' इति क्षीरनीरशोधनधिया हंसायिते न्याय्यं न पुनर्बकायितेऽपि । शब्दार्थशक्तिपरिवर्तनमपि–'गङ्गायां घोषः' इत्येवमादौ तात्पर्यानुपपत्तिप्रमुख एवाद्रियते । एवं सत्यपि ये महाभागाः श्रुतिस्मृतिसदाचारत्रयं प्रमाणं प्रतिक्षिपन्तः संगच्छन्ते, ते तावद् भङ्ग्या–'न स्वां भुवं पर्यनुयोजयन्ति' इत्युच्यन्ते । 'त्वत्तस्तवपाणिग्राहादेवाहमुदभूवम्' इत्यंशे किंमानमिति स्वभूविषयः पर्यनुयोगोऽपि फलतीति तत्त्वम् ॥

प्रकृतपरिणाममाह—**यथेति** । यथोत्तरं माननीयानां क्षोदावसरे यथा खलु निरीश्वरवादः प्रसजति, तथैव प्रक्षेपशङ्काकोटिः पदार्थान् वाक्यार्थान् न्यक्कुर्वाणा प्रणवावसानं प्रतिपद्यते । वाच्यस्याभावे वाचकस्याभावो न्याय्य इत्यभिसंधिः । लोकेऽपि यावदीष्टे तावत्प्रणूयते ॥

मनुष्यतामाह—**द्वित्रादीति** । द्वित्रादिगीतमिति देशकालपात्रभेदार्थम्, तेन स्वार्थसंहतिकारिता व्युदस्यते । बहुभिर्गृहीतमित्यादरार्थम्, तेन सारवत्ता लभ्यते । परम्पराप्राप्तमित्येकरूपार्थम्, तेनाविचार्यत्वं गम्यते । अतिप्रतीतमिति चतुरस्रार्थम्, तेन यशस्यत्वमुन्मील्यते । एवं च यद् वस्तु–भिन्नभिन्नेषु देशकालपात्रेषूपलब्धं निरभिसंधानं समादृतं

गुणवद् व्यवस्थितं स्वाभाविकं व्यापकमभ्युदयावहं चास्ति, तत् खलु वस्तु परमार्थः। नेदं हातुं शक्यते, कथमपि हाने ह्रापने वा घटमानेऽपि रूपान्तरप्रसङ्गः। भवति चात्र श्लोकः—

"स्यादन्यः परमेश्वरः, सहि नवं ब्रह्माण्डमुत्पादयेत्,
तत्राप्युल्वणवाच्यवाचकगुणान्वेदान् समुल्लासयेत्।
तान् विन्देत चतुष्पदान्तजनता, चेष्टेत साप्युत्पथं,
तर्ह्येवाद्य सभाजुषां हि हृदयोद्गारोऽपि पारं व्रजेत्॥"॥४५-४७॥

**प्रसह्य दुर्वर्त्मनि पात्यमाना**
**मुहुर्मुहुर्व्याधशतं भजन्ती।**
**असह्यपीडाकरवाङ्मिषेण**
**त्रयीगवी संप्रतिरोदितीव॥ ४८॥**

**दुष्कल्पनाकर्दमवैशसेषु**
**परिस्खलन्तीं जननीं विलोक्य।**
**निवेद्यते ग्रन्मयकातिसूक्ष्मं**
**तद्वेदविद्भिः परिबृंहणीयम्॥ ४९॥**

**स्याद् ब्राह्मणो गौरपि शान्तवृत्त्या**
**न सद्गुणानां महसां च हत्या।**
**गता नु कर्णेषु वशिष्ठराम-**
**द्रोणादिवार्ता भवतामुदात्ताः॥ ५०॥**

**इति मुखपञ्चाशिका॥**

इदानीं द्वाभ्यां दुरवस्थां निवेदयते—**प्रसह्येति**। व्याख्याने भ्रमतीव मे मन इति यथासमयं त्रय्यां गवि च स्वभावस्खलनं निरूपणीयमिति वेदनम्॥

पुनरप्याह—**दुष्कल्पनेति**। जननी त्रयी वा भारतभूर्वा। वेदविदः स्वदेशानुरागिणः परदेशसुहृदः, स्वधर्माभिमुखाः परधर्मोपेक्षकाः,

स्वगुणोपबृंहकाः परगुणग्राहकाः, स्वदोषदर्शिनः परदोषवाचंयमाः ।
विपरीतास्तु सलक्षणा अपि विलक्षणा अप्रयोजका इति व्यक्तम् ॥

सांप्रतं ब्राह्मणशब्दस्य यादृग् वाच्यार्थोऽनभिज्ञेषु ब्रह्मण्येषु प्रथते तादृशं तत्र संक्रामयन्नेव श्लोकेनोपसंहरति—**स्यादिति** । ब्राह्मणः शान्तवृत्त्या गौरपि स्यात् न तावता तावत् क्षतिः । परं 'गौर्वाहीकः' इतिवद् गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो ब्राह्मणो न स्यात् । अपरथा तु तस्य स्वरूपक्षतिरेव । तथा च स्मरन्ति—

'यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥' (मनु. २ । १५७)

इत्येवमादि । अतश्च—'न सद्गुणानां महसां च हत्या' इत्युक्तम् । तत्रोदात्ता इति संबोध्य वसिष्ठरामद्रोणादिवृत्ताकर्णनार्थमुद्बोधनम् । उदात्ता इति वार्ताविशेषणमपि । नु वितर्के ॥ ४८-५० ॥

अथ ब्राह्मणशेषम्—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥' (मनु. २ । १७)
'कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥' (मनु. २ । १९)
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥'
'आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥" (मनु. २ । २१-२२)

इति द्विजैराश्रयितव्या देशाः किं पुनर्द्विजोत्तमैः ॥ ब्रह्म, ब्रह्मा चावर्तत उद्भवति यत्र स **ब्रह्मावर्त** इत्यन्वर्था संज्ञा, ' न स पुनरावर्तते' इत्यादिपुत्पत्त्यर्थदर्शनात् । एवं ब्रह्मर्षीणां देश इति । पुरा सूर्यचन्द्रवंश्यानां क्षत्रियपुंगवानां गुरुकुलभूता एते देशाः । अत एव स्मर्यते—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।

स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ (मनु॰ २ । २० )

अग्रजन्मसु किमास्पदा भवन्त इत्यद्यापि पृच्छ्यते तदप्युक्तमूलकम् । 'आस्पदं प्रतिष्ठायाम्' ( ६ । १ । १४६ ) इति **पाणिनिः** ॥

तत्र द्विजोत्तमैः का वृत्तिराश्रयणीयेति प्रतिपाद्यते—

"अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।

या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥

यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।

अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ॥

ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।

सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।

मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥

सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते ।

सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥

कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा ।

त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥

चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम् ।

ज्यायान् परः परो ज्ञेयो धर्मतो लोकजित्तमः ॥

षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते ।

द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥

वर्तयँश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः ।

इष्टीः पार्वायनान्तीयाः केवला निर्वपेत्सदा ॥" (मनु॰ ४ । २–१० )

कुशूलं कोष्ठकं परिमाणविशेषः तत्परिच्छिन्नं धान्यं यस्य तथाभूतः । कुम्भी कुशूलन्यूनपरिमाणा । त्र्यहमैहिकं यस्य सः । त्र्याहिक इत्यर्थः ।

अश्वस्तनिकोऽश्वस्तनः। यस्य खलु श्वोभवं धान्यं नास्ति। एते चत्वारो **यायावरा** इत्युच्यन्ते। पुनः पुनरतिशयेन यान्तीति। षट् कर्माणि यस्य तथाभूतः।

'अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनाम्॥
षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥' (मनु. १०। ७५-७६)
इति।

अन्यो याजनाध्यापनप्रतिग्रहैर्जीवनात् त्रिकर्मा। अपरो याजनाध्यापनाभ्यां प्रवर्तनाद् द्विकर्मा। प्रतिग्रहस्य वर्जनात्।

'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्।
प्रतिग्रहेण ह्यस्याशु ब्राह्मं तेजः प्रशाम्यति॥
न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहे।
प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा॥' (मनु. ४। १८६-१८७)
इति।

इतरो ब्रह्मसत्रेण अध्यापनेन जीवति। अत्रापि परः परो ज्यायान्। एते चत्वारः **शालीनाः**। शालाप्रवेशमर्हन्तीति। शिलोञ्छाभ्यां वर्तयन्नपि अग्निहोत्रं दर्शपूर्णमासौ आग्रयणे निर्वपेत्। तत्र यवशाल्यादिनिपतितपरित्यक्तवल्लरीग्रहणं शिलम्, एकैकस्य परित्यक्तस्य कणस्योपादानमुञ्छः। अहो इदानीं नात्यनुपपन्ना अपि वयं जातिविभीषिकयैव निमन्त्रणप्रतिग्रहौ शोधयन्तः साहंपूर्विकं प्रवर्तामहे, होराचतुर्थांशमपि यथाकालं संध्योपासनायै दातुं नेश्महे॥

आपदि पुनर्द्विजोत्तमैः कथं वर्तितव्यमिति निरूप्यते—

'नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः।
आददीताममेवास्मादवृत्तावेकरात्रिकम्॥' (मनु. ४। २२३)

'अजीवँस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत् क्षत्रियधर्मेण सह्यस्य प्रत्यनन्तरः ॥
उभाभ्यामप्यजीवँस्तु कथं स्यादिति चेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम् ॥' (मनु. १० । ८१-८२)

'क्षात्रेण कर्मणा जीवेद् विशां वाप्यापदि द्विजः ।
निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि ॥' (याज्ञ. ३ । ३५)

'काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः ।
विक्रीणीत तिलाञ्शुद्धान् धर्मार्थमचिरस्थितान् ॥
भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः ।
कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयात् ॥' (मनु. १० । ९०-९२)

"राजान्नं तेज आदत्ते, शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं, यशश्चर्मावकर्तिनः ॥
कारुकान्नं प्रजां हन्ति, बलं निर्णेजकस्य च ।
गणान्नं गणिकान्नं च लोकेभ्यःपरिकृन्तति॥" (मनु. ४ । २१८-२१९)

धार्मिकशिक्षावैकल्योन्मिषितेनाज्ञानप्रतानेन द्विजोत्तमकुलेष्वपि काचित्कचिन्महदनिष्टं लब्धास्पदीभवद् दृश्यते तदिह किंचिन्निवेद्यते संशोधनार्थम्—**मथुरा**दिप्रान्ते क्वचिद् ब्राह्मणेष्वपि वैधोपनयनप्रक्रियालोपः । सोऽयम्–'न देवताद्यायतने यथेष्टं यज्ञोपवीतग्रहणाद् द्विजत्वम्' (वैश्यशि. ८२ श्लो०) इत्यनेन व्याकृतः । **अयोध्या**दिप्रान्ते तु बहुत्र ब्राह्मणेषु विवाहकालात् पूर्वस्मिन्नहन्येवोपनयनं विधीयते तदपि धर्मशास्त्रविरुद्धम् । **पुष्करा**दिप्रान्ते राजपूतानामण्डले–गौडब्राह्मणवर्गे, तद्भेदभूते–गुर्जरगौडे, खाण्डले, दाधीचे, पाराशरे, पुरोहिते, सनाढ्ये चावान्तरवर्गे श्रुतिस्मृतिप्रसिद्धौ गोत्रप्रवरौ विहाय प्रतिवर्गं नियतानामवटङ्कानां संमेलनेन

परिणयनं कुर्वते, तेन बहुत्र सगोत्रापरिणयनं शिरस्यापतति। समानप्रवरापरिणयनं तु इतरब्राह्मणश्रेणीष्वपि प्रसक्तं दृश्यते। तदपि नितान्तं विरुद्धम्। तथा च स्मरन्ति—'सगोत्राय दुहितरं न प्रयच्छेत्' इत्यापस्तम्बः। 'असमानप्रवरैर्विवाहः' इति **गौतमश्च। मनुयाज्ञवल्क्यावपि—**

'असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥' (३।५)
'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा॥' (१।५२-५३)

तदिदं त्रैवर्णिकविषयम्। तत्र क्षत्रियवैश्यानां प्रातिस्विकौ गोत्रप्रवरौ नस्त इति बहवः। तथा चाश्वलायनीये **श्रौतसूत्रे**—'यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः' (१ अध्या. ३ कण्डि. १ सू.) इति सूत्रयित्वा "पौरोहित्यान् राजन्यविशाम्। राजर्षीन् वा राज्ञाम्। सर्वेषां मानवेति संशये" (१।३।३-५) इति, तथा चरमे—"पुरोहितप्रवरो राज्ञाम्। अथ यदि सार्ष्टं प्रवृणीरन् मानवैलपौरूरवसेति" (१२।१५।४-५) इति च सूत्रितम्। इत्थं च क्षत्रियवैश्यानां पुरोहितगोत्रप्रवरौ, मानवैलपौरूरवसेति वेति स्थितम्। अथायं कर्तव्यस्य संक्षेपः—

"ब्राह्मे मुहूर्ते बुध्येत, धर्मार्थौ चानुचिन्तयेत्।
कायक्लेशांश्च तन्मूलान्, वेदतत्त्वार्थमेव च॥
उत्थायावश्यकं कृत्वा कृतशौचः समाहितः।
पूर्वां संध्यां जपँस्तिष्ठेत्, स्वकाले चापरां चिरम्॥" (मनु. ४।९२-९३)
"मैत्रं प्रसाधनं, स्नानं, दन्तधावन, मज्जनम्।
पूर्वाह्ण एव कुर्वीत, देवतानां च पूजनम्॥

दैवतान्यभिगच्छेत्तु, धार्मिकाँश्च द्विजोत्तमान् ।
ईश्वरं चैव रक्षार्थं, गुरूनेव च पर्वसु ॥
अभिवादयेद् वृद्धाँश्च, दद्याच्चैवासनं स्वकम् ।
कृताञ्जलिरुपासीत,गच्छतःपृष्ठतोऽन्वियात्॥"(मनु. ४ । १५३-१५४)

" न लोकवृत्तं वर्तेत वृत्तिहेतोः कथंचन ।
अजिह्मामशठां शुद्धां जीवेद् ब्राह्मणजीविकाम् ॥
संतोषं परमास्थाय सुखार्थी संयतो भवेत् ।
संतोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ " (मनु. ४ । ११-१२)

" यद् यत् परवशं कर्म तत् तद् यत्नेन वर्जयेत् ।
यद् यदात्मवशं तु स्यात् तत् तत् सेवेत यत्नतः ॥
सर्वं परवशं दुःखं, सर्वमात्मवशं सुखम् ।
एतद् विद्यात् समासेन लक्षणं सुखदुःखयोः॥" (मनु. ४ । १५९-१६०)

" ॐकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥
योऽधीतेऽहन्यहन्येतांस्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥
एकाक्षरं परं ब्रह्म, प्राणायामाः परं तपः ।
सावित्र्यास्तु परं नास्ति, मौनात्सत्यं विशिष्यते ॥
क्षरन्ति सर्वा वैदिक्यो जुहोति-यजति-क्रियाः ।
अक्षरं त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः ॥
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः, साहस्रो मानसः स्मृतः ॥
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥
जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः ।

कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ " ( मनु. २।८१-८७ )

ब्रह्मयज्ञाद् अन्ये ये पञ्चमहायज्ञान्तर्गताः वैश्वदेवहोमबलिकर्मनित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञाः, विधियज्ञाः दर्शपूर्णमासादयः, तैः सहिता इति **कुल्लूकभट्टाः** ॥

इति ब्राह्मणशिक्षीया वेददृष्टिः ॥

# अथ क्षत्रिय-शिक्षा ।



भोः क्षत्रिया ! रक्षणदीक्षणेन
स्वबाहुवीर्याणि विकासयध्वम् ।
चेदन्यथा क्षत्रियबाहुजाख्ये
डित्थादिवन्नामधुरं वहेताम् ॥ ५१ ॥

धर्मच्युतानां निजकुप्रथानां
प्रचारमालोच्य न सत्कुरुध्वम् ।
वेदोपवेदोद्धरणस्वभावा
द्विजद्वितीयाः किमु नो भवन्तः ॥ ५२ ॥

दिवा पराक्रम्यत उष्णधाम्ना
नक्तं तु पीयूषकरम्भकेण ।
नक्तंदिवं क्षत्रियतत्कुजानां
प्रभावभून्नेति पुराणनादः ॥ ५३ ॥

एतत्परामृश्य चिरंतनानां
निबन्धसारेभ्य उदारधीभिः ।
अनेकधा म्लानिपथं प्रयातः
स क्षत्रशब्दस्तु न हापनीयः ॥ ५४ ॥

अथ त्रिंशता पद्यैः क्षत्रियान् प्रति निवेदनम् ।

तत्र क्षत्रियपदार्थमाह—**भोः क्षत्रिया इति** । क्षतात् त्रायत इति क्षत्रम् । पृषोदरादिः, क्षतस्त्रायते इति वा । क्षत्रस्य अपत्यं क्षत्रियः ।

'क्षत्राद् घः' (४।१।१३८) अत्रेव क्षत्रं ब्राह्मण इव क्षत्रिय, इति प्रकृतिप्रत्ययमहिमयोगः। तथा च श्रूयते—

"यत्र ब्रह्म च क्षत्रं च, सम्यञ्चौ चरतः सह।
तं लोकं पुण्यं प्रज्ञेषं, यत्र देवाः सहाग्निना॥" (शुक्लयजु. २०।२५)

इत्थं च जातिगुणक्रियायोगेन यः खलु परमेश्वरस्य बाहुभ्यां जातो बाहुज इति च स्वप्रवृत्तिनिमित्तभूतया प्रजापालनदीक्षयैव संगच्छते। इतरथा डित्थादियदृच्छाशब्द इव क्षत्रादिशब्दोऽपि संज्ञामात्रप्रयोजकः। **कालिदासेना**प्युक्तम्—

'क्षतात्किल त्रायत इत्युदग्रः
क्षत्रस्य शब्दो भुवनेषु रूढः।
राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्वा॥' इति। (रघु. २।५३)

वेदपुराणेतिहासैः स क्षत्रिय एव पुना राज्ञोऽपत्यं **राजन्य** इति, राज्यदानवेलायां मूर्धन्यभिषेकान्**मूर्धाभिषिक्त** इति, विशेषेण राजमानत्वाद् **विराट्** इति, अनन्यसाधारणानां प्रभावाणामास्पदंतया चक्रं (सैन्यं राष्ट्रं) वर्तयितुं (सर्वभूमौ संचारयितुं) शीलमस्येति **चक्रवर्ती**ति, सर्वभूमेरीश्वरः **सार्वभौम** इति, "येनेष्टं राजसूयेन, मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः, स **सम्राट्**" इति चावेद्यते। एतस्य साम्राज्यपर्यन्तस्य लौकिकाधिकारविशेषस्य प्राप्तये ब्राह्मणाः क्षत्रियान् यथायथं यज्ञेषु प्रवर्तयन्तस्तेषां चेष्टानि संपादयन्तस्तत्र तत्र **मन्त्रब्राह्मणादौ** बहुधा दृश्यन्ते। इहेयं दिक्—

"आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायता, मा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां, दोग्ध्री धेनु,र्वोढाऽनड्वाना,शुः सप्तिः, पुरन्धिर्योषा, जिष्णू रथेष्ठाः, सभेयो युवास्य यजमानस्य वीरो जायतां, निकामे निकामे नः पर्जन्यो वर्षतु, फलवत्यो न ओषधयः पच्यन्तां,

योगक्षेमो नः कल्पताम् ॥ " इति । ( अश्वमेधे शुक्लयजुर्माध्य. सं. २२ । २२ )

" आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाऽस्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरंधिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ " ( कृष्णयजुस्तैत्तिरीयसं. ७ कां. ५ प्रपा. १८ अनु. )

" आ ब्रह्मन् ब्राह्मणस्तेजस्वी ब्रह्मवर्चसी जायतामा राष्ट्रे शूर इषव्यो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः सभेयो युवा पुरंधिर्योषा जिष्णू रथेष्ठा आस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्नो ओषधयः पच्यन्ताᳫं योगक्षेमो नः कल्पताम् । " ( कृष्णयजुर्मैत्रायणीयसं. ३ कां. १२ प्रपा. ६ )

" आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाऽस्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुस्सप्तिर्जिष्णू रथेष्ठाः पुरंधिर्योषा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् । " ( यजुषिकाठके चरकशाखायामश्वमेधग्रन्थे मितानुवचनेऽयं मन्त्रः ) ।

" ये देवा देवसुवः स्थ, त इममामुष्यायणमनमित्राय सुवध्वं, महते क्षत्राय महत आधिपत्याय महते जानराज्यायै,ष वो भरता राजा, सोमोऽस्माकं ब्राह्मणानाᳫं राजा । " इति । ( राजसूये-कृष्णयजुस्तैत्तिरीयसं. १ कां. ८ प्रपा. १० अनुवा. ) ॥

अथ क्षत्रियप्रकाण्डानां नवयुवकान् प्रति त्रिभिर्निवेदनम्—**धर्मच्युतानामिति** । धर्माद् आपद्धर्मादपि च्युतानां पतितानां, निजस्य क्षत्रियवर्गस्य कुप्रथानां महानसादौ कैवर्तनापितयवनसंचारलक्षणानां व्यवहाराणां प्रचारमालोच्य इतस्ततः प्रवृत्तिं पर्यवेक्ष्य न सत्कुरुध्वम् नो आद्रियध्वम् । तत्र गमकं प्रदर्शयति—वेदानामृगादीनामुपवेदानां धनुर्वे-

दादीनामुद्धरणस्वभावाः उत्कर्षाधायका भवन्तः द्विजेषु द्विजन्मसु द्वितीयाः गणनायां द्वितीयतया परिगणिताः किं नो सन्ति ? अपि तु सन्त्येव। यस्माद् भवतां पूर्वपुरुषा राजर्षयो लभ्यन्ते इति चारणपञ्जिकाभ्योऽप्यवधेयम् ॥

**दिवा प्राक्रम्यत इति** । सूर्यचन्द्राधिकप्रभावाः क्षत्रियर्षभा इति तात्पर्यम् । पुराणनादाः पुराणरामायणभारतादीनां भणितयः । कर्मधारयो वा । अत्रेयं दिक्—

"कूर्मः पादोऽस्य, यष्टिर्भुजगपतिरसौ, भाजनं भूतधात्री,
तैलापूराः समुद्राः, कनकगिरिरयं वृत्तवर्त्तिप्ररोहः ।
ज्योतिश्चण्डांशुरोचि, र्गगनमलिनिमा कज्जलं, दह्यमाना
शत्रुश्रेणी पतङ्गा, ज्वलति रघुपते ! त्वत्प्रतापप्रदीपः ॥"

"ज्याघातः कार्मुकस्य श्रयति करतलं, कण्ठमोंकारनाद-
स्तेजो भाति प्रतापाभिधमवनितले, ज्योतिरात्मीयमन्तः ।
राज्यं सिंहासनश्रीः शमयति, परमं वक्ति पद्मासनश्री-
र्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ॥"

किं पल्लवितेन, यदनुबन्धी सागरो; येन वसुमत्यपि सागराम्बरा स्मर्यते । यच्छासनार्थं भारतं मध्यदेश इति ॥

**एतदिति** । परामृश्य = स्वयं परीक्ष्य, न तु परोट्टङ्कितेतिहासश्रवणवाचनमात्रेण कृतार्थीभूय । चिरंतनानां निबन्धसारेभ्य इति मन्त्रब्राह्मणभाष्यावधिकपर्यवेक्षणार्थम् । उदारधीभिरिति परप्रत्ययनेयबुद्धित्वनिरासार्थम् । अनेकधेति सरस्वतीलक्ष्मीकुलपद्धतिवैधुर्येण । सः=वेदलोकप्रसिद्धः क्षत्रशब्दस्तु सिंहपदावष्टम्भेन न हापनीयः । न हि योगरूढी रूढिर्भक्ती श्रद्धीयते विचक्षणैः ॥ ५१–५४ ॥

**संसर्गजातेन कुचेष्टितेन**
**जायेत संक्रान्तमलो मणिश्चेत् ।**

प्रक्षाल्यते किं स पुनर्न यत्ना-
दुदारसंस्काररसाश्रयेण ॥ ५५ ॥
परिच्छदैः कैरपि गुण्ठितेषु
राजेति नाम प्रथतां परेषु ।
इन्द्रादिकानामपि मानभूमि-
रास्ते भवत्स्वेव स राजशब्दः ॥ ५६ ॥

पुनरपि द्वाभ्यामाह—**संसर्गजातेनेति** । स्वजातिवर्गस्य नियमितशिक्षावसरेषु बहिरङ्गाणां प्रणयोन्मेषसरणिषु वा संसर्गजातेन=परस्परव्यवहरणप्रणालीपरिणतेन, कुचेष्टितेन=विरुद्धाचारेण चेत् मणिरिव मणि आकारोद्भूतः संक्रान्तमलः=संश्लिष्टदोषो जायेत, तदा स यत्नात् उदारसंस्काररसाश्रयेण किं पुनर्न प्रक्षाल्यते न शोध्यते ? तदवस्थ एव प्रतीक्ष्यते विवेकशालिभिः, अनेवं हन्त ! । एतेन व्रात्यस्तोमस्यावसरः सूच्यते । स हि दुर्बलशक्तिना कथमिव प्राप्येत, अन्तर्यामिन् ! भवतैव सुदृष्ट्या ग्राह्यताम् ॥

**परिच्छदैरिति** । कैरपि कृत्रिमाकृत्रिमैः परिच्छदैर्विरुदाद्युपकरणैः गुण्ठितेषु योजितेषु परेषु निरुक्तक्षत्रियातिरिक्तेषु राजेति नाम प्रथताम् । अनुमतौ लोट् । इन्द्रादिकानां मानभूमित्वे मानम्—

" प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च, तं चेन्द्र उवाच प्रतर्दन वरं ते ददानीति, सहोवाच प्रतर्दनस्त्वमेव वृणीष्व ।" (कौषीतकिब्राह्म. ३ अध्यायः) इत्यादि ।

तथा पुराणमनुसृत्य **कालिदासोऽपि**—

' इक्ष्वाकुवंश्यः ककुदं नृपाणां
ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः
श्लाघ्यं दधत्युत्तरकोश (स) लेन्द्राः ॥

महेन्द्रमास्थाय महोक्षरूपं
यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां
गण्डस्थलीः प्रोषितपत्रलेखाः ॥' (रघु. ६।७१-७२)

**राजशब्द** इति । तथा च **मनुः**—

" ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥
अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥ (७।२-७)

**याज्ञवल्क्योऽपि**—

" महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक् शुचिः ॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥" (१।३०९-३११)

॥ ५५-५६ ॥

प्रायोऽद्य पारम्परिकेतिहास-
विमर्शनानादरसंक्रमेण ।
संस्कारविद्याबलवीर्यशौर्य-
संपादनाभावविजृम्भणेन ॥ ५७ ॥
स्वार्थान्धलोकोद्बलितप्रशंसा-
प्रस्तावनाकर्णनतर्पणेन ।
निरर्गलोद्यद्विविधोपभोग-
संभोगलीलायितचेष्टितेन ॥ ५८ ॥
उच्चावचाभ्यूहसहस्रशास्त्र-
मन्त्रार्थवैमुख्यविसर्पणेन ।
क्रन्दत्प्रजापालनतीर्थराज-
निमज्जनाकर्मकदर्थनेन ॥ ५९ ॥
वर्णाश्रमाचारविचारसिद्ध-
महाव्रतानामवहेलनेन ।
हतप्रभो वाच्य इवैष राज-
शब्दोऽपि संभूय विभाव्यमेतत् ॥६०॥

( चक्कलकम् )

इदानीं चतुर्भी राजशब्दस्य वर्तमानां दशां प्रदर्शयति—**प्राय इति**। पारम्परिकेतिहासाः स्वस्वपूर्वपुरुषाणां नलरामयुधिष्ठिरप्रायाणाम्, कल्हणादिलिखिता **राजतरङ्गिण्यादिवर्तिन** इतिहासाश्च। संस्कारादिसंपादनाभावो विशेषतो दिल्लीपरिवृढस्य **पृथ्वीराजस्य** निधनोत्तरमाकलनीयः। स्वार्थान्धलोकैरुद्बलिता प्रशंसा कतिपयग्रामटिकापतीनप्युद्दिश्य—'त्वमर्कस्त्वं सोमः—' इत्येवंलक्षणा। निरर्गलोद्यदिति स्वार्थान्धलोकोद्बलितप्रशंसाप्यायनस्य परिणामादिक्। अयमर्थो मयान्यत्रापि व्युत्पादितः—

"निग्रहानुग्रहे शक्तो यः स राजा निगद्यते ।

न तु चाटुकरोद्गीतविरुदै राजता मता ॥
इदं पानमिमा रामा इयं प्रासादकंदरा ।
इयत्परिच्छदे प्राप्ते न राजा राजतां व्रजेत् ॥
अहो धनकणप्राप्तिपिशाचीग्रस्तमानसैः ।
अराजत्वेऽपि राजत्वमानीताः कविकुक्कुरैः ॥
वितस्तिप्रायभूभागस्वाम्येऽपीन्द्रतया स्तुताः ।
तथा स्वमवगच्छन्तः किं राजानो न ते हताः ॥
आः कष्टमात्मभावानां शक्तिसत्त्वात् परिस्खलन् ।
व्यतिष्ठद् भीतवद् राजशब्दो वर्णविपर्यये ॥ "

उच्चावचैः अभ्यूहैः सहस्रं शाखाः येषां तथाभूता ये मन्त्राः अर्थाः तत्र वैमुख्यविसर्पणेन=गजनिमीलिकया । उपप्लवात् क्रन्दन्तीनां प्रजानां पालनमेव तीर्थराजो गङ्गादिवारिव्यतिकरः तत्र अवगाहनराहित्येन । तथा चात्रिः—' यत् प्रजापालने पुण्यं प्राप्नुवन्तीह पार्थिवाः । न तु क्रतुसहस्रेण प्राप्नुवन्ति द्विजोत्तमाः ॥ ' इत्यादि । वर्णाश्रमेति पूर्वार्धस्येदं तात्पर्यम्—

" अलब्धं चैव लिप्सेत, लब्धं रक्षेत् प्रयत्नतः ।
रक्षितं वर्धयेच्चैव, वृद्धं पात्रेषु निक्षिपेत् ॥
एतच्चतुर्विधं विद्यात् पुरुषार्थप्रयोजनम् ।
अस्य नित्यमनुष्ठानं सम्यक् कुर्यादतन्द्रितः ॥
अलब्धमिच्छेद् दण्डेन, लब्धं रक्षेदवेक्षया ।
रक्षितं वर्धयेद् वृद्ध्या, वृद्धं दानेन निक्षिपेत् ॥ "(मनु. ७।९९-१०१)
" दण्डः शास्ति प्रजाः सर्वा, दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति, दण्डं धर्मं विदुर्बुधाः ॥
समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ " (मनु. ७।१८-१९)

" यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥
तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥
तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्धते ।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥" (मनु. ७।२५-२७)

" अन्यायेन नृपो राष्ट्रात् स्वकोशं योऽभिवर्धयेत् ।
सोऽचिराद् विगतश्रीको नाशमेति सबान्धवः ॥
प्रजापीडनसंतापात् समुद्भूतो हुताशनः ।
राज्ञः कुलं श्रियं प्राणाँश्चादग्ध्वा न निवर्तते ॥" (याज्ञ. १।३४०-३४१)

" अमाययैव वर्तेत न कथंचन मायया ।
बुद्ध्येतारिप्रयुक्तां च मायां नित्यं स्वसंवृतः ॥
नास्यच्छिद्रं परो विद्याद् विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद् विवरमात्मनः ॥
बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥" (मनु. ७।१०४-१०६)

" कृतं त्रेतायुगं चैव द्वापरं कलिरेव च ।
राज्ञो वृत्तानि सर्वाणि, राजा हि युगमुच्यते ॥
कलिः प्रसुप्तो भवति, स जाग्रद् द्वापरं युगम् ।
कर्मस्वभ्युदितस्त्रेता, विचरँस्तु कृतं युगम् ॥" (मनु. ९।३०१-३०२)

" मौलाञ्शास्त्रविदः शूराँल्लब्धलक्षान्कुलोद्गतान् ।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥
तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद् हितमात्मनः ॥
सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।

मन्त्रयेत परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥" (मनु.७।५४,५७-५८)

" मन्त्रमूलं यतो राज्यं तस्मान्मन्त्रं सुरक्षितम् ।
कुर्याद्, यथास्य न विदुः कर्मणामाफलोदयात्॥" (याज्ञ.१।३४४)

" स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान्स्थिरान्शुचीन् ।
तैः सार्धं चिन्तयेद् राज्यं विप्रेणाथ ततः परम् ॥
पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥
श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ।
यज्ञाँश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान्॥" (याज्ञ.१।३१२-३१४)

इत्येवमादीनां मनुयाज्ञवल्क्याद्युपदिष्टानां राजधर्मस्वरूपाणां महाव्रतानामवहेलनेन तिरस्कारेणेति सप्तभिः करणैर्वाच्यः शक्यार्थ इवैष राजशब्दोऽपि हतप्रभः स्खलत्प्रवृत्तिरजनिष्ट । लोकेऽपि क्षीणशक्तिः स्खलतीति सुप्रसिद्धम् ॥ ५७-६० ॥

वेदेतिहासप्रथितप्रचारा
मा भूदलं क्षत्रियधर्मशिक्षा ।
संभावनायामियती त्वपेक्ष्या
काचस्य रत्नस्य भिदा यथा स्यात्॥ ६१॥

अश्वत्वसाम्येऽपि यथाकरीयः
प्रगल्भतेऽश्वो न तथापरस्तु ।
इत्यादिकं भेदकमीक्षमाणा
न वर्णधर्मानवहेलयध्वम् ॥ ६२ ॥

आत्मोन्नतिं वाञ्छति सर्व एव
यथा भवेत्सा यतते तथा नो ।
नापाततो ज्ञायत एष यत्नो-
ऽप्येतत्सपत्नं व्यसनं तु हेयम् ॥ ६३ ॥

चन्द्राननाश्चन्द्रमरीचिचारु
नानाविधं मद्यमपथ्ययाश्च ।
आयोज्यमाना विटचाटुकारै-
र्मूलच्छिदायै प्रगुणीभवन्ति ॥ ६४ ॥

दृढीभवन्दुर्व्यसनामयोऽयं
यावन्न राज्यासुविमर्दनाय ।
तावद्धि मन्वादिहितोपदेश-
भैषज्ययोगा नियमेन सेव्याः ॥ ६५ ॥

चेन्नावकाशो निगमार्जनाय
गीता त्ववश्यं खलु भावनीया ।
यां दुःखवेगेन विनष्टसत्त्वं
गाण्डीवधन्वानमुवाच कृष्णः ॥ ६६ ॥

इदानीं पिककाकवत् स्वरूपसत्त्वार्थे भेदकमुन्मीलयन् षड्भिराह— **वेदेतिहासेत्यादि** । इहेदं पर्यालोच्यम्—लौकिकभाषातन्त्रो हि लोकव्यवहारः कर्तरि कर्मणि वा व्युत्पन्नो लोकस्तु प्रकृतिज्ञाननिबन्धन इत्यन्यत्तावत् । ऋजुवर्त्मना भाषापरिचितौ तथैव लौकिकी व्यवहारनिष्पत्तिः पुरा भारतवर्षीयाणामिव सांप्रतं युरोपीयाणाम् । अनृजुना पुनर्नागेशजगदीशादिनिर्दिष्टेनेव व्याकृतिन्यायसंक्रामितेन नवनवेन इङ्ग्लिशशिक्षाविधानेन पदार्थज्ञानमेव दुष्करमायुष्मता,मुत्तरपरीक्षणं तु सुदूरम् । सुकुमारमतयो हि राजकुमारप्रकृतयः प्रायेण कुटिलहतयो हि कालगतयः । अहो गण्डोपरि विस्फोटः । एवं चित्रविताने शिक्षाप्रताने विरलविरलाः स्वपूर्वपुरुषचरितानुवर्तिनः समावर्तन्ते । सा विद्या निगद्येत ? अविद्या वा, यया देशाचारो विदेशाचारः क्रियेत । तथा चाग्रे पठ्यते—

'यया भवेच्छास्त्रव्रतधर्मवृद्धि-
स्तथा समृद्धिः खलु सैव शिक्षा ।

वर्णस्वभावान् परिणामयन्ती
नान्या मता भारतवैभवाय ॥' (,१६ श्लोक. )

संभावना=योग्यता । काचरत्नयोः समानाभिहारप्रसङ्गे रत्नवणिजः प्रमाणम् । न हि पाञ्चभौतिकपिण्डसादृश्येऽपि राजपुत्रैरदासौ समानातिशयौ भवितुमर्हत इति ॥

**अश्वत्वसाम्येऽपीति** दृष्टान्तः । वर्णधर्माः शुक्रशोणितसमारब्धाः संस्कारोत्तेजिताः ॥

एतदात्मोन्नतिसपत्नं व्यसनं तु हेयमिति । तथा च **मनुः**—

" दश कामसमुत्थानि, तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां, क्रोधजेष्वात्मनैव तु ॥
मृगयाऽक्षा दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥
द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा ॥
सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद् व्यसनमात्मवान् ॥
व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ।

व्यसन्यधोधो व्रजति स्वर्यात्यव्यसनी मृतः ॥" (७।४२-५३)

'मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम्।
दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णिषु ॥'

'कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।
षड्वर्गमुत्सृजेदेनमस्मिँस्त्यक्ते सुखी नृपः ॥'

'दण्डको' नृपतिः कामात् क्रोधाच्च 'जनमेजयः'।
लोभाद् 'ऐल' स्तु राजर्षि 'र्वातापि' र्हर्षतोऽसुरः ॥
'पौलस्त्यो' राक्षसो मानान्मदाद् 'दम्भोद्भवो' नृपः।
प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः ॥
शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः।
'अम्बरीषो' महाभागो बुभुजाते चिरं महीम् ॥
शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये।
विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥
वृद्धोपसेवी नृपतिः सतां भवति संमतः।
प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते ॥
आददानः प्रतिदिनं कलाः सम्यङ्महीपतिः।
शुक्लपक्षे प्रतिचरञ्शशाङ्क इव वर्धते ॥
जितेन्द्रियस्य नृपतेर्नीतिमार्गानुसारिणः।
भवन्ति ज्वलिता लक्ष्म्यः कीर्तयश्च नभःस्पृशः ॥"

(कामन्दकीयनीति. १।५४-६२)

अर्जुन उवाच—

'अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय! बलादिव नियोजितः ॥'

भगवान् उवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ॥

महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥
धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्वेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय ! दुष्पूरेणानलेन च ॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ! ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥" (गीता.३।३६-४१)

**चन्द्रानना इति** । अत्रैतत्सारम्—राजानोऽनेकदारा आसन्नित्यापाततो मधुरम् । 'ब्रह्मचर्यं परिसमाप्य गृही भवेत्— (जाबालोपनिषत्) एवमेव स्मृत्यादिषु (मनु. ४ । १) यथानियमं विद्यां परिगृह्य गृहमेधी स्यादिति तात्पर्यम् । यथाशास्त्रं गृहैर्दारैर्मेधते संगच्छत इति गृहमेधी गृही । न तु यया कयाचित् स्त्रिया गृहेण वा संगतः पुमान् गृहीति स्मर्यते । गृहैरिति बहुवचनं शब्दोपाधिकं किं वा, अग्न्याधानादिकृतेऽर्थोपाधिकं च बोद्धव्यम् । गृहिण्याः पाणिगृहीत्याः पत्न्याः प्रमीताद्यवस्थायां द्वित्रादिपाणिग्रहणप्रसङ्गात् । इतरथा स्मार्ते श्रौते वा कर्मणि एकयैव पत्न्या निर्वाह इति । अत एव सा सहधर्मिणी द्वितीयैव व्यवह्रियते, न तु तृतीयादिः । स्पष्टं चैतत्कल्पसूत्रपूर्वमीमांसादिषु । राज्ञोऽपीयं द्वितीयैव कृताभिषेका महिषीति परिभाष्यते । तदिदमेकदारत्वम्—

'तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम् ।
कुले महति संभूतां हृद्यां रूपगुणान्विताम् ॥' (७ । ७७)

इति मनूक्त्यापि सिद्धम् । इह तत्पदेन यथोक्तं दुर्गं गृह्यते । एवं देवादिष्वपि एका भार्या दृश्यते—वृषाकपेः स्त्री वृषाकपायी=श्रीः, गौरी च । इन्द्रस्य इन्द्राणी=शची । अग्नेः अग्नायी=स्वाहा । स्वायंभुवादि-

कस्य मनोः मनाग्नी=शतरूपादिः । वसिष्ठस्य अरुन्धती । नलस्य दमयन्ती । रामभद्रस्य वैदेहीत्यादि । यत्तु भोगार्थमनेकदारकरणं तदुत्पथमेव । तथाहि—

' अथ राजा विदेहानां ददौ कन्याधनं बहु ।
गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥
कम्बलानां च मुख्यानां क्षौमान् कोट्यम्बराणि च ।
हस्त्यश्वरथपादातं दिव्यरूपं स्वलंकृतम् ॥
ददौ कन्याशतं तासां दासीदासमनुत्तमम् ।
हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ॥'

( वाल्मी. रामा. बालकां. ७४ सर्ग. ३-५ )

एवमादिस्थले यौतकसमवाये कन्यादासीदासा अपि दृश्यन्ते । तत्र कन्याशतं वैदेहीप्रभृतीनां सख्यर्थम् । तथा च व्याख्यायते भट्टनागेशशिष्येण **रामभूभृता**—'कन्याशतं सखीत्वेन । तासां राजकुमारीणाम् । प्रत्येकमितिशेषः । दासीदासमिति गवाश्वादित्वादेकवत्त्वम् ।' इति । कन्याधने परिगणिताः कन्या राजकन्यानां पतिगृहेषु मनोविनोदार्थं नतु पतिव्यभिचारार्थं कथमप्युपपद्यन्ते दासीवत् । यथा खलु दास्यो दासभर्तृकाः तथा सखीभूताः कन्या अपि यथायथं पतिदेवताका अवसेयाः । सखी, आली, वयस्येति पर्यायाः । समानं ख्यायते, आलयति, वयसा तुल्येति तद्योगाः ॥

यत्तु पुनः कतिपये विधवाया नियोगं वा पुनर्विवाहं वा कामयन्ते तन्न धर्म्यम् । तथाच वेदपारदृश्वा **मनुः**—

' नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥ ' ( ९ । ६५ )

वेदानां प्रतिशाखं गृह्यसूत्रेषु वैवाहिकादिमन्त्राः ससंगतयो विलिख्यन्ते, ततः कर्मणामानुपूर्वी स्पष्टा ज्ञायते ।

' पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाऽकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥ ' (मनु० ८।२२६)

कन्यात्वाभाववत्यो हि स्त्रियः लुप्तधर्मक्रिया भवन्ति ।
औद्वाहिकमन्त्रेषु—

" सोमः प्रथमो विविदे, गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पति,स्तुरीयस्ते मनुष्यजाः ॥
सोमो ददद् गन्धर्वाय, गन्धर्वो ददद्ग्नये ।
रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ॥" (ऋ.सं.८अ.३अ.२७-२८व.)

इति वधूं प्रति वरवाक्यम् । मनुष्यजा इति विश्वपा इव प्रथमैकवचनम् । अत्र प्रथम ऋङ्मन्त्रो विधवायाः पुनर्विवाहे निर्दिष्टपतिसंख्यावाधप्रसङ्गाद् विरुध्येत । तथा द्वितीयोऽपि—यस्मै वराय अग्निना कन्या दत्ता तस्मिन्मृते संजातां विधवां तामन्यस्मिन्वरे उद्वहति सति '·अग्निर्मह्यमथो इमाम् ' इति वाक्यघटितत्वादपार्थको भवेत् ।

' अर्यमणं देवं कन्या अग्निमयक्षत ।
स नो अर्यमा देवः प्रेतो मुञ्चातु मा पतेः ॥ '(पा. गृ. १ कां. ६ कण्डि.)

इत्यादि मन्त्रैर्वरान्वारब्धा कन्या स्वाञ्जलिस्थाँल्लाजान् विवाहाग्नौ जुहोति । अत्र सर्वत्र कन्यापदं श्रूयते । नहि प्रमीतपतिका स्त्री कन्यापदवाच्या भवति ।

' गृभ्णामि ते सौभगत्वाय हस्तं, मया पत्या जरदष्टिर्यथाऽसः ।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ '
(ऋ. सं. ८ अ. । ३ अ. । २७ व.)

एतेन मन्त्रेण वरः कन्यायाः साङ्गुष्ठं दक्षिणं पाणिं गृह्णाति । अयमपि ' मह्यं त्वा—'इत्यादिश्रवणाद् विधवाविवाहे व्याकुप्येत । इत्थं चौद्वाहिकमन्त्राणां विधवायाः पुनर्विवाहेऽर्थतो निवृत्तौ सत्यां तत्प्रतिपाद्यौद्वाहिककर्मणामपि निवृत्तौ तस्याधर्म्यत्वं सुस्पष्टम् ॥

अपि च—

'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥' (मनु. ८। २२७)

दारलक्षणं कन्यात्वविघटकभार्यात्वस्य निमित्तम् । प्राजापत्यहोमानन्तरं सप्तपदीप्रक्रमणे प्रस्तुते—"सखे सप्तपदा भव, सा मामनुव्रता भव, विष्णुस्त्वा नयतु" इति वरेणोक्ते मन्त्रे वध्वा सप्तमे पदे दत्ते सति वैवाहिकमन्त्राणां परिपूर्त्तिर्भवतीति । एवं च सप्तपदीक्रमणात्प्राक् भार्यात्वनिष्पत्त्यभावेन कन्यात्वस्याक्षतत्वात् कदाचित् प्रसङ्गवशाद् वरान्तरेण विवाहः स्यान्न पश्चादिति लभ्यते ।

तथा च **पारस्करीयं** गृह्यसूत्रम्—"अथैनामुदीचीं सप्तपदानि प्रक्रामयति—एकमिषे, द्वे ऊर्जे, त्रीणि रायस्पोषाय, चत्वारि मायोभवाय, पञ्च पशुभ्यः, षड् ऋतुभ्यः, सखे सप्तपदा भव, सा मामनुव्रता भव" इति (१ कां. ८ कण्डि.) ॥

किं च—

"कुहस्विद् दोषा, कुहवस्तो,रश्विना ! कुहाभिपित्वं करतः, कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥"

(ऋ. सं. ७ अ. ८ अ. १८ व.)

(हे अश्विनौ ! कुहस्वित्=क्व नु, युवां, दोषा=रात्रौ, भवथः । कुहवस्तोः=क्व वा दिवा गवथः । कुह अभिपित्वम्=क्व च स्नानभोजनार्थम् अभिप्राप्तिम्, करतः=कुरुथः । कुह ऊषतुः=क्व वा वसथः । किं च, वां=युवाम्, कः=यजमानः, सधस्थे=सह स्थाने वेद्याख्ये, आकृणुते=परिचरणार्थमात्माभिमुखीकुरुते ॥ तत्र दृष्टान्तौ—शयुत्रा=शयने, विधवा देवरमिव । योषा=नारी, मर्यं न =मर्त्यमिव ॥ इह विधवया यजमानो देवरेण अश्विनौ चोपमीयेते । निरुक्तमपि दृश्यम् (नैघण्टुक का. ३ अ. २ पा. ३ खं.)

इत्येवंजातीयको मन्त्रो विधवाया नियोगं वा पुनर्विवाहं वा न बोधयति, तस्य भिन्नतात्पर्यकत्वात् । स्पष्टं चैतत्स्मर्यते—

'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥' (मनु. ९ । ६९)

" इमां त्वमिन्द्र ! मीढ्वः ! सुपुत्रां सुभगां कृणु ।
दशास्यां पुत्रानाधेहि, पतिमेकादशं कृधि ॥" (ऋ.सं.८अ.३अ.२८व)

इति मन्त्रोऽपि नहि विधवायाः (११) एकादशावधिकां पतिसंख्यां ज्ञापयति, यत इन्द्रं प्रति जायाया दशपुत्रात्वसंपादनमुखेन पत्युरेकादशीभवनस्याभ्यर्थनेयम् । दशपुत्राः एकादशः पतिरिति वध्वाः परमं सौभाग्याशंसनमिति तत्त्वम् । यत्तु—

" उत यत्पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः ।
ब्रह्मा चेद् हस्तमग्रहीत्, स एव पतिरेकधा ॥ " इत्यादि
(अथर्व सं. ५ कां. ४ अनु.)

"इन्द्राग्नी, द्यावापृथिवी, मातरिश्वा, मित्रावरुणा, भगो, अश्विनोभा ।
बृहस्पति, मरुतो, ब्रह्म, सोम, इमां नारीं प्रजया वर्धयन्तु ॥ "
इति (अथर्व सं. १४ कां. १ अनु.)

इह स्त्रियाः (कन्यायाः) दश पतयः श्रूयन्ते, ते इन्द्राग्नी इत्यादयः । यथा सोमः प्रथम इति मन्त्रे सोमो गन्धर्वोऽग्निरिति त्रयः । यथा दर्शनं सर्व एते वैदिका देवा नतु मनुष्या इत्यवधेयम् । अथर्वसंहितायाश्चतुर्दशं काण्डं विवाहपरमिति संक्षेपः ।

" इयं नारी पतिलोकं वृणाना, निपद्यत उप त्वा मर्त्य ! प्रेतम् ।
धर्मं पुराणमनुपालयन्ती, तस्यै प्रजां द्रविणं चेह धेहि ॥ "
(अथर्व सं. १८ कां. ३ अनु. ३ सू. १ मं.)

(इयं नारी=पुरोवर्तिनी प्रमीतपतिका स्त्री, पतिलोकं=पत्या अनुष्ठितानां यागदानहोमादीनां फलभूतं स्वर्गादिस्थानम्, वृणाना=सहधर्मचारिणीत्वेन संभजमाना, हे मर्त्य=मरणधर्मन्, प्रेतम्=अस्माल्लोकाद्विनिर्गतम्, त्वा=त्वाम्, उपनिपद्यते=समीपे नितरां गच्छति । अनुमरणार्थं प्राप्नोतीत्यर्थः । कस्माद्धेतोरित्याह—पुराणम्=पुरातनम् अनादिशिष्टाचारसिद्धम्, धर्मं=सुकृतम्, अनुपालयन्ती=संप्रदायाविच्छेदेन कुर्वती । तस्यै=अनुमरणं कृतवत्यै स्त्रियै, इह=भूलोके जन्मान्तरे, प्रजां=पुत्रपौत्रादिरूपाम्, द्रविणं=धनं च, धेहि=प्रयच्छ । अनुमरणप्रभावाज्जन्मान्तरेऽपि स एव तस्याः पतिर्भवतीत्यर्थः । अत एव माघोऽपि

पठति—'सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥'
( शिशुपा. व. १ सर्ग. )

इति मन्त्रोऽपि नो नियोगार्थं स्रवते, प्रत्युत विस्रवमानो लभ्यते। तथा च स्मर्यते—

'कामं तु क्षपयेद् देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥
आसीताऽऽमरणात्क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ इत्यादि (मनु.५।१५७-१५८)

तथैव सायणभाष्ये स्मर्यते हि—

'भर्तारमुद्धरेन्नारी प्रविष्टा सह पावकम् ।
व्यालग्राही यथा सर्पं बलादुद्धरते बिलात् ॥' इति ।

"उदीर्ष्व नार्यभिजीवलोकं, गतासुमेतमुपशेष एहि ।
हस्तग्राभस्य दधिपोस्तवेदं पत्युर्जनित्वमभिसंवभूथाः ॥"
( अथर्व सं. १८ कां. ३ अनु. ३ सू. २ मं. )

( उपानिपद्यमाना सा यदीह लोके पुनर्जीवितुमिच्छेत् तदा 'उदीर्ष्व-' इत्यनया द्वितीयर्चा प्रेतेन सह संविष्टां तामभिमन्त्र्योत्थापयेत् । पाठ्यमन्त्रार्थस्तु—हे नारि=धर्मपत्नि, लोक्यतेऽनुभूयते जन्मान्तरकृतधर्माधर्मफलं सुखदुःखात्मकमस्मिन्निति लोकः, जीवानां प्राणिनां लोको जीवलोकः तं जीवलोकं=मनुष्यलोकम्, अभि=अभिलक्ष्य, उदीर्ष्व=पत्युः सकाशाद् उद्गच्छ उत्तिष्ठ। ईर गतौ। गतासुम्=प्रेतम्, एतं=पतिम्, उपशेषे=उपेत्य तेन सह शयनं कुरुषे। शीङ् स्वप्ने । अयमर्थः—पूर्वमदृष्टफलार्थमनुगमनमुक्तम्, संप्रति शास्त्राविरोधिदृष्टफलानुरोधादुत्थापनमुच्यते—एहि=पत्युः सकाशादागच्छ । इदानीं गतासोः पत्युरुपशयने दृष्टप्रयोजनं न वर्तते इत्यतोऽपेहि । हस्तं गृह्णातीति हस्तग्राभः । ग्रह उपादाने । छान्दसिकं भत्वम् । तस्य पाणिग्रहणकर्तुः दिधिपोः=गर्भस्य निधातुरिति बह्वृचाः । दधिपोः=धारयितुरित्याथर्वणिकाः । उभयथापि जायात्वघटकत्वम् । तव=नार्याः, पत्युः=उक्तरूपस्य संबन्धादागतम्, इदं जनित्वम्=अपत्यादिरूपेण जन्मत्वम्, अभि=अभिलक्ष्य, संवभूथाः=संभूतासि । )

इति मन्त्रोऽपि पूर्वानुबन्ध्येव । तथाहि स्मर्यते—

'पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।

पतिलोकमभीप्सन्ती नाचरेत् किंचिदप्रियम्॥' ( मनु. ५। १५६ )

'उदीर्ष्व–' इति मन्त्र ऋक्संहितायाः ७ सप्तमेऽष्टके ६ षष्ठेऽध्याये २७ सप्तविंशे वर्गेऽपि पठ्यते। तमिमंमन्त्रमन्त्येष्टिकर्मणि गृह्यकाराः स्मरन्ति।

तथाचाश्वलायनाचार्याः—"अथैनमन्तर्वेद्यामचितिं चिनोति, यो जानाति। तस्मिन् बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम, तस्मिन् प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाऽऽहवनीयमभिमुखशिरसम्। उत्तरतः पत्नीम्। धनुश्च क्षत्रियाय। तामुत्थापयेद् देवरः पतिस्थानीयोऽन्तेवासी, जरद्दासो वोदीर्ष्व नार्यभिजीवलोकमिति। कर्ता वृषले जपेत्। धनुर्हस्तादाददानो मृतस्येति धनुः। उक्तं वृषले। अधिज्यं कृत्वा संचितमचित्वा संशीर्यानु प्रहरेत्।" ( आश्वलायनगृह्यसू. ४ अध्या. २ कण्डि. १४–२२ सू. ) इति॥

एवमादिमन्त्रेभ्योऽपि विधवाया नियोगो वा पुनर्विवाहो वा नाध्यवसीयते। मुखमस्तीति वक्तव्यमिति न्यायेन तु सर्वत्र सर्वं संभवेत्। यदि क्वापि शाखान्तरे विधवानियोगादिकमभविष्यत्तदा वेदपारदर्शी मनुः पुनरुपयनमिवावश्यमस्मरिष्यत्, गृह्यसूत्रकाराश्चास्मरिष्यन्। नैवं पुनः। अज्ञानामश्रद्दधानां संशयात्मनामस्मदादिलेखेषु समाश्वासो न स्यादिति वैवाहिकादिमन्त्रार्था विस्तीर्य न निरूपिताः, जिज्ञासायां मीमांसकानां वेदभाष्यकाराणां चाप्युपजीव्या गृह्यश्रौतसूत्रग्रन्थास्तद्भाष्यग्रन्थाश्चाकलनीयाः, सूत्रकारा हि वेदार्थमाकलय्यैवानुक्रमेण स्मार्तानि श्रौतानि वा कर्माणि यथाशाखं सूत्रयामासुरिति दिक्॥

किं च 'नौद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनः॥' ( ९। ६५ ) इत्यनेन मनूक्तेन विधवाया नियोगविवाहतो निवृत्तप्रसरे मन्त्रशरीरे तदभावादनुद्भूते चानुष्ठितकर्मातिशये क्वचिदुपलब्धमपि संस्कारादिपदमौपचारिकमवधेयम्। तथाच **मनुस्मृतौ** पुत्रसंख्यानप्रस्तावे—

"या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ।
उत्पादयेत् पुनर्भूत्वा, स पौनर्भव उच्यते ॥
सा चेदक्षतयोनिः स्याद्, गतप्रत्यागतांऽपि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥" (९।१७५-१७६)

या विवाहितैव नतु भुक्ता, सा अक्षतयोनिः। या तु विवाहात्पूर्वमेव पुरुषेण भुक्ता, सा क्षतयोनिः। तत्र या पत्या त्यक्ता वा प्रमीतपतिका या पुनर्भूर्भूत्वा यमुत्पादयेत् स उत्पादयितुः पुत्रः पौनर्भवः। सा गतप्रत्यागतापि वा चेद् अक्षतयोनिस्तदा पौनर्भवेन भर्त्रा पुनः संस्कारमर्हतीति पुनर्भूत्वप्रदर्शनम्। संस्कारोत्तरं क्षतयोनेस्तु पुनर्विवाहो न भवतीति तत्त्वम्। पुनर्द्विः संस्कृता भवतीति पुनर्भूः । 'क्विप् च' (३।२।७६) इति क्विप्। दिधिषूः। 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।' (याज्ञ. १।६७) इति। 'अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।' (याज्ञ. २।१३०) इति च । आग्नेयकोशेऽपि—'पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषूः पतिः। स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥' शब्दार्थचिन्तामण्यादौ तु—'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता ॥' इति। 'भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥ इति लोकाक्षिमनूक्ती। एवं द्विरूढैव दिधिषूरिति नियमो नास्ति। तथा पुनर्भूरपि। पुनर्भ्वा दिधिष्वाः पतिरपि पुनर्भूर्दिधिषूरिति। तत्र आत्मनो दिधिषूमिच्छति 'सुप आत्मनः क्यच्' (३।१।८) 'अन्येभ्योऽपि दृश्यते' (३।२।१७८) इति क्विप्। बाहुलकाद् दिधिषुरिति ह्रस्वान्तोऽपि। तथा च श्रूयते—'हस्तग्राभस्य दिधिषोः' (ऋ. सं. ७ अ. ६ अ. २७ व.) 'दिधिषोर्गर्भस्य निधातुः' इति ऋक्संहिताभाष्ये, 'दधिषोर्धारयितुः' इत्यथर्वसंहिताभाष्ये सायणः। दधाति, धिष्यते, दिधिं स्यति वा दिधिषूः । डुधाञ्-धारणपोषणयोः । धिष-शब्दे ।

षो-अन्तकर्मणि । 'अन्दू-' ( १ । ६३ ) इत्युणादिसूत्रेण व्युत्पाद्यते । अग्रे दिधिषूरिति तु अग्रे प्रधानं दिधिषूरस्य । 'अग्रे' इति सुबन्तप्रतिरूपको निपातः । एतेन दिधिषुपदस्य श्रवणमात्रेणैव पुनर्विवाहस्य श्रौतत्वं सुतरां दुःसंपाद्यं तथैव स्मार्तत्वमपि क्वाचित्कं व्यवस्थितं च मीमांस्यमिति सुव्यक्तम् ॥

यदप्याहुः—यथा-" तस्मादेकस्य बह्वयो जाया भवन्ति, नैकस्ये बहवः सहपतयः " इति श्रुत्या सहपदेन युगपदेकस्या बहुपतिकत्वनिषेधबोधनद्वारा प्रथमपत्युर्नाशादिप्रसङ्गे क्रमेण बहुपतिकत्वं बोध्यत इति तदपि दुष्टं निरुक्तदोषाक्रान्तत्वात् तथा-" यदेकस्मिन् यूपे द्वे रशने परिव्ययति, तस्मादेको द्वे जाये विन्दते, यन्नैकाᳬ रशनां द्वयोर्यूपयोः परिव्ययति, तस्मान्नैकाद्वौ पती विन्दते " ( तैत्ति. सं. ६ कां. ६ प्रपा. ४ अनु. ) इति श्रुत्यन्तरस्यापि संवादात् । न ह्येकस्मिन् क्रतौ यूपस्तम्भे परिवीतायाा रशनायाः समयभेदेनाप्यनुष्ठीयमाने द्वितीयस्मिन् क्रतौ यूपस्तम्भे परिव्ययनं संभवति तस्या रशनायाः प्रथमभूतक्रतूच्छिष्टत्वेनामेध्यत्वादुत्तरे क्रतुकर्मण्यनर्हत्वात् । तस्मादेकवारं विधिनैकस्मै दत्ताया वध्वाः पत्युर्नाशादिप्रसङ्गे पुनरन्यस्मै दानं न संभवति तस्याः कन्यात्वाभावेन दानयोग्यत्वाभावात् ॥

यत्तु **द्रुपदं** प्रति **युधिष्ठिर**वाक्यम्—

' सर्वेषां महिषी राजन् ! द्रौपदी नो भविष्यति ।
एवं प्रव्याहृतं पूर्वं मम मात्रा विशांपते ! ॥ '

( म. भा. आदि प. १६९ अ. २३ श्लोक. )

तत्र मीमांसातन्त्रवार्तिके **कुमारिलभट्टै**रेवमभिहितम्—

" या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता ।
सापि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता ॥
यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता ।
सा च श्रीः, श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति ॥

अतएव चोक्तम्—

' इदं च तत्राद्भुतरूपमुत्तमं

जगाद विप्रर्षिरतीतमानुषम् ।

महानुभावा किल सा सुमध्यमा

बभूव कन्यैव गते गतेऽहनि ॥ ' इति ।

न हि मानुषीष्वेवमुपपद्यते । तेनातीतमानुषमित्युक्तम् ।" (तन्त्रवा.१।३।७) इत्यादि । अतएव प्रमिताधिकरणे—' हृद्यपेक्षया तु मनुष्याधिकारत्वात्' ( वे. द. १ । ३ । २५ ) इति सूत्रितम् । एवं कानीनयोः कर्णव्यासयोः पित्रोः सूर्यपराशरयोः प्रभावात् कुन्तीयोजनगन्धयोः परिणयनात् प्राक् कन्यात्व-मक्षतमवधेयम् । तदिदं वृत्तं **महाभारत**स्यादिपर्वण्येकादशाधिकशत-तमेऽध्याये ( १११ )–' मत्प्रसादान्न ते राज्ञि भाविता दोष इत्युत ' इत्य-नेन, तथा तत्रैव पर्वणि त्रिषष्टितमेऽध्याये ( ६३ )–' उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ' इत्यनेन च प्रतिपादितम् ।

यदपि पुनराहुः—

' नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।

पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ '( पराशरस्मृ.४अ.३०श्लो.)

इति **पराशरेण** कलियुगीयधर्मनिरूपणप्रस्तावे स्मृतत्वादभ्यनुज्ञात एव विधवापुनर्विवाह इति चेन्मैवम् । स्मृतीनां श्रुतिमूलकत्वेनैव प्रामाण्य-निश्चये स्थिते प्रत्यक्षवैवाहिकमन्त्रार्थविरुद्धो विधवाविवाह इति प्राङ् निरू-पितत्वात् संपूर्णविवाहसंस्कारेण प्रणष्टकन्यात्वानां पश्चात्प्रमीतपतिकानां नारीणां पुनरन्येन सह श्रौतविवाहसंबन्धस्य पराशरस्मृत्या संपाद यितुमश-क्यत्वात् । अत इदं पराशरवचनं विद्वन्मनोहराख्यटीकायां **नन्द पण्डि-**तैरेवं व्याख्यातम्–वाग्दानानन्तरं पाणिग्रहणात्प्राक् पत्यौ उत्पत्स्यमान-पतित्ववति पूर्वस्मिन् वरे, नष्टे=दूरदेशगमनेन अपरिज्ञातवृत्तान्ते, मृते=लोकान्तरं गते, प्रव्रजिते, क्लीबे वा सति, एवंविधासु आपत्सु नारीणां

कन्यानामन्यः पतिर्विधीयत इत्यर्थः । अथवा ‘अपतौ’ इति छेदः क-र्तव्यः, तथा व्याकरणदोषोऽपि निरस्यते । **मनुरप्याह**—

‘यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥’ (९ । ६९)

नियोगस्तु **मनुनै**वमनुज्ञातो निषिद्धश्च—

‘देवराद् वा सपिण्डाद् वा स्त्रिया सम्यङ् नियुक्तया ।
प्रजेप्सिताऽधिगन्तव्या संतानस्य परिक्षये ॥
विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन ॥
द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः ।
अनिर्वृतं नियोगार्थं पश्यन्तो धर्मतस्तयोः ॥
विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि ।
गुरुवच्च स्नुषावच्च वर्तेयातां परस्परम् ॥
नियुक्तौ यौ विधिं हित्वा वर्तेयातां तु कामतः ।
तावुभौ पतितौ स्यातां स्नुषाग-गुरुतल्पगौ ॥
नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥
नौद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥
स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥
ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥’ (९ । ५९-६८)

एवमन्येऽपि ।

अत्रायमाशयः— 'नौद्वाहिकेषु मन्त्रेषु नियोगः—' इत्यनेन विधवाया नियोगो विवाहश्चेत्युभयमपि वेदबहिर्भूतमेव । तत्र क्षतयोनेः सधवाया विधवाया वा द्वितीयेन पत्या पुनर्विवाहो न भवतीति मन्वाद्याशयः पुनर्भूभवनानुज्ञावचनतो व्यक्त एव । एवं च विधवायाः पुनर्विवाहार्थमग्रे धावनं केवलं पतनपर्यवसानकम् । पूर्वं पुनर्भूस्तदपत्यं तत्पतिश्चेति त्रयोऽप्यार्यविगर्हिता भवन्ति । किमुत द्वितीया ( क्षतयोनिः ) मन्वाद्यननुज्ञाता ।

'कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥' (मनु.९।१६०)इति च ।

तदिदं पुनर्विवाहकरणं वर्णव्यवस्थारते **भारते** शूद्रादिष्वेव दृश्यते न तु द्विजातिषु । नियोग इवायं पुनर्विवाहः प्राङ् ना प्रावर्तत, अन्यथा नियोगोत्पादितः क्षेत्रज इव पौनर्भवोऽपि साधूपलभ्येत । तथा औरसक्षेत्रजाभ्यां पैतृकसंपदि नियन्त्रितायां दत्तकाद्यवसरोऽपि प्रायः प्राङ् नो प्रावर्तत, अन्यथा **धृतराष्ट्रपाण्डुविदुर**वद् दत्तकप्रमुखा अपि लभ्येरन् । ते च—

'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥' (मनु.९।१५९) इति ।

सत्यम् । अखण्डब्रह्मवर्चसानामृषीणां मुनीनां च प्रभावेण राज्ञो **वेनाद्** वैन्यस्य **पृथो**रिव प्रादुर्भावाश्चर्यपूरे जाग्रति तदवकाश एव नाजनिष्ट । तदनु घृताक्तविधिपिच्छलो मार्गः । तदनु च कालक्रमेण कृशिमानं गच्छति ब्रह्मवर्चसे, बहुलीभवति मानसदौर्बल्ये, व्यतिक्रमवारणाय नियोगो नितरां न्यषेधि । तथाचाह **बृहस्पतिः**—

'उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु ।
युगह्रासादशक्योऽयं कर्तुमन्यैर्विधानतः ॥

तपोज्ञानसमायुक्ताः कृतत्रेतादिके नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता ॥
अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनैरिदंतनैः ॥ ' इति ।

एतेन मात्राज्ञावशंवदेन व्यासेन भगवता नियोगादुत्पादितं धृतराष्ट्रादित्रयं तथा पत्याज्ञापराधीनया कुन्त्योत्पादितं युधिष्ठिरादित्रयं माद्र्योत्पादितं नकुलादिद्वयमर्थात् पाण्डवपञ्चकं च व्युत्पादितम् । धृतराष्ट्रपाण्डुविदुराणामुत्पत्तिवृत्तं **महाभारत**स्यादिपर्वणि षडधिकशततमेऽध्यायेऽ ( १०६ ) वधेयम् । पाण्डवानां तु तत्रैव पर्वणि १२३-१२४ अध्याययोरवधेयमिति ॥

एवमादिपर्यालोचयता राज्ञा, स्वराज्ये बालवृद्धपरिणयनादिप्रतिषेधेन स्त्रीपुंसयोर्योग्यं योगं प्रचारयता, सद्विद्यापरिबृंहणेन—

' परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः ॥ ' (मनु.३।१७४)

इति कुण्डगोलजननं प्रलीनभ्रूणहननं मुद्रयता, प्रकृतिपित्रा राज्याश्रममुनिना भवितव्यमिति निष्कर्षः ॥

हितोपदेशस्यावसरं दर्शयति—**दृढीभवन्निति** । राज्यासूनां निष्क्रमणात्प्रागेव तद्रक्षायै चेष्टितव्यम् । अन्यत्राप्युक्तम्—

" यावद् देहं जरयति जरा नान्तकादेत्य दूती,
नो वा भीमश्विफणभुजगाकारदुर्वारपाशः ।
गाढं कण्ठे लगति सहसा जीवितं लेलिहान-
स्तावद् भक्ताभयद ! सदयं श्रेयसे नः प्रसीद ॥"
( साम्बपञ्चाशिका ) इति ॥

लघूपायमाह—**चेन्नावकाश इति** । अवकाशाभावो हि पाठ्यपुस्तकानां बहुत्वेन कार्यसंतानानामतिपातत्वेन च दृश्यः । निगमः श्रुति-

स्मृतिनिरूढो राजधर्मः। गीतेति उपनिषदो विशेष्याभिप्रायेण स्त्रीलिङ्गम्। तत्रापि भगवता भाषाभङ्ग्या गीतायां उपनिषदो द्वितीयाष्टादशाध्यायौ तु अवश्यमेव परिभावनीयौ गुण्यौ। उत्तरार्धेन गीतायाः प्रयोगावसरो निरूपितः। गाण्डीवधन्वेति पुंस्त्वपरिग्रहार्थम्। 'क्रिया हि वस्तूपहिता प्रसीदति' इति भावः। भवतोऽत्रभवतो बाणस्योक्तौ—

"धृतधनुषि बाहुशालिनि शैला न नमन्ति यत् तदाश्चर्यम्।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु॥"

'अङ्गनवेदी वसुधा, कुल्या जलधिः, स्थली च पातालम्।
वल्मीकश्च सुमेरुः, कृतप्रतिज्ञस्य वीरस्य॥" इति (हर्षचरितम्)

॥ ६१–६६॥

**तुष्यत्सु रुष्यत्सु चलाचलेषु**
**धावत्सु वाहेषु मतङ्गजेषु।**
**असंभ्रमारोहणचालनाभ्यां**
**शारीरिकीं शक्तिमुदञ्चयन्तु॥ ६७॥**

**स्थिरस्य लोलस्य च धावतो वा**
**लक्ष्यस्य वेधोऽस्खलितं यथा स्यात्।**
**निमेषमात्रेण तथार्जयन्तु**
**संधानिकाकर्माणि नैपुणानि॥ ६८॥**

द्वाभ्यां धनुर्वेदविज्ञानार्थमाह—**तुष्यत्स्विति**। उपमर्दादौ तोषो रोषश्च अनुमेयौ, चाञ्चल्यं धावनं च प्रत्यक्षे। वाहाः मनोजवाः, मतङ्गजा जङ्गमदुर्गाः। द्वयेषामेषां रथाश्वगजारोहाणां यथाशासनं स्वभावविज्ञानमत्यावश्यकम्। असंभ्रमारोहणचालनाभ्यामिति तृतीयाचतुर्थ्योर्द्विवचनम्। क्रीडासंग्रामार्थं ब्रह्मचर्यव्यायामाभ्यां शारीरिकशक्तेरतिशयापादनं न्याय्यमिति॥

**स्थिरस्येति** विशेषणत्रिकेण लक्ष्यस्य वेध्यस्य स्वरूपप्रदर्शनम्। निमे-

षमात्रेणेति विलम्बनिरासार्थं हस्तलाघवार्थं च। धनुर्वेदे सर्वत्रैव संधानिकाकौशलमत्यर्थं प्रयोजकम्, किमुत धनुर्वेदप्राणभूते धनुषीति। भेदनं छेदनं स्फोटनं त्रासनमिति प्राधान्येन चत्वार्यायुधकर्माणि तथैवायुधानि च स्मर्यन्ते। तानि तु भगवतश्चक्रपाणेः शार्ङ्गनन्दककौमोदकीपाञ्चजन्यानि यथानिर्दिष्टानि—

'न नीतमन्येन नतिं कदाचित्
कर्णान्तिकप्राप्तगुणं क्रियासु।
विधेयमस्याऽभवदन्तिकस्थं
शार्ङ्गं धनुर्मित्रमिव द्रढीयः॥'

'न केवलं यः स्वतया मुरारे-
रनन्यसाधारणतां दधानः।
अत्यर्थमुद्वेजयिता परेषां
नाम्नापि तस्यैव स नन्दकोऽभूत्॥'

'विरोधिनां विग्रहभेददक्षा
मूर्तेव शक्तिः क्वचिदस्खलन्ती।
नित्यं हरेः संनिहिता निकामं
कौमोदकी मोदयति स्म चेतः॥'

'प्रवृद्धमन्द्राम्बुदधीरनादः
कृष्णार्णवाभ्यर्णचरैकहंसः।
मन्दानिलापूरकृतं दधानो
निध्वानमश्रूयत पाञ्चजन्यः॥' (शिशुपाल०) इति।

तथा **ऋक्संहितायां काठकसंहितायां** च—

"जीमूतस्येव भवति प्रतीकं,
यद् वर्मी याति समदामुपस्थे।
अनाविद्धया तन्वा जय त्वं,

स त्वा वर्मणो महिमा पिपर्तु ॥

धन्वना गा, धन्वनाजिं जयेम,

धन्वना तीव्राः समदो जयेम ।

धनुः शत्रोरपकामं कृणोति,

धन्वना सर्वाः प्रदिशो जयेम ॥

वक्ष्यन्तीवेदा गनीगन्ति कर्णं

प्रियं सखायं परिषस्वजाना ।

योषेव, शिङ्क्ते वितताधि धन्व-

ज्या इयं समने पारयन्ती ॥

ते आचरन्ती समनेव योषा,

मातेव पुत्रं बिभृतामुपस्थे ।

अप शत्रून् विध्यतां संविदाने

आर्त्नी इमे विस्फुरन्ती अमित्रान् ॥

बह्वीनां पिता, बहुरस्य पुत्र-

श्चिश्चा कृणोति समनावगत्य ।

इषुधिः संकाः पृतनाश्च सर्वाः

पृष्ठे निनद्धो जयति प्रसूतः ॥

रथे तिष्ठन्नयति वाजिनः पुरो

यत्र यत्र कामयते सुषारथिः ।

अभीशूनां महिमानं पनायत

मनः पश्चादनुयच्छन्ति रश्मयः ॥

तीव्रान् घोषान् कृण्वते वृषपाणयो-

ऽश्वा रथेभिः सह वाजयन्त ।

अवक्रामन्तः प्रपदैरमित्रान्

क्षिणन्ति शत्रूँरनपव्ययन्तः ॥

रथवाहनं हविरस्य नाम
यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुपशग्मं सदेम
विश्वाहा वयं सुमनस्यमानाः ॥
स्वादुषंसदः पितरो वयोधाः
कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्राः
सतोवीरा उरवो व्रातसाहाः ॥" इति
(ऋ. सं. ६ मं. ६ अ. ७१ सू.) (काठकेऽश्वमेधाख्यपञ्चमग्रन्थेजीमूतानुवचने)

'ब्रह्मास्त्रं ब्रह्मदण्डास्त्रमस्त्रं ब्रह्मशिरस्तथा ।
वायव्यास्त्रं पाशुपतं पञ्चास्त्रमिति कीर्तितम् ॥' इति च ।

एवंप्रायप्रभावाणि पराणि परश्शतानि महापुरुषप्रसाधनानि । प्राङ्मानसशरीरशक्तिप्रकर्षे भारतवर्षे राजकुलेषु राजवंश्या एव संग्रामोत्तरा आसन् । तत्रेयं दिक्—

"दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥
पश्यैतां पाण्डुपुत्राणामाचार्य ! महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥"
'अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ! ।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥

भवान्, भीष्मश्च कर्णश्च कृपश्च-समितिंजयः।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥" (भ. गी. १। २-९)

अलमनयातिक्रान्तकथया तथापीदमधिश्रवणं शब्दायताम्—

"स क्षत्रियस्त्राणसहः सतां य-
स्तत् कार्मुकं कर्मणि यस्य शक्तिः ।
न वा वृथाटोपविशेषधारी
स्वदेशवैमुख्यकलानुसारी ॥" इति ।

'क्षत्रस्य' न तु यस्य कस्यचित्, अपत्यं शुक्रशोणितविशेषपरिणामः, न तु यत्किंचित्-क्षत्रियः। 'क्षत्राद् घः' (पा. सू. ४।१।१३८)। कर्मणे प्रभवति, भेदनच्छेदनस्फोटनत्रासनाख्यव्यापाराय समर्थो भवति—कार्मुकम्। 'कर्मण उकञ्' (पा. सू. ५।१।१०३) ॥ ६७–६८ ॥

**प्रजानुरागप्रसरामृताना-**
**मात्मा यथा भाजनतां प्रयायात् ।**
**तथा स्फुरन्न्यायनिरन्तराणि**
**सर्वाणि कार्याणि निरूपयध्वम् ॥ ६९ ॥**

**प्रधानलेखान्स्वयमाकलय्य**
**तत्रानुरूपं मतमादिशन्तु ।**
**न केवलं वाचकमुद्रयैव**
**मेयानि सिद्धान्तपथं नयन्तु ॥ ७० ॥**

**श्रुतं श्रुतिभ्यां पुनरीक्षणाभ्यां**
**शास्त्राञ्जनाभ्यामवधार्य कार्यम् ।**
**सिद्धान्तशय्यामधिशाययन्तु**
**प्रमादयोगो हि हिनस्ति भूपान् ॥ ७१ ॥**

राष्ट्रे पुरे ग्रामटिकान्तरे च
धर्मप्रचाराय सदा यतध्वम् ।
य आश्रयीभूय विधीयमानो
जनं पतन्तं धरतीति रूढिः ॥ ७२ ॥

अमात्यपार्श्वानुचरादिवर्गे
न्यायालयोच्चावरमण्डलेषु ।
आलोचनोत्कोचनिरासपूर्वा
प्रवर्तनीया परिणामबोध्या ॥ ७३ ॥

न वासवः संप्रति कामवर्षी
धरापि नाभीष्टफलाथ मार्यः ।
येऽन्वेक्षका यूयमपि प्रजानां
का लौकिकी पालनसाधना स्यात् ॥ ७४ ॥

षड्भी राजकार्याण्याह—प्रजानुरागेति । तथा च संविधीयते—
"प्रजानां विनयाधानाद् रक्षणाद् भरणादपि ।
राजा भवेत् पिता, तासां पितरो जन्महेतवः ॥"
'कामक्रोधौ तु संयम्य योऽर्थान् धर्मेण पश्यति ।
प्रजास्तमनुवर्तन्ते समुद्रमिव सिन्धवः ॥' (मनु. ८ । १७५)

न्यायनिरन्तराणीति । नितरामत्यर्थमायात्रिवर्गवृद्धिः तेन निरन्तराणि अनुस्यूतानि । राज्ञः प्रजाभिः सह व्यवहारे शुद्धे प्रवर्तमाने सति—

'बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्
पराभ्यर्थाभ्यूहान्यपि तनुतराणि स्थगयति ।
जनो विद्वानेकः सकलमभिसंधाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते ॥' (मालती.)

इत्यस्यावकाश एव न स्यात् । दुर्नयो हि दुःखाकुलते, पुनः पुनश्च

परिवर्तनं कामयते । यदि नाम सुनयो भवेद् यथोत्तरं व्यवहारपदानि लघूभवन्ति जायेरन्, अनायसं च प्रजा उपचीयेरन् ॥

**प्रधानलेखानिति** । प्रधानलेखान् अधिकारिभिर्यथोत्तरमाकालितान् । वाचकमुद्रा हि क्षणादर्थमन्यथयति । इत्थं कायस्थाः लावका गणका लेखकाश्च द्रष्टव्याः । त एते पुरा भूर्जध्वजा इति व्यपदिश्यन्ते ॥

**श्रुतं श्रुतिभ्यामिति** । मायाविनां मायाविलसितानां व्यामोहफलन्फलानां निरासार्थमेतत् । एतदेव पुनः 'प्रमादयोगो हि हिनस्ति भूपान्' इत्यनेन विन्यस्तम् । तथा चाख्यायते—

'पुण्यात् षड्भाग ( $\frac{1}{6}$ ) मादत्ते न्यायेन परिपालयन् ।
सर्वदानाधिकं यस्मात् प्रजानां परिपालनम् ॥
चाटुतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥
अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ।
तस्मात्तु नृपतेरर्धं ( $\frac{1}{2}$ ) यस्माद् गृह्णात्यसौ करान् ॥'

( याज्ञ. १ । ३३५-३३७ )

'बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥' ( मनु. ८ । २५-२६ )

**राष्ट्रे इति** । चकारो मनुष्यावासमात्रं समुच्चिनोति ।

**धर्मप्रचारायेति** । यथा च भगवान् धर्मो जनताया हृदयमन्दिरे वृत्तिरूपेण व्यवहारे ह्याचाररूपेणावतिष्ठेत, तथा प्रयत्येत । प्रयत्नो यथा—

"न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥
नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।

शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥
यदि नात्मनि, पुत्रेषु, न चेत्पुत्रेषु, नप्तृषु ।
न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः ॥
अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति, समूलस्तु विनश्यति ॥'(मनु. ४ । १७१-१७४)
"धर्मं शनैः संचिनुयाद्, वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारा, न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥
एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव तु दुष्कृतम् ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ ।
विमुखा बान्धवा यान्ति, धर्मस्तमनुगच्छति ॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥
धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥' इति ।
(मनु. ४ । २३८-२४३)

एवं चोपदेश्यान् अभिलक्ष्य—

'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' (शु. य. सं. १ । १) इति धर्मसुहृद आदर्शभूतस्योपदेशकस्य, न तु धर्मध्वजिनः, आशंसनम्; तथा चोपदेश्येषु—

'विश्वानि देव सवितर्दुरितानि परासुव ।
यद् भद्रं तन्न आसुव ॥' (शु. य. सं. ३० । ३)

इति प्रतिष्ठानं च फलवती भवेताम्, नान्यथा । अतिरागितया पुनरेतन्न विस्मर्तव्यम्—

य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ।
तमेव कृत्स्न (१) माप्नोति परराष्ट्रं वशं नयन् ॥
यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः ।
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥' (याज्ञ. १।३४२-३४३)

**अमात्येति** । अत्रेदं कर्तव्यम्—

" ये राष्ट्राधिगतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून् संमानयेद् राजा, विपरीतांश्च घातयेत् ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् ।
सदानमानसत्काराञ् श्रोत्रियान् वासयेत् सदा ॥" (याज्ञ. १।३३८-३३९)
' अपि भ्राता सुतोऽर्घ्यो वा श्वसुरो मातुलोऽपि वा ।
नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥ (याज्ञ. १।३५८)

उपप्लवानाह—**न भ्रासव इति** । यथासंभवं प्रतिक्रियाकरणार्थमिदम् । अवृष्ट्यादय उपप्लवा मानवानामपचारेणोद्भवन्ति । तथाच **गर्गः**—

' अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः ।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते ॥'

**वराहमिहिरोऽपि**—

' अपचारेण नराणामुपसर्गः पापसंचयाद्भवति ।
संसूचयन्ति दिव्यान्तरिक्षभौमास्त उत्पाताः ॥' (बृहत्संहि. ४५।२)

**चरकसंहितायां** विमानस्थाने तु सविस्तरमुक्तम्—

" वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम् ।
गरीयस्त्वं विशेषेण हेतुमत्सु प्रचक्षते ॥
वाताज्जलं, जलाद्देशं, देशात्कालं, स्वभावतः ।
विद्यादपरिहार्यत्वाद् गरीयः परमार्थवत् ॥
वाय्वादिषु यथोक्तानां दोषाणां तु विशेषवित् ।

प्रतिकारस्य सौकर्ये विद्याल्लाघवलक्षणम् ॥
चतुर्ष्वपि च दुष्टेषु कालान्तेषु यदा, नराः ।
भेषजेनोपपाद्यन्ते, न भवन्त्यातुरास्तदा ॥
येषां न मृत्युसामान्यं, सामान्यं न च कर्मणाम् ।
कर्म पञ्चविधं तेषां भेपजं परमुच्यते ॥
रसायनानां विधिवच्चोपयोगः प्रशस्यते ।
शस्यते देहवृत्तिश्च भेपजैः पूर्वमुद्धृतैः ॥
सत्यं, भूते दया, दानं, बलयो, देवतार्चनम् ।
सद्वृत्तस्यानुवृत्तिश्च, प्रशमो, गुप्तिरात्मनः ॥
हितं जनपदानां च, शिवानामुपसेवनम् ।
सेवनं ब्रह्मचर्यस्य, तथैव ब्रह्मचारिणाम् ॥
सत्कथाधर्मशास्त्राणां महर्षीणां जितात्मनाम् ।
धार्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसंमतैः ॥
इत्येतद्भेषजं प्रोक्तमायुषः परिपालनम् ।
येषामनियतो मृत्युस्तस्मिन्काले सुदारुणे ॥ (२२-३१)

इति श्रुत्वा जनपदोद्ध्वंसने कारणानि पुनश्चापि भगवन्तमात्रेयमग्निवेश उवाच ॥ अथ भगवन् ! कुतोमूलमेषां वाय्वादीनां वैगुण्यमुत्पद्यते, येनोपपन्ना जनपदमुद्ध्वंसयन्तीति ॥ तमुवाच भगवानात्रेयः—सर्वेपामप्यग्निवेश ! वाय्वादीनां वैगुण्यमुत्पद्यते यत् तस्य मूलमधर्मः ॥ तन्मूलं चासत्कर्म पूर्वकृतं तयोर्योनिः प्रज्ञापराध एव ॥ तद्यथा—यदा वै देशनगरनिगमजनपदप्रधाना धर्ममुत्क्रम्याधर्मेण प्रजां प्रवर्तयन्ति ॥ तदाश्रितोपाश्रिताः पौरजनपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्धयन्ति ॥ ततः सोऽधर्मः प्रसभं धर्ममन्तर्धत्ते, ततस्तेऽन्तर्हितधर्माणो देवताभिरभित्यज्यन्ते ॥ तेषां तथाविधान्तर्हितधर्माणामधर्मप्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते॥ तेनापो यथाकालं देवो वर्षति, न वा वर्षति, विकृतं वा वर्षति, वाता न

सम्यगभिवान्ति; क्षितिर्व्यापद्यते; सलिलान्युपशुष्यन्ति ॥ ओषधयः स्वभावं परिहायापद्यन्ते विकृतिं; तत उद्ध्वंसन्ते जनपदाः स्पर्शाभ्यवहार्यदोषात् ॥" (३२-४१) इत्यादि ॥ ६९-७४ ॥

**उद्घाट्य कार्यालयसंनिवेशा-**
**नारोप्य तत्रोद्यममर्मविज्ञान् ।**
**उच्चावचाँस्तत्सहकारिवर्गा-**
**न्निरूप्य लोकाः सुहिता विधेयाः ॥ ७५ ॥**

**महत्तरोत्कर्षविधासु सिद्धा**
**युरोपविज्ञानभुवोऽर्थविद्याः ।**
**दृष्टक्रियैर्विज्ञवरैरवश्यं**
**हिन्दीगिरा निर्मलयाऽनुवाद्याः ॥ ७६ ॥**

**सुयोग्यविद्वद्गणगर्वितानां**
**पाठालयानां स्थितयो निरूप्याः ।**
**तत्रोच्चकैः सर्वजनीनशिक्षा-**
**दीक्षाश्च देशाभ्युदयाय योज्याः ॥ ७७ ॥**

**द्रव्यव्ययेनैव न कर्मसिद्धि-**
**रपेक्ष्यते सत्कृतिरप्यमुत्र ।**
**गुणोत्तरा माननमाद्रियन्ते**
**यथा तथा न द्रविणप्रयोगात् ॥ ७८ ॥**

चतुर्भिर्लौकिकीं पालनसाधनां प्रदर्शयति—**उद्घाट्येति** । 'आयुर्वेदो धनुर्वेदो गन्धर्ववेदोऽर्थवेद' इति लोकयात्रापद्धतयश्चतस्रो विद्याः कार्यालयसंनिवेशजीवातवः पाठतः प्रयोगतश्च व्यवहर्तव्याः । उक्तं चास्माभिरितरत्र—

'सरसो मधुरो विकस्वरोऽप्युपदेशो विफलः क्रियां विना ॥' इति ।

**युरोपविज्ञानभुव** इति कार्यनिष्पत्तिदर्शनाभिप्रायेण ।

इतरया वेदार्थरहस्याकलनेन भवद्भिरपि नवनवा लोकयात्राभूर्वहा विज्ञानविभूतयः प्रादुष्कर्तव्याः । हिन्दीति व्यापकदेशभाषापरिग्रहार्थम् । पाठालयाः विज्ञानशालाः । अथवा 'विज्ञानधाम्नाम्' इति पठनीयम् । सर्वजनीनाशिक्षेति । तथा च श्रूयते—

'यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्यांᳬ शूद्राय चार्याय च स्वाय चारणाय ।' (शु. य. सं. २६ । २)

'सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥'

(ऋ. सं. १० मं. १२ अ. १९१ सू.)

॥ ७५-७८ ॥

राज्यान्तरे स्फारसमृद्धियोगा-
न्प्रजान्तरे शान्तिसुधाप्रवाहान् ।
यथायथं शासनकौशलेन
संचार्य संसारसुखं भजध्वम् ॥ ७९ ॥

गृहीतचित्तानसमैः समन्ता-
न्निक्षिप्य वित्तान्विषयापगासु ।
विमुह्यमानान्भवतो विभाव्य
भैषज्ययोगायितमेतदुक्तम् ॥ ८० ॥

इति बाहुत्रिंशतिका ॥

द्वाभ्यामुपसंहरति—राज्यान्तर इति । निगदव्याख्यातम् । संसारसुखमिति न भोगपरायणत्वम् । किंतु मनूपदिष्टमिदम्—

'उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुताग्निर्ब्राह्मणाँश्चार्च्य प्रविशेत् स शुभां सभाम् ॥
तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वा मन्त्रयेत् सह मन्त्रिभिः ॥' (७।१४५-१४६)

"क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥
आपदर्थे धनं रक्षेद्, दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि ॥
सह सर्वाः समुत्पन्नाः प्रसमीक्ष्यापदो भृशम् ।
संयुक्ताँश्च वियुक्ताँश्च सर्वोपायान् सृजेद्बुधः ॥
उपेतारमुपेयं च सर्वोपायाँश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेतार्थसिद्धये ॥
एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः ।
व्यायम्याऽऽप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं विशेत् ॥
तत्रात्मभूतैः कालज्ञैरहार्यैः परिचारकैः ।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥" (७ । २१२-२१७)

"अलंकृतश्च संपश्येदायुधीयं पुनर्जनम् ।
वाहनानि च सर्वाणि शस्त्राण्याभरणानि च ॥
संध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।
रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥
गत्वा कक्षान्तरं त्वन्यत् समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थं च स्त्रीवृतोऽन्तःपुरं पुनः ॥
तत्र भुक्त्वा, पुनः किंचित्तूर्यघोषैः प्रहर्षितः ।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥
एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेतत्तु भृत्येषु विनियोजयेत् ॥" (७ । २२२-२२६)

'श्रोत्रियं व्याधितार्तौ च बालवृद्धावकिंचनम् ।
महाकुलीनमार्यं च राजा संपूजयेत् सदा ॥' (८ । ३९५)

'आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ।

कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥' (९।३००)

" इन्द्रस्या,र्कस्य, वायोश्च, यमस्य, वरुणस्य च ।
चन्द्रस्या,ग्नेः, पृथिव्याश्च, तेजोवृत्तं नृपश्चरेत् ॥
वार्षिकाँश्चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति ।
तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् ॥
अष्टौ मासान् यथाऽऽदित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥
प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥
*यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।*
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥
वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते ।
तथा पापान्निगृह्णीयाद् व्रतमेतद्धि वारुणम् ॥
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो यस्मिन् स चान्द्रव्रतिको नृपः ॥
प्रतापयुक्तस्तेजस्वी नित्यं स्यात् पापकर्मसु ।
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥
यथा सर्वाणि भूतानि धरा धारयते समम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥" (९।३०३-३११)

**गृहीतचित्तानिति** पारम्परिकस्य क्षात्रधर्मस्य व्यत्यासप्रदर्शनार्थम् ॥ ७९–८० ॥

अथ क्षत्रियशेषम्—

ब्राह्मणशिक्षावद् ब्राह्मणशेषस्यापि विषयोऽत्र यथासमयमनुवर्तनीय एव, विशेषस्त्वयम्—

" प्रजानां रक्षणं दान, मिज्या,ऽध्ययनमेव च ।

विषयेष्वप्रसक्तिश्च, क्षत्रियस्य समासतः ॥" (मनु. १।८९)

" शौर्यं, तेजो, धृति, र्दाक्ष्यं, युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च, क्षात्रं कर्म स्वभावजम् ॥"

(भ.गी. १८।४३) इति ।

' त्रयो धर्मा निवर्तन्ते ब्राह्मणात् क्षत्रियं प्रति ।
अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ॥
वैश्यं प्रति तथैवैते निवर्तेरन्निति स्थितिः ।
न तौ प्रति हितान् धर्मान् मनुराह प्रजापतिः ॥

( मनु. १० । ७७-७८ ) इति

' ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत् ।
कामं तु खलु धर्मार्थं दद्यात् पापीयसेऽल्पिकाम् ॥'

( मनु. १० । ११७ ) इति च ॥

**आपद्धर्मस्तु—**

" वैश्यवृत्त्यापि जीवँस्तु ब्राह्मणः क्षत्रियोऽपि वा ।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥
कृषिं साध्विति मन्यन्ते, सा वृत्तिः सद्विगर्हिता ।
भूमिं भूमिशयाँश्चैव हन्ति काष्ठमयोमुखम् ॥
इदं तु वृत्तिवैकल्यात् त्यजतो धर्मनैपुणम् ।
विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्धनम् ॥
सर्वान् रसानपोहेत, कृतान्नं च तिलैः सह ।
अश्मनो, लवणं चैव, पशवो ये च मानुषाः ॥
सर्वं च तान्तवं रक्तं, शाणक्षौमाविकानि च ।
अपि चेत् स्युररक्तानि फलमूले तथौषधीः ॥
अपः, शस्त्रं, विषं, मांसं, सोमं, गन्धाँश्च सर्वशः ।
क्षीरं, क्षौद्रं, दधि, घृतं, तैलं, मधु, गुडं, कुशान् ॥

आरण्यांश्च पशून् सर्वान्, दंष्ट्रिणश्च, वयांसि च ।
मद्यं, नीलिं च, लाक्षां च, सर्वांश्चैकशफांस्तथा ॥"
(मनु. १० । ८३-८९) इति ।

**एतदुक्तं भवति—**

'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥
विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः ।
धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः ॥' (मनु. १० । ११५-११६)

इत्यनेन साधारण्येन निर्दिष्टानां जीवनव्यवहाराणां यथावर्णं प्रविभज्य दर्शनमेतत् । नहि सर्वः सर्वेण जीवनोपायेन जीवितुमर्हति । अत एव—

'जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः ।
न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥' (मनु. १० । ९५)

इति क्षत्रियापद्धर्मोपसंहारे निरूपितम् । लोकदृष्ट्यापि सर्वस्य सर्वोपायेन जीवनादेशे सर्वमधरोत्तरं भवतीति पुरस्तान्निर्णायकानाम् । यदवधि भारतभूतले मानवीयं वृत्तिपरिपाटी शिथिलीभवन्ती चेष्टते तदवधि वर्णाश्रमिणः सपशवः क्लिष्टक्लिष्टाः प्रवर्तन्त इत्यपि न प्रच्छन्नं विवेचकानाम् । इत्थं माभूदित्येव प्रजापतिना—

'यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥' (मनु. १० । ९६)

इत्यादिष्टम् । यस्मात् —

'वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्मेण जीवन् हि सद्यः पतति जातितः ॥' (मनु. १० । ९७)

इत्युक्तम् । इह भगवद्गीतापि भीतापनुत् ॥

अपि च । विश्लिष्टाभिमतसंपदि आपदि क्षीणसंस्थाकुले क्षत्रियकुले क्वचिद् केनचिद् विभ्रमवशाद् भूदेवस्वं वा देवस्वं वा खिलीक्रियते तदिदं

नितान्तमनात्मनीनम् । तत्र तत्तत्कुलावतंसानां क्षत्रियपुंगवानां नानाप्रकाराणि दानपत्राणि देवतायतनादिसमुत्कीर्णा लेखाश्चापि प्रमाणानि । तेष्विदं स्वल्पतरतममीषदेवोपन्यस्यते—

(१) प्रथमं तावद् धारानगराधिपसुप्रसिद्धभोजमहीपतेः पितामहस्य (परमारवंशोद्भवस्य) **वाक्पतिराजस्य** दानपत्रतः—"..........

उक्तं च—

'बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

यानीह दत्तानि पुरा नरेन्द्रै-
र्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रमितानि तानि
को नाम साधुः पुनराददीत ॥

अस्मत्कुलक्रममुदारमुदाहरद्भि-
रन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
दानं फलं परयशः परिपालनं च ॥

सर्वानेतान् भाविनः पार्थिवेन्द्रान्
भूयो भूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नराणां
काले काले पालनीयो भवद्भिः ॥

इति कमलदलाम्बुबिन्दुलोलां
श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा
नहि पुरुषैः परकीर्तयो विलोप्याः ॥' इति ॥

सं. १०३१ भाद्रपद सुदि १४ स्वयमाज्ञादायकश्चात्र श्रीकण्हयैकः ।

स्वहस्तोऽयं श्रीवाक्पतिराजदेवस्य ॥" (इण्डियन् आण्टिक्वेरी ६।५१-५२)

(२) राष्ट्रकूटवंशोद्भवलाटदेशाधीश्वरकर्कराजमहीपतेर्दानपत्रतः—

"..............श्रीवलभीविनिर्गततच्चातुर्वेद्यसामान्यवात्स्यायनसगोत्रमाध्यंदिनसब्रह्मचारिब्राह्मणभानवे भट्टसोमादित्यपुत्राय आङ्कोट्टकचतुरशीत्यन्तर्गतवडपद्रकाभिधानग्रामः, यस्याघाटनानि—पूर्वतो जम्बूवाविकाग्रामः, तथा दक्षिणतो महासेनकाख्यं तडागम्, तथा पश्चिमतोऽङ्कोट्टकम्, तथोत्तरतो वग्वाच्छग्रामः, एवमसौ चतुराघाटनोपलक्षितः सोद्रङ्गः सोपरिकरः सभूतवातप्रत्यायः सदण्डदशापराधः सोत्पद्यमानवृष्टिकः सधान्यहिरण्यादेयः सर्वराजकीयानामहस्तप्रक्षेपणीयः आचन्द्रार्कार्णवसरित्पर्वतसमकलीनः पुत्रपौत्रान्वयभोग्यः पूर्वप्रदत्तदेवदायब्रह्मदायरहितो भूमिच्छिद्रन्यायेन शकनृपकालातीतसंवत्सरशतेषु सप्तसु चतुस्त्रिंशदधिकेषु महावैशाख्यां स्नात्वोदकातिसर्गेण बलिचरुवैश्वदेवाग्निहोत्रातिथिपञ्चमहायज्ञक्रतुक्रियाद्युत्सर्पणार्थं प्रतिपादितः। ................" (इण्डियन् आण्टिक्वेरी १२।१५८-१६२)

(३) यादववंशोद्भवस्य वीरवल्लालदेवमहीपतेर्दानपत्रतः—

"...........गण्यन्ते पांसवो भूमेर्गण्यन्ते वृष्टिविन्दवः।
न गण्यते विधात्रापि धर्मसंरक्षणे फलम् ॥
..........स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥....................
..........कुलानि तारयेत्कर्ता सप्त सप्त च सप्त च।
अधोधः पातयेद्-हर्त्ता सप्त सप्त च सप्त च ॥.........."

(इण्डियन् आण्टिक्वेरी २।२९६-३०३)

(४) कुरुकुलालंकारश्रीजनमेजयमहाराजस्य शासनपत्रतः—"श्रीगणाधिपतये नमः:.............युधिष्ठिरशके प्लवङ्गाख्ये एकोननवति (८९) वत्सरे सहस्यमासि अमावास्यायां सोमवासरे.........................

………दानपालयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम् ॥
स्वदत्ताद् द्विगुणं पुण्यं परदत्तानुपालने ।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥………"

( इण्डियन् आण्टिक्वेरी ४ । ३३३–३३४ )

( ५ ) किं बहुना, असुरवंशोद्भवा अपि राजन्या वैदिकमार्गानुगामिनोऽवधार्यन्ते । तत्रेयं दिक्—

" ………यत्तत्वप्रकटीकृतावतितरां वेदोऽपि नालं यतः
स्थित्युत्पत्तिलयाः समस्तजगतां यन्मन्वते योगिनः ।
साक्षान्नम्रसुरेन्द्रवृन्दमुकुटव्यालीनरत्नावली
शोणांशुव्रजरञ्जिताङ्घ्रियुगलो भूत्यै शिवः सोऽस्तु वः ॥
क्षीरोदं मथितुं मनोभिरतुलं देवासुरैर्मन्दरं
हित्वाक्षिप्त इवाञ्जनाद्रिरिव यस्तत्राधिकं राजते ।
यो भोगीन्द्रनिविष्टमूर्तिरनिशं भूयोऽमृतस्याप्तये
रक्षेद्वः सुरवृन्दवन्दितपदद्वन्द्वः स नारायणः ॥
यः प्रादादसुराधिपो मखवरे दत्त्वार्घमादाय गां
सद्वीपां सचराचरामधिमुदा देवाय दैत्यद्विपे ।
सोऽभूद्वामनरूपिणे बलिरिति ख्यातः सुरोपद्रव-
व्यापारैकरतः शिवाङ्घ्रिकमलद्वन्द्वार्चनैकव्रतः ॥
तस्मादभूद्गुणनिधिर्बलवाँस्तनूजो
यत्राध्यवर्तत महानमलप्रसादः ।
शंभोः शशाङ्कशकलद्युतिराजिमौले-
र्बाणः कृपाणनिहिताखिलः सुरारिः ॥………
………अनुगतनयमार्गो बाणवंशैकदीपः
प्रणतरिपुसमाजः कृष्णराजप्रियो यः ।

अजनि विजयबाहुः सूनुरस्याधिकश्री-
रपगतदुरितोऽतिर्विक्रमादित्यनामा ॥ ......."

( इण्डियन् आण्टिकेरी १३ । ७-८ )

इत्थं सूर्यस्य ( इण्डियन् आण्टिकेरी १५ । ११४-२०१ ) देवतान्तरस्य मन्दिरतज्जीर्णोद्धारादिसंबन्धि ताम्रपत्रशिलालेखादि तत्र तत्र मुद्रितममुद्रितं च यत्नतो वीक्षणीयम् । भवति चात्रोपसंहारश्लोकः—

'हे राजन्यास्त्यजत निगमप्रेमबन्धेऽवहेलां
शुद्धा कीर्तिर्भवति भवतां नूनमेतत्प्रसादात् ।
भ्राम्यत्तिष्यप्रबलमहिमाक्रान्तभावैः प्रभावै-
र्मा वः प्रज्ञा सुकृतफलने मन्दिमानं दधातु ॥'

इति क्षत्रियशिक्षीया वेददृष्टिः ॥

# अथ वैश्य-शिक्षा ।

व्यापारलक्ष्मीललितस्वभावा
विशन्तु वैश्या द्रविणप्रयोगे ।
इष्टा द्विजातिष्वपि पूर्तियोगे
संस्कारसारं किमु हापयन्ति ॥ ८१ ॥

अथ विंशत्या श्लोकैर्वैश्यान्प्रति निवेदनम् ।

तत्र तेषां स्वरूपमभिदधत् संस्कारत्रुटिं दर्शयति—**व्यापार-लक्ष्मीति** । व्यापारलक्ष्म्या उद्यमश्रिया ललितो मधुरः स्वभावः प्रकृतिर्येषां ते । लक्ष्म्या सर्वेषां लक्षणीयः श्रिया श्रयणीयश्च भवति । स्पष्टोऽयमर्थः—'श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे' ( शु० य० सं० ३१-२२ ) इति कण्डिकातः । द्रविणप्रयोगः द्रवति द्रूयते वेति द्रविणम् । द्रु गतौ । तस्य प्रयोगः प्रकृष्टो योग इत्यर्थः । तत्र विशन्तु,—ब्रह्मणि ब्राह्मणा इव, रक्षणे क्षत्रिया इव, निविष्टा भवन्तु वैश्या इति परमार्थः । तथा च **मनुः**—

'पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥' ( १ । ९० )
'विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥' ( २ । १५५ )
'वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ।
वार्तायां नित्ययुक्तः स्यात् पशूनां चैव रक्षणे ॥
प्रजापतिर्हि वैश्यस्य सृष्ट्वा परिददे पशून् ।

ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन ॥
मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च ।
गन्धानां च रसानां च विद्यादर्घबलाबलम् ॥
बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च ।
मानयोगं च जानीयात् तुलायोगाँश्च सर्वशः ॥
सारासारं च भाण्डानां देशानां च गुणागुणान् ।
लाभालाभं च पण्यानां पशूनां परिवर्धनम् ॥
भृत्यानां च भृतिं विद्याद् भाषाश्च विविधा नृणाम् ।
द्रव्याणां स्थानयोगाँश्च क्रयविक्रयमेव च ॥
धर्मेण च द्रव्यवृद्धावातिष्ठेद् यत्नमुत्तमम् ।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ॥' ( ९ । ३२९-३३३ )

द्वे जाती जन्मनी येषां ते । 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने' ( मनु. २ । १६९ ) इति स्मरणात् । तेषु द्विजातिषु पूर्तियोगे चरमत्वेन समाप्तिभावे दृष्टा अपि संख्याता अपि । द्विजोपाधिर्हि अग्रजन्मनि ब्राह्मणे प्रतिष्ठाय क्षत्रिये विश्रम्य वैश्ये समाप्यत इति व्यक्तम् । शास्त्रनिर्व्यूढं संस्कारसारं किमु हापयन्ति ? मन्यामहे ब्रह्माणो वक्तारः क्षत्त्राणि रक्षितृणि निलीयन्त इति, कथमन्यथा संस्कारसारस्य हापनं संगच्छेत । शास्त्रं तु—'सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयाद् आग्नेयो वै ब्राह्मण इति श्रुतेः । त्रिष्टुभं राजन्यस्य । जगतीं वैश्यस्य' ( पारस्करगृ. २ कां. ३ कं. ) इति । तत्र गायत्र्याः पादाक्षराण्यष्टौ तेनाष्टमे ब्राह्मणस्य, त्रिष्टुभः पादाक्षराण्येकादश तेनैकादशे राजन्यस्य, जगत्याः पादाक्षराणि द्वादश तेन द्वादशे वर्षे वैश्यस्य चोपनयनमिति रहस्यम् । गायत्री पूर्वं व्याकृतैव । त्रिष्टुप्तु—'तांँ सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं

विश्वजन्याम् । यामस्य कण्वो अदुहत् प्रपीनाᳪं सहस्रधारां पयसा महीं गाम् ॥ ' (शु. य. सं. १७ । ७४) इति । जगती तु—' युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ' (शु. य. सं. ५ । १४) इति ॥ ८१ ॥

**न देवताद्यायतने यथेष्टं**
**यज्ञोपवीतग्रहणाद् द्विजत्वम् ।**
**किं वैधदानेन विना कुमारी**
**पत्नीत्वमापादयितुं समर्था ॥ ८२ ॥**
**न वेदबाह्याचरणेन सार्धं**
**यौनो विधिः क्वापि निरूपणीयः ।**
**कुलानि चेतांस्यवरप्रसङ्गा-**
**त्क्रमेण नैर्मल्यगुणाँस्त्यजन्ति ॥ ८३ ॥**

इदानीं द्वाभ्यां ब्राह्मयौनसंबन्धे दौष्ट्यं दर्शयति—**न देवताद्यायतन इति** । देवमन्दिरे वा तीर्थे वा गृह्यसूत्रानिर्दिष्टेन येन केनचित्प्रकारेण उपवीतसूत्रे गृहीते द्विजत्वं नोत्पद्यते । उत्तरार्धेन दृष्टान्तः । अन्यैरप्युक्तम्—

' सद्गुरुकुलतः कृपया लब्धा कामानियं सूते ।
निजबुद्धिमात्रजन्या पापं स्वीया यथा कन्या ॥ ' इयं ब्रह्मविद्या ॥

**न वेदबाह्याचरणेनेति** । अयमर्थः—इदानीं कतिपये वैश्याः जैनादिवेदबाह्याचरणैः सह वैवाहिकं संबन्धं विदधते जाड्यात् तन्निवारणार्थमिदमुच्यते । उत्तरार्धेनानिष्टप्रदर्शनम् । तथा च **मनुः**—

' कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ' (३ । ६३)

'उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सह ।
निनीषुः कुलमुत्कर्षमधमानधमाँस्त्यजेत् ॥' ( ४ । २४४ ) ॥८२-८३॥

**शृण्वन्तु वेदानवधारयन्तु**
**तदुक्तकर्माण्यपि साधयन्तु ।**
**अज्ञानयोगेन विजृम्भमाणा-**
**ञ्जातीयदोषान्परिमार्जयन्तु ॥ ८४ ॥**

**अन्योन्यकर्मार्पितसान्द्रहर्षा**
**धामत्रयीवातिशयप्रकर्षा ।**
**उन्मूलयन्ती शतधा तमांसि**
**द्विजत्रयीयं प्रथतां हिताय ॥ ८५ ॥**

द्वाभ्यां दोषमार्जनोपायं तत्फलं चाह-**शृण्वन्त्विति** । वेदान् ऋग्यजुःसामाथर्वणो व्याख्यायमानान् शृण्वन्तु, तात्पर्यतोऽवधारयन्तु, तदुक्तानि कर्माणि च यथाधिकारं साधयन्तु । एवं च बोधवृद्धौ अबोधेन संक्रान्तान् जातिदोषान् परित्यागेन प्रायश्चित्तेन सुकृतार्जनेन च मार्जयन्तु ॥

**अन्योन्येति** । अन्योन्येषां कर्मभिरर्पितः सान्द्रहर्षो यया सा । धाम्नां-दिवा सूर्यस्य नक्तं चन्द्रमसोऽग्नेश्च संक्रान्तसौरमहसो, महसां त्रयी, तद्वत् । अतिशयो धारारूढः प्रकर्ष उद्रेको यस्याः सा । शतधा बहुधा तमांसि स्थावरजङ्गमानां जाड्यमन्धकारं च उन्मूलयन्ती पर्यायेण निराकुर्वती इयं द्विजानां ब्राह्मणक्षत्रियवैश्यानां त्रयी, त्रयी च हिताय विश्वविभूतये प्रथतां संघटताम् । तथा च श्रुतिस्मृती—

'समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ॥'

( ऋ. सं. १० मं. १२ अ. १९१ सू. )

"शस्त्रास्त्रभृत्त्वं क्षत्रस्य, वणिक्पशुकृषिर्विशः ।
आजीवनार्थं, धर्मस्तु दानमध्ययनं यजिः ॥

वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम् ।

वार्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥ " (मनु. १०।७९-८०).

॥ ८४-८५ ॥

ऊरू अवष्टभ्य महीप्रदेशान्
स्पृष्ट्वा मुखोक्तं भुजरक्षितं यत् ।
कर्माविशन्तो हरिदन्तरेषु
विक्रम्य नामार्थतुलां नयन्तु ॥ ८६ ॥

इदानीं ब्रह्मण ऊर्वोर्भवा ऊरव्याः भूमिं स्पृशन्तीति भूमिस्पृशः, विशन्तीति विश इत्येषां वैश्यनाम्नां संबन्धार्थं सूचयति—ऊरू इति । ऊरू अवष्टभ्येति आपणविपणिप्रतिष्ठार्थम । महीप्रदेशान् स्पृष्ट्वेति देशविदेशपर्यटनार्थम् । मुखोक्तं भुजरक्षितमिति ब्रह्मक्षत्राभ्यां सहानुभूतिप्रदर्शनार्थम् । कर्माविशन्त इति वाणिज्याभिनिवेशार्थम् । हरिदन्तरेष्विति प्रख्यात्यर्थम् ॥ ८६ ॥

नवं नवं वस्तु विधाय विज्ञाः ।
प्रवर्तनीया व्यवसाययोगाः ।
सा भूषणाच्छादनभोजनादि-
पदार्थवाणिज्यकथा तु रूढा ॥ ८७ ॥

विधास्तदुत्पाद्यपदार्थजाता-
न्यध्यासते मानुषदेषकालान् ।
इत्तीक्षया लाघवसौष्ठवाभ्या-
मुत्पादितं वस्तु नवत्वमेति ॥ ८८ ॥

व्यस्ताः समस्ता विधयस्त एव
प्रयुज्यमानाः कृतिभिः क्रियासु ।
आश्चर्यपूरायितसाध्यसिद्धिं
संपादयन्तो वितरन्ति लाभान् ॥ ८९ ॥

देशे विदेशे नगरेऽपशल्ये
ग्रामेऽग्रहारे जनमेलनादौ ।
विमृश्य वाणिज्यमुदञ्चयन्तो
धर्मार्थकामानवभासयन्तु ॥ ९० ॥

चतुर्भिर्वाणिज्यं प्रपञ्चयति—**नवं नवमिति** । भो विज्ञाः संपत्तिविज्ञानविशेषशालिनः । उत्तरार्धेन तु साधारणवाणिज्यविषये गजनिमीलनादिमुद्रया आक्षेपो दर्श्यते ॥

**विधा** इति पूर्वार्धेन निर्माणशैलीनिरूपणा । लाघवसौष्ठवाभ्यामितीत्थंभूतलक्षणे तृतीया । पणितव्यं वस्तु ॥

**व्यस्ताः समस्ता** इत्यनेन कार्यकायस्य निर्माणशैलीविशदीकरणमेव व्युत्पाद्यते ॥

**देशे विदेश इति** । यत्र यत्र जनावासस्तत्र तत्र देशकालपात्रपर्यवेक्षणया क्रय्यमिदं क्रेयमिदं विक्रेयमिदमिति वाणिज्याप्रसारैर्यशस्विनो भवन्तु भवन्तो वाज्या इति परमार्थः ॥ ८७–९० ॥

म्लानिं श्रयद् ब्रह्म न लालयन्ति
न गोक्षतं हन्त विवेचयन्ति ।
ये केऽपि तानप्यवतंसयन्तो
महानुभावाः सुकृतेन यूयम् ॥ ९१ ॥
अयोग्यभोगव्यसनादिदानीं
रिक्तीक्रियन्ते सदनानि मुग्धैः ।
एतान्निरासाय समृद्धिरक्षा-
शिक्षा प्रयासेन विकासनीया ॥ ९२ ॥

इदानीं द्वाभ्यां दूरदर्शित्वमाह—**म्लानिमिति** । ब्रह्म वेदः, आत्मस्वरूपं च । गोक्षतं स्वजन्मभूपमर्दः, अघ्न्यानिपीडनं च । गौर्माता अघ्न्येति गोपर्यायाः । श्रुतिश्च—' आप्यायध्वमघ्न्या इन्द्राय भागं प्रजाव-

तीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशंठ्ठ सो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः ' (शु. य. सं. १।१) इति। ये केऽपि ब्राह्मणा वा क्षत्त्रिया वा उभये वा कर्मविमुखा जातिमात्रोपजीविनः। शेषं स्पष्टम् ॥

**अयोग्येति**। अयोग्योऽनुचितो भोगोऽशनवसनपरिच्छदोपयोजनमेव व्यसनमधःपातकारणं तस्मात्। मुग्धाः पूर्वापरपरामर्शशून्याः। पूर्वपुरुषोपार्जितद्रव्यपरिपूर्णानां सदनानां कोशागाराणां रिक्तीकरणं तावत्सुकरम्। तथा च स्मर्यते **चण्डीपाठे**—

' असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम्।
संचितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति ॥ ' इति।

समृद्धिरक्षाशिक्षा धनिकैरेवोपदिष्टा हृदयंगमा भवतीति तत्त्वम् ॥ ९१–९२ ॥

**देशाद् विदेशादपि साधयित्वा**
**संपत्तिशास्त्राणि पुनश्च तानि।**
**योग्येषु संचार्य विचार्य सम्य-**
**क्कार्यालयेषु प्रचुरीक्रियन्ताम् ॥ ९३ ॥**

**पश्यन्तु पञ्चीकरणप्रयत्ना-**
**त्पञ्चैव भूतानि जगन्त्यवन्ति।**
**एषां प्रपञ्चक्रियया पुनर्य-**
**त्संपद्यते नात्र तदेव चित्रम् ॥ ९४ ॥**

**वर्णाश्रमाचारपुरस्कृतेन**
**श्रद्धावलम्बेन महोद्यमेन।**
**ऐन्द्रं पदं प्राप्तुमपि क्षमन्ते**
**समृद्धिसिद्धिः कियतीति मात्रा ॥ ९५ ॥**

**महीसमुद्राविह रत्नगर्भा-**
**रत्नाकराख्ये वहतो गुणेन।**

**एवं लुठद्रत्नचया वहन्तु**
**युष्मद्गृहा रत्नमयाभिधानम् ॥ ९६ ॥**

व्यवसायाँस्तत्फलानि चाह——**देशादिति** । संपत्तिशास्त्राणि अर्थ-घटकानि शासनानि । कार्यालया विविधवस्तुनिर्माणशालाः ॥

**पश्यन्त्विति** वैदिको दृष्टान्तः । अत्र 'सेयं देवतैक्षत हन्ताह-मिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति' ( छां. उ. ६ । ३ । २ ) इतीक्षित्वा सा सदाख्या परमात्मा देवता सृष्टानां तिसृणां देवतानां तेजोबन्नात्मिकानां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतं त्रि-रूपां त्रिरूपामकरोत् कृतवतीति त्रिवृत्करणश्रुतिः पञ्चीकरणमप्युपलक्षय-तीति सर्वे । पञ्चीकरणं तु आकाशादिपञ्चसु एकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान् पञ्चभागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्य द्वितीयार्धभागपरित्यागेन भागान्तरेषु योजनम् । पञ्चानां पञ्चात्मकत्वे समानेऽपि तेषु च 'वैशेष्यात्तुतद्वादस्तद्वादः' ( वे. द. २ । ४ । २२ ) इति न्यायेन आकाशादि व्यपदेशः । तदानीमाकाशे श-ब्दोऽभिव्यज्यते वायौ शब्दस्पर्शौ अग्नौ शब्दस्पर्शरूपाणि अप्सु शब्दस्प-र्शरूपरसाः पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च । एवं पञ्चीकृतानि भूतानि भौतिकानि जगन्ति च । पुनरेषां प्रपञ्चक्रियया वस्तुवैचित्र्यानन्त्यम् । तत्र व्योमयानधूमयानतारेरलयन्त्राणि चेति दिक् ॥

**वर्णाश्रमाचारे**त्यनेन आस्तिकानां भोगावधिर्दर्शितः । ऐन्द्रं पदं परमैश्वर्यपीठम् । इदि परमैश्वर्ये इति पाठात् । इन्द्रस्य दारा इन्द्राणीति । इन्द्रवरुणेति सूत्रणात् । इत्थं चेन्द्रशब्दार्थः पूर्वोत्तरमीमांसादृशा निरस्यः ॥

**महीसमुद्राविति** । रत्नगर्भारत्नाकरवद् युष्माकं गृहा रत्नमया इति योगं प्राप्नुवन्तु ॥ ९३–९६ ॥

**( लोलापि लक्ष्मीर्विकसद्गुणेन**
**आत्ता हि सारस्वतबन्धनेन ।**

इत्याकलय्य स्फुटकौशलानि
कुर्वन्तु विद्याभवनानि भद्राः ! ॥ ९७ ॥
यावन्न देशस्य जडत्वहानि-
स्तावत्कथं स प्रभवेत्क्रियासु ।
किं नैशखेदोपहतस्वभावा
मनांसि संकर्षति पङ्कजश्रीः ॥ ९८ ॥

इदानीं सरस्वत्या लक्ष्मीनियन्त्रणं तत्र कारणं च निरूपयति—**लीलापीति**। कनिष्ठा हि ज्येष्ठया नियम्यत इति तात्पर्यम्। **विद्याभवनानीति**। एतदुक्तं भवति-अष्टादश विद्यास्तावदुक्ताः तत्र अङ्गेषु ज्योतिषं ज्योतिर्गणितम्, उपाङ्गेषु तर्को भौतिकविज्ञानम्, योग आत्मिकबलम्, उपवेदेषु आयुर्वेदश्चेति क्रियाप्रधाना चतुष्टयी तु चतुरस्रदृष्टया विद्याभवनेषु अवश्यमेव प्रवर्तनीया ॥

**जडत्वहानिरिति**। न प्राक् सर्वे भारतीया धनिका एवासन्, नाधुना सर्वे दरिद्रा एव सन्ति। किं तु शिक्षावैधुर्यात् स्वस्वकर्तव्येषु पराङ्मुखाः संदिग्धधियो दुर्बलहृदयाश्च संवृत्ताः। शिक्षा हि भयाभ्यासाभ्यां चाल्यमानैव प्रक्रमते, नव्यसदृशवाक्प्रतानमात्रेण क्रम्यमाणापि क्रमते। लोकस्य क्रमेण स्वानुरूपभवनात् परलोकस्यादर्शनात् कस्माद् भयं भवेत्? भयाभावादप्रतिष्ठमाना मन्दायमाना वा शिक्षा कथमिवाभ्यासं विन्देत्। अनुभूयन्ते च सनातनमार्गीया मुहंमदीयाः समानशिक्षा अपि जातीयशिक्षया विशिष्यमाणा लाघवगौरवाभ्यामिति दिक् ॥ ९७–९८ ॥

यया भवेच्छाश्वतधर्मवृद्धि-
स्तथा समृद्धिः खलु सैव शिक्षा ।
वर्णस्वभावान्परिणामयन्ती
नान्या मता भारतवैभवाय ॥ ९९ ॥
सुवृत्ति देवालयधर्मशाला-
वापीतडागाद्यभिमानवर्जम् ।

**प्रवर्तयन्तः परमेश्वराङ्घ्रि-**
**समर्पितान्तःकरणा जयन्तु ॥ १०० ॥**

**इत्यूरुविंशतिका ।**

इदानीं शिक्षां निर्दिशन्नुपसंहरति-**ययेति** । शाश्वतधर्मो मनूपदिष्टो न तु स्वोत्प्रेक्षितः । 'धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते' इति भारतसावित्री । संप्रति सांप्रतिक्या शिक्षया वर्णस्वभावपरिणामनं सुप्रसिद्धमेव ॥

**सुवृत्तीति** । सुष्ठु अनामया वृत्तिः=अवस्थानं रक्षाप्रबन्धश्च यस्य तत् । अनित्थंभूतं देवालयादि सद्यो भ्रश्यति । अनामयावस्थानं तु वज्रलेप वज्रसंघातादिना विधीयते । पठ्यते हि **बृहत्संहितायां** वज्रलेपलक्षणाध्याये मिहिराचार्यैः—

'प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु ।
संतप्तो दातव्यो वर्षसहस्रायुतस्थायी ॥' (५६ अ० ४ श्लो०) इति ।

यथा यज्ञादिकमिष्टमिति—तथा देवालयविद्याभवनधर्मशालावापीकूपादिकं पूर्तमित्यभिलप्यते । **प्रवर्तयन्त** इत्युभयथा—नवीनस्य करणं प्राचीनस्य जीर्णस्य संस्करणम् । **अभिमानवर्जामिति** लिङ्गान्नवीनस्य निर्मापणापेक्षया जीर्णस्योद्धारे महत्सुकृतं मन्यन्ते दीर्घदर्शिनः । परमेश्वरस्य जगतो मातापित्रोः अङ्घ्र्योः समर्पितानि योजितानि अन्तःकरणानि यैस्ते—देवस्याकारभेदेऽप्याकार्यभेदनिश्चयेन समाहितबुद्धयः सन्तो जयन्तु ॥९९–१००॥

अथ वैश्यशेषम् ।

ब्रह्मक्षत्रवद् विशोऽपि वेदाध्ययनं वैधम् । तत्र ब्रह्मसु अध्ययनमन्तरेणाध्यापनयाजनयोरसंभवाद् वृत्त्यर्थं तदनुवर्तते, क्षत्रविशोस्तु वृत्त्यन्तरत्वात् तदिदानीं निवर्तते । अहो कष्टम् । अत एते याज्या अपि क्षत्रविशोऽयाज्या इव प्रवर्तमानाः पराक्रमन्ते । बहुत्र कुले वृद्धा अप्युपनयनसंस्कारविच्छेदं न जानते । आः कष्टम् । उपपन्ना अप्युपनयनश्रीषु दृक्पातं न विदधते, किमुतानुपपन्नाः । वस्तुतस्तु—'न स्मर्यते क्वापि स जाति-

योगी संस्कारशाखी वहुवित्तसाध्यः ।' इति । वहुत्र पुनरुपनयनं विदधाना अप्यनुपनीतकुलैः संसृज्यमानाः कृताकृतभूमिकां प्रतिपद्यन्ते । एवं परिणयने वहुत्र सगोत्रापरिग्रहः प्रसज्जते । सहि धर्मशास्त्रतः सदाचारतश्च प्रतिषिद्ध इति प्रागपि निरूपितम् । कतिपयकालादेव गोत्रप्रवरानुपेक्ष्य स्वस्ववर्गे संकेतितैरवटङ्कैर्यौनः संवन्धः प्रवर्तते । तेनेदं प्रसक्तं प्रतिषिद्धाचरणं पुनर्गोत्रप्रवरादिसंशोधनतो यथाशक्ति हेयं हापनीयं च विचक्षणैः । श्रौते स्मार्ते च कर्मकाले तावुपयुक्तौ गोत्रप्रवरौ सर्वथा नानुपेक्ष्यौ । अवटङ्कास्तु लोकव्यवहारमात्रप्रयोजनाः । श्रौते हि सामिधेन्यनुवचनानन्तरं होतृकर्तृकं प्रवरप्रवरणं विहितम्, तत्र प्रवरो नाम **आश्वलायनादिभिः** प्रवराध्याये यद्गोत्रस्य यावन्तः प्रकर्षेण वरा ऋषय उक्तास्ते । यथा—शण्डिलानां शाण्डिलासितदेवलेति । तेषामुच्चारणं प्रवरणमित्युच्यते । तत्र क्षत्रियवैश्ययोर्यजमानयोः पुरोहितस्य प्रवरा वक्तव्याः । प्रवरसंशये मानव इत्येव प्रवरो वक्तव्य इति । स्मार्ते तु—'असमानार्षगोत्रजाम्' इत्यनेन गोत्रप्रवरोपयोगः प्रसिद्ध एव । ऋषेरिदमार्षं नाम प्रवर इत्यर्थः । गोत्रं वंशपरम्पराप्रसिद्धम् । आर्षं च गोत्रं च आर्षगोत्रे, समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रः, तस्माज्जाता समानार्षगोत्रजा, न समानार्षगोत्रजा असमानार्षगोत्रजा, ताम् । गोत्रप्रवरौ पृथक् पृथक् पर्युदासे निमित्तम्ः तेन असमानगोत्रजाम्, असमानार्षजामित्यर्थ इति **विज्ञानेश्वर**भट्टारकाः ॥

वैश्यानामापद्धर्मस्तु—

'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥' ( मनु० ८ । ३४८ ) इति ।

'क्षत्रियो वाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥' ( मनु० ११ । ३४ ) इति च ।

इति वैश्याशिक्षायां वेददृष्टिः ।

## अथ स्त्री-शिक्षा ।

ताः स्वस्ववर्णाहितसत्त्वशुद्धा
गृहाश्रमाचारविचारसिद्धाः ।
तत्तत्क्रियाकाण्डनियुक्तमन्त्र-
विधानबोधाकलिताः स्त्रियः स्युः ॥ १०१ ॥

अथ दशभिः स्त्रीणां शिक्षा ।

तत्र प्रथमेन तासां स्वरूपमाह—**ता इति**। ता मातापितृकुलकौमुद्यः, स्वस्ववर्णेन स्वेन स्वेन वर्णधर्मेण आहितं निक्षिप्तं यत्सत्त्वमतिशयविशेषः तेन शुद्धा दीप्ताः । गृहा एव यथानियममाश्रयणीयत्वाद् आश्रमः, तस्य आचारविचारौ परिशीलनविवेकौ, तत्र सिद्धा निरूढप्रज्ञाः । तत्तत्क्रिया-काण्डे तत्र श्रौतस्मार्तकर्मप्रस्तावे, नियुक्ताः कल्पकारैरुद्दिष्टाः ये मन्त्रा मन्त्रपदसंकेतिताः, तेषां विधानं विधिः, तस्य यो बोधोऽर्थपरिचयः, तेन आकलिताः विशेषिताः स्त्रियः स्युः । आसां स्वाध्यायसंकोचस्तु प्रागेव चिन्तितः ॥ १०१ ॥

अलब्धदोषावसराः सुवर्ण-
विकस्वराः स्फीतरसप्रसाराः ।
पदे पदे सौष्ठवमर्पयन्त्यः
सरस्वतीसाम्यमुशन्तु सत्यः ॥ १०२ ॥

प्रभावभाजोऽच्युतधामनिष्ठाः
प्रद्युम्नसंरक्षणजागरूकाः ।
मायोऽनिरुद्धोदयमुद्वहन्त्यो
बहूकृता लक्ष्म्य इव स्फुरन्तु ॥ १०३ ॥

प्रशस्तविज्ञानभुवो भवन्त्यः
सरस्वतीसत्कृतयोऽमलेषु ।

लक्ष्मीविलासाः पतिषु प्रकामं
कालीकरालाः कुटिलेषु सन्तु ॥ १०४ ॥

त्रिभिः स्वभावाख्यानम्—अलब्धेति । दोषाः—वाक्यगताः, प्रकृतिसंश्लिष्टाश्च । सुवर्णाः, सुवर्णानि च । रसाः—वाक्यार्थगाः, प्रकृतिपरीताश्च । पदं—सुतिङन्तं, पादन्यासश्च ॥

प्रभावभाज इति । प्रभावः—तेजोविशेषः; चित्तप्राशस्त्यं, वस्तु वा । अच्युतधाम—विष्णुमहिमा, अपरिच्युतगार्हस्थ्यमर्यादा च । प्रद्युम्नः, प्रद्युम्नं च । अनिरुद्धस्य उदयः, अनिरुद्धश्च उदयः ॥

प्रशस्तेति । प्रशस्तं स्वस्ववर्णसमुचितं यद् विज्ञानं कर्मक्षेत्रपाटवं तस्य भुवो भूमयः । कुटिलेषु अन्यथापरयत्सु । मलिनेष्विति तात्पर्यम् । काल्याः करालत्वं चण्डीपाठादौ व्यक्तम् ॥ १०३–१०४ ॥

अङ्गान्युपाङ्गानि कलाकलापा-
न्कथावतंसानितिहाससारान् ।
विज्ञाय वामाङ्गजुषः पतीनां
साहायके जाग्रत सावधानाः ॥ १०५ ॥

एकेन विद्योपार्जनमाह—अङ्गानीति । तत्र शिक्षा; यावत्या यथा-यद् वर्णा उच्चार्यन्ते तावत्येव, न कण्ठपाठार्था । छन्दः; यावता वृत्तानां पठनशैली ज्ञायते तावदेव । एवं गानच्छन्दांस्यपि । व्याकरणम्; यावता लौकिकानां वैदिकानां च शब्दानां प्रकृतिप्रत्ययपरिचयो भाषणं लेखनं च संपद्यते तावदेव, न कण्ठशोषणार्थम् । निरुक्तम्, यावता वेदानां, पुराणेतिहासानां च भाषाभङ्गिरवसीयते तावदेव । कल्पः, यावता श्रौत-स्मार्तकर्मकथानां परिचितिर्जायते तावदेव । ज्यौतिषम्; यावता तिथि-वारनक्षत्रयोगकरणानां दैनंदिनापव्ययगणनानां चावधारणं संपद्यते ताव-देवेति । उपाङ्गानि; तत्र पुराणम्; यावता सर्गप्रतिसर्गस्वर्गनरकादि बुध्यते तावदेव । न्यायः; पदार्थपरीक्षणमिति ब्रूमः । मीमांसा; यावत्या

कर्मकाण्डे पत्युः साचिव्यं निर्वहति तावत्येव । धर्मशास्त्रम्, यावता स्त्रीणां शिक्षा परिसमाप्यते तावत् । याज्ञवल्क्येन योगिना धर्मस्थानेषु पठितानि पुराणन्यायमीमांसाधर्मशास्त्राणीमान्युपाङ्गान्युच्यन्ते । तथा च पठन्ति—

'अथ चत्वार्युपाङ्गानि वेदानां संप्रचक्षते ।
धर्मशास्त्रं पुराणं च मीमांसा न्यायविस्तरः ॥' इति ।

कलाः चतुःषष्टिरिति प्रायोवादः । तत्र नृत्यगीतवादित्रालेख्यसूचीकर्मपाकप्रभृतयः कुलस्त्रीजनोपयुक्ता एव ता द्रष्टव्याः, नतु कौटिल्यपराख्यवात्स्यायनोक्ताः । कथावतंसाः, तत्र पार्वतीपरमेश्वरौ, अरुन्धतीवसिष्ठौ, लोपामुद्रागस्त्यौ, दमयन्तीनलौ, सीतारामौ चोदाहरणम् । वृन्दाजलन्धरौ ( पद्मपु. पातालखं. ३-१८ अध्या. ) तुलसीशङ्खचूडौ ( देवीभाग. ६ स्कं. १७-२३ ) च प्रत्युदाहरणम् । इतिहाससाराः सत्यवत्सावित्रीचरित्रप्रमुखाः ( म. भा. वन. अध्या. २९३-२९९ ) एतदध्ययनपरिपाट्या मातापितृकुले पतिगृहेषु च यथावद् विज्ञाय प्रशस्तविज्ञानभुवो भवत्यो वामाङ्गजुषः पतीनां साहायके सावधानाः सत्यो जाग्रत । अतएव पुरा भवतीनाम्—"कठी; बह्वृची; काशकृत्स्ना; उपाध्यायी, उपाध्याया, आचार्यानी, आचार्या" इत्येवमादीनि नामानि जज्ञिरे । इह 'कठी-बह्वृच्योः' 'जातेरस्त्रीविषयात्'—, ( ४ । १ । ६३ ) इति सूत्रगतेन 'गोत्रं च चरणैः सह' इति भाष्यस्थश्लोकवार्तिकेन जातिकार्यलाभः । "कठेन प्रोक्तम्, वैशम्पायनान्तेवासित्वात् णिनिः, तस्य 'कठचरकात्—' ( ४ । ३ । १०७ ) इति लुक्, ततः 'तदधीते—' ( ४ । २ । ५९ ) इत्यण्, तस्य 'प्रोक्ताल्लुक्' ( ४ । २ । ६४ ) इति लुक् । बह्वयः ऋचोऽस्या इति बहुव्रीहिः, बह्वृचश्चरणाख्यायाम् इत्यकारः समासान्तः" इति पदमञ्जरीकाराः । "काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, काशकृत्स्नीमधीते काशकृत्स्ना" इत्यनुपसर्जनसूत्रे ( ४ । १ । १४ ) भाष्य-

कारा: । " उपाध्यायमातुलाभ्यां वा । उपाध्यायमातुलाभ्यां वेति वक्तव्यम् । आचार्यादणत्वं च । आचार्यादणत्वं चेति वक्तव्यम् " इतीन्द्रवरुणसूत्रे ( ४ । १ । ४६ ) भाष्यकारा: । ' या तु स्वयमेवाध्यापिका तत्र वाङीष् वाच्य: ' इति **भट्टोजिदीक्षिता:** । ' उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वत: ' **इत्याग्नेयकोशकारा:** । एवं सत्यपि स्त्रीणां निरङ्कुशं वेदाध्ययनं समर्थयन्तो लुब्धा उपेक्ष्या एव मन्वादिस्मृतिविसंवादादितिदिक् । उक्तं च मयान्यत्रापि—

' व्याख्याबलेनाभिनिवेशभाजा
प्रमेयभेदो बहुधाऽभ्युदेति ।
तत्रास्ति मात्सर्यकलङ्कमुक्ता
मुक्तावदाता धिषणा प्रमाणम् ॥ ' इति ।

यद्यपि पुरा कव्यादिसंज्ञालाभेन, तत:—

' शीला विज्जा मारुला मोरिकाद्या:
काव्यं कर्तुं सन्ति विज्ञा: स्त्रियोऽपि ।
विद्यां वेत्तुं वादिनो निर्विजेतुं
विश्वं वक्तुं य: प्रवीण: स वन्द्य: ॥ '

इत्येमादिवादेन, तथा—

" नीलोत्पलदलश्यामां विज्जिकां मामजानता ।
वृथैव दण्डिना प्रोक्तं ' सर्वशुक्ला सरस्वती ॥ "

इत्याद्युपश्लोकनेन च तत्र भवतामिवात्र भवतीनामपि माहात्म्यं न च्छन्नं तथापि मर्यादयैव वर्तितव्यम् । तत इदमपि मन्तव्यमेव—

' अङ्गैरुपाङ्गैरनुवर्तमाना
द्रव्यं गुणै रक्षत कर्मभूमौ ।
एकस्य वेदस्य तनूभवन्त्यो
न चान्यथा गच्छत काम्यमामा: ॥

तथा च **मनुः**—

" बालया वा, युवत्या वा, वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥
बाल्ये पितुर्वशे तिष्ठेत्, पाणिग्राहस्य यौवने ।
पुत्राणां भर्तरि प्रेते, न भजेत् स्त्री स्वतन्त्रताम् ॥
पित्रा भर्त्रा सुतैर्वापि नेच्छेद् विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥
सदा प्रहृष्टया भाव्यं, गृहकार्येषु दक्षया ।
सुसंस्कृतोपस्करया, व्यये चामुक्तहस्तया ॥
यस्मै दद्यात् पिता त्वेनां भ्राता चानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥ " (५।१४७-१५१)

अत्र प्रत्युदाहृतिः सांप्रतिकी दाक्षिणात्या रमादेवी । यया मिथिलेश्वराणां लक्ष्मीश्वरचम्पूरकारीति । एवमन्याप्युदाहार्या ॥ १०५ ॥

**गृहस्थितौ स्वागतसाधनायां**
**संतानरक्षाभ्युदयक्रियायाम् ।**
**तथा प्रवृत्तिर्भवतीभिरूह्या**
**यथानुरूपं गृहिणीपदं स्यात् ॥ १०६ ॥**

पुनरप्याह—**गृहस्थिताविति** । संतानस्य रक्षाक्रिया, आयुर्वेदादिदिशा परिपोषणम् । अभ्युदयक्रिया, तत्तत्कालिकशिक्षाप्रदानम् । बुद्धिमत्या स्त्रिया हि परिपाल्यमानमपत्यं निष्प्रत्यूहमेधते । गृहिणीपदमिति ।

तथा च **कालिदासः**—

" शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने, भाग्येष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो, वामाः कुलस्याधयः ॥ "

इह मनुरुपदिशति—

"प्रजनार्थं महाभागाः, पूजार्हा, गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥
उत्पादनमपत्यस्य, जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
अपत्यं, धर्मकार्याणि, शुश्रूषा, रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥" (९ । २६-२८)

॥ १०६ ॥

**कालानुकूलं पतिबन्धुपुत्र-**
**भृत्यैर्भवत्यो भवतीभिरेते ।**
**परस्परावेक्षणरक्षणादि-**
**सौभाग्यसंकेतभुवो भवन्तु ॥ १०७ ॥**
**स्वातन्त्र्यसिद्धौ बहवो हि दोषाः**
**प्रादुःष्युरित्युज्ज्वलवंशजाताः ।**
**भजन्तु पारम्परिकानुरोधं**
**श्रयन्ति कान्तामणयो ह्यगुसाः ॥ १०८॥**

द्वाभ्यां गोपनमुट्टङ्कयति—कालानुकूलमिति । अत्र श्रुतयः स्मृतयश्च—

'आशासाना सौमनसं प्रजां सौभाग्यं रयिम् ।
पत्युरनुव्रता भूत्वा संनह्य स्वामृताय कम् ॥
यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा ।
एवा त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य ॥
सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु ।
ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः ॥'

(अथर्वसं. १४ कां. १ अनु. ४२-४४ मं.)

" सम्राज्ञी श्वशुरे भव, सम्राज्ञी श्वश्र्वां भव।
ननान्दरि सम्राज्ञी भव, सम्राज्ञी अधि देवृषु ॥" (ऋ. सं. ८ अ. ३ अ. २८ व.)

" पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥
यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते, सर्वास्तत्राफलाः क्रियाः॥
शोचन्ति जामयो यत्र, विनश्यत्याशु तत्कुलम्।
न शोचन्ति तु यत्रैता, वर्धते तद्धि सर्वदा॥" (मनु. ३। ५५-५७)
' भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः॥' (याज्ञ. १। ८२)
" अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे॥
पिता रक्षति कौमारे, भर्ता रक्षति यौवने।
रक्षन्ति स्थविरे पुत्रा, न स्त्री स्वातन्त्र्यमर्हति॥
कालेऽदाता पिता वाच्यो, वाच्यश्चानुपयन् पतिः।
मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता॥
सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम्।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि॥
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च।
स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति॥
पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः॥
यादृशं भजते हि स्त्री सुतं सूते तथाविधम्।

तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत् प्रयत्नतः ॥ " (मनु. ९ । २-६)

" अरक्षिता गृहे रुद्धा पुरुषैराप्तकारिभिः ।

आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥

पानं, दुर्जनसंसर्गः, पत्या च विरहो, ऽटनम् ।

स्वप्नो,ऽन्यगेहवासश्च, नारीसंदूषणानि षट् ॥ " (मनु. ९ । १२-१३)

॥ १०७-१०८ ॥

**धर्मोत्तराण्युत्तमलाभभाञ्जि**

**कृत्यानि पत्याश्रयकाण्यवन्तु ।**

**वामोऽथ वा स्याद्बलवान् स दक्षो**

**भागो न चैकः क्षमते क्रियासु ॥ १०९ ॥**

**धर्मे प्रवृत्तिः सततं विधेया**

**तद्वैपरीत्ये पतयोऽपि दण्ड्याः ।**

**सांध्यो विधिर्दैवतपूजनादि-**

**क्रिया यथाशक्ति न लोपनीयाः ॥ ११० ॥**

**इति त्रिवर्गपुष्टिः ।**

इदानीं द्वाभ्यां साचिव्यं साधयन्नुपसंहरति—**धर्मोत्तराणीति** । ऐकरूप्यं हि दाम्पत्यं, यत्र द्वैधे सर्वं विधुरं स्यात् । ऐकरूप्यं च प्राक्-सृष्टौ रूपतः, पश्चात्तु चित्तत इति । ब्रह्मा हि —

" द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।

अर्द्धेन नारी, तस्यां स विराजमसृजत्प्रभुः ॥ " (मनु. १ । ३२)

इत्येवं स्मर्यते । वृषाकपायीजानी वृषाकपी तु लीलाविग्रहतो द्विधा भवन्तावप्यैकरूप्यदर्शनार्थं तावदर्धनारीश्वरतां हरिहरतां च प्रतिपेदाते । अहो एकतायाः परा काष्ठा ॥

**धर्मे प्रवृत्तिरिति** । तथा च **मनुः**—

' विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।

उपचर्यः स्त्रियां साध्व्या सततं देववत् पतिः ॥
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥' (५।१५४-१५५)

**पत्नयोऽपि दण्ड्या इति।** यथा क्षात्रधर्मेऽलसं नलसंनिभं **युधिष्ठिरं** प्रति क्षत्रियाया **द्रौपद्या** वाक्यम्—

'अथ क्षमामेव निरस्तविक्रम-
श्चिराय पर्येपि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं
जटाधरः सञ्जुहुधीह पावकम् ॥'

इत्यादि । इदमेवं परिवर्तते ब्राह्मणविषये—

'अहो कृपीरेव निरस्तपुस्तक-
श्चिरेण पर्येपि धनस्य साधनम् ।
अपास्य भूदेव-महत्त्वसंपदं
हलीभवन् हन्त भुवं खनानिशम् ॥'

इत्यादि । **सांध्यो विधिरिति ।** सायं प्रातश्च वेदपुराणान्यतरवर्त्मना क्रियमाणा परमेश्वरोपास्तिः । तत्र पत्यौ कृताधाने तु 'पत्युर्नो यज्ञसंयोगे' (पा. ४।१।३३) इत्यादिना बोधितेन पतिसाचिव्येन पत्नीकर्म तत्तच्छाखीयाभ्य आधानादिपद्धतिभ्यो व्यक्तम् । तथाचाहुरिष्टिविदः— "यजमानस्य पत्नी यजमानवद् यज्ञफलभोक्त्री गार्हपत्यस्य पश्चिमदक्षिणे देशे पूर्वमुदङ्मुखी ऊर्ध्वजानुरुपविशति; ततः पयस्त्वाचमनादि गार्हपत्ये समिदाधानान्तं कर्म करोति, ततस्तृणनिरसनं कृत्वा तत्रैवोर्ध्वजानुः प्राङ्मुखी उपविशति, पत्नीसंयाजप्रचारानन्तरम् अवभृथस्थानीये अग्निहोत्रहवणीजलनिनयने पत्न्यञ्जलौ योक्त्रमाधाय होत्रा कृते, स्वयं पूर्ववत् समिदाधानं पुनः परिषेकान्तं कृत्वा, पुनर्यथा वेद्युत्करयोर्मध्यमार्गेण प्रविष्टा तथा तेनैव मार्गेण विहारान्निर्गच्छति; सा पत्नी भवति" इति ॥

यत्तु कतिपये—'पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥'

इति वचनेन कुमाराणामिव कुमारीणामप्युपनयनसंस्कारं निश्चित्य पुंस इव स्त्रीरपि सांध्याविधिं शासति तदविचारितरमणीयम्। तथाहि-'हृद्यपेक्षया तु मनुष्याधिकारा (त्त्वा) त्' (वे. द. १। ३। २५) इति प्रमिताधिकरणसूत्रेण मनुष्यमात्रस्याधिकारेऽवगते, "शुक्-अस्य, तदनादरश्रवणात् तदाऽऽद्रवणात्, सूच्यते हि। क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्। संस्कारपरामर्शात्, तदभावाभिलापाच्च। तदभावनिर्धारणे च प्रवृत्तेः। श्रवणाध्ययनार्थे प्रतिषेधात्, स्मृतेश्च।" (वे. द. १। ३।३४-३८) इति सूत्रैश्चतुर्थवर्णस्य शूद्रस्य वैदिकेषु कर्मस्वनधिकारे च सिद्धान्तिते ब्राह्मणक्षत्रियवैश्यवर्णानामेवाधिकार इति निर्व्यूढम्। अत्र चतुर्णां वर्णत्वेनाभिधाने ब्राह्मणादित्रयाणामुपनयनसंस्कारविधानेऽग्न्याधाने च श्रुतयः—

"दैव्यो वै वर्णो ब्राह्मणः। असुर्यः शूद्रः।"

तैत्तिरीयब्रा. १ कां. २ प्रपाठ. ६ अनु.)

"ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्षत्रियस्याहुर्योनिम्। सामवेदो ब्राह्मणानां प्रसूतिः।" (तै. ब्रा. ३ कां. १२ प्रपा. ६ अनु.)

'वसन्ते ब्राह्मणमुपनयीत। ग्रीष्मे राजन्यम्। शरदि वैश्यम्।"

"वसन्ते ब्राह्मणोऽग्निमादधीत। ग्रीष्मे राजन्यः। शरदि वैश्यः।"

(तै. ब्रा. १ कां. १ प्रपा. ६-७ अ.)

एवं कातीये श्रौतसूत्रेऽपि—'अथातोऽधिकारः ॥ १ ॥' इति प्रतिज्ञाय 'फलयुक्तानि कर्माणि ॥ २ ॥' इति फलवत्तां प्रदर्श्य 'सर्वेषामविशेषात्। मनुष्याणां वाऽऽरम्भसामर्थ्यात् ॥ ३-४ ॥' इत्युपक्षिप्य 'अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम्। ब्राह्मणराजन्यवैश्यानाᳪ श्रुतेः ॥५-६॥' इति त्रैवर्णिकानामधिकारो निर्णीतः। तदनु—'स्त्री चाविशेषात्।

दर्शनाच्च ॥ ७-८ ॥' इति सूत्राभ्यां स्त्रिया अप्यधिकारो निरूपितः स तावद् यथादर्शनं प्राग् व्यवस्थापित एव। शेषं तु 'यदग्निहोत्रं रथकारजातेः-' (शू. शि. ११३ श्लो.) इत्यत्र वक्ष्यमाणम्।

किं च। ब्राह्मणस्येव ब्राह्मण्याः, क्षत्रियस्येव क्षत्रियायाः, वैश्यस्येव वैश्याया यदि निरङ्कुशोऽधिकारोऽभविष्यत्तर्हि तदुपनयनविधिप्रवृत्ती अप्यभविष्यताम्, तथा "जातिं तु बादरायणोऽविशेषात् तस्मात्स्त्र्यपि प्रतीयेत, जात्यर्थस्याविशिष्टत्वात्" (मी. द. ६।१।८) इति सिद्धान्तसिद्धस्य यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणस्योत्तरमेव सहाधिकाराधिकरणं भगवाञ्जैमिनिर्नायोजयिष्यत्, स्त्रियः स्वातन्त्र्यं चाघटयिष्यत्। यदि च पुनरवहेलितलक्ष्यजातमीमांसमेव—

"'एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेमी पक्षाः शास्त्रे निरूपिताः ॥' (वै. भू. २१ का.)

इति केनापि पक्षेणाधिकारोऽभविष्यत्तदातु- 'अग्नीषोमीयं पशुमालभते' (तैत्ति. सं. ६ कां. १ प्रपा. ११ अनु.) इति विधिवाक्यमवष्टभ्य प्रवर्तमानम्— 'तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्' (मी. द. ४।१।११-१६) इति पश्वेकत्वाधिकरणम्; 'तथा च लिङ्गम्' (मी. द. ४।१।१७) इति पशुलिङ्गविवक्षाधिकरणम्, 'पशुचोदनायामनियमोऽविशेषात्' (मी. द. ६।८।३२-४२) इति। छागस्यैवाग्नीषोमीयपशुताधिकरणं च स महामुनिर्नो अरचयिष्यत्। एवं निग्रहे 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिश्रौतस्मार्तविधिवाक्येभ्यः स्त्री कथमुपनेया भवेद्, उपनयनाभावात् कथं निरर्गलसंरम्भो वेदारम्भो भवेद् भोः! इति कणेहत्य विभावनीयम्। अतएव कृष्णयजुर्वेदीय तैत्तिरीयसंहिताया उपोद्घाते **सायनाचार्याः**—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥

इत्युद्धृत्य—'तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य संबन्धः' इत्युपसमहार्षुः ॥

अपि च । यत्तु कुमारीणां मौञ्जिबन्धनादि तत्खलु पुराकल्पविषयम्। पुराकल्पोऽर्थवादभेदः 'ऐतिह्यसमाचरितो विधिः' इति **न्यायसूत्र-भाष्यकाराः** । ऐतिह्यं तु "इति होचुः, इत्यनिर्दिष्टप्रवक्तृकं प्रवाद-पारम्पर्यम्" इति च । इत्थं च– 'श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः' इत्येवमादि व्याख्यातप्रायम्। पुराकल्प इति व्यस्तं नेष्यते । अम-न्त्रकमुपनयनं तु–'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः' इति **मनु**वचनव्युत्पादनावसरे प्राङ् निरूपितमेव । अतो हि समाचारात्– "प्रावृतां यज्ञोपवीतिनीमभ्युदानयन्, जपेत्" (गोभिलगृह्यसू. २ प्रपाठ. १कण्डि.१९सू.) इति यज्ञोपवीतादि न विरुध्यते। देवतानां तत्प्रकृतीनामपि–

'अक्षमालापवृत्तिज्ञा कुशासनपरिग्रहा ।
ब्राह्मीव दौर्जनी संसद् वन्दनीया समेखला ॥'

इत्येवमादिका वैदिकी वर्णना दृश्यते । तथा—

'संध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी ।
नदीं चेमां शुभजलां संध्यार्थं वरवर्णिनी ॥'

(वाल्मी. रामाय. सुं. १४ स. ४९ श्लो.)

इत्यादिकापि । संध्या हि वर्णाश्रमिभिर्यथाकालमनुष्ठीयमानां परमेश्वरो-पासनामभिधत्ते तात्स्थ्यलक्षणया । अनुष्ठानं च श्रौतेन वा स्मार्तेन वा वर्त्मना यथाधिकारं भवतीति निपुणं निरीक्षणीयम् ।

अथच । शातपथीषु श्रुतिषु सुप्रसिद्धस्य **याज्ञवल्क्य**पदार्थस्य भार्यात्वेन प्रतीतयो**र्मैत्रेयी**कात्यायनीपदार्थयोः का गतिरिति पर्यनु-योगे, **वसिष्ठस्य-अरुन्धत्या** इव प्रतिपत्तिर्मीमांसाप्रणयिनीति न मन्त्र-ब्राह्मणातिक्रमः । तथाहि—कृष्णयजुः संहितावत् शुक्लयजुः संहितापि—

"विध्यर्थवादयाच्ञाऽऽशीः स्तुतिप्रैषप्रवह्लिका ।
प्रश्नो, व्याकरणं, तर्कः, पूर्ववृत्तानुकीर्तनम् ॥
अवधारणं, चोपनिषद्, वाक्यार्थाः स्युस्त्रयोदश ॥"

इति वाक्यार्थान्मन्त्रगणनिविष्टान्नातिक्रामति। त एते माध्यंदिनीययजुःसंहिताया भाष्यारम्भे **उव्वटाचार्यै**र्दर्शिताः। तत्र (१) विधिः—'अश्वस्तूपरो गो मृगः—' इत्यादिः (य. सं. २४।१)। (२) अर्थवादः—'देवा यज्ञमतन्वत—' इत्यादिः (य. सं. १६।१२)। (३) याच्ञा—'तनूपा अग्नेऽसि तन्वं मे पाहि—' इत्यादिः (य. सं. ३।१७)। (४) आशीः—'आवो देवास ईमहे—' इत्यादिः (य. सं. ४।५)। (५) स्तुतिः—'अग्निर्मूर्धादिवः ककुत्—' इत्यादिः (य. सं. ३।१२)। (६) प्रैषः—'होता यक्षत् समिधाग्निं—' इत्यादिः (य. सं. २१।२६)। (७) प्रवल्हिका—'इन्द्राग्नी आपादियं—' इत्यादिः (य. सं. ३३।६३)। (८) प्रश्नः—'कः स्विदेकाकी चरति—' इत्यादिः (य. सं. २३।६३)। (९) व्याकरणम्—'सूर्य एकाकी चरति—' इत्यादिः (य. सं. २३।१०)। (१०) तर्कः—'मा गृधः कस्यस्विद् धनम्।' इत्यादिः (य. सं. ४०।१)। (११) पूर्ववृत्तानुकीर्तनम्—'ओषधयः समवदन्त—' इत्यादिः (य. सं. १२।६६)। (१२) अवधारणम्—'तमेव विदित्वाति मृत्युमेति—' इत्यादिः (य. सं. ३१।१८)। (१३) उपनिषत्—'ईशावास्यं—' इत्यादिः (य. सं. ४०।१–१७)।

अथैवंजातीयका वाक्यार्था ब्राह्मणशरीरसंनिविष्टा अपि दृश्यन्ते। तत्र कृष्णयजुर्वेदीया **तैत्तिरीयसंहिता** ब्राह्मणसंश्लिष्टेति प्रत्यक्षमेव श्रोत्रियाणाम्। नैवंप्रकारा तैत्तिरीयैव संहिता; किं तु **मैत्रायणी काठकी** च तथाभूता परीक्ष्यताम्। अतएव सर्वे कल्पसूत्रकारा मन्त्रब्राह्मणयोरुभयोर्वेदत्वमामनन्ति तत्रा**पस्तम्बकात्यायनयो**रेतत्समानं स्मरणम्—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति (यज्ञपरिभाषा ३४ सू.) (शुक्लयजुः प्रातिशाख्य, प्रतिज्ञासू. १ कण्डि. २ सू.) तथाच श्रूयते—"स होवाचर्ग्वेदं भगवोऽध्येमि, यजुर्वेदꣳ, सामवेद,माथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदमिति" (छां. उ. ७।१।२) इति।

" तेनेयं त्रयीविद्या वर्तते, ओमित्याश्रावयति—" (छां. उ. १।१।६) इति च। ' विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ' (वा. सं. ४०।११) इति। ' तद् वेदगुह्योपनिषत्सु गूढं तद् ब्रह्मा वेदते ब्रह्मयोनिम् ' (श्वेताश्वतरसंहिता. ५।६) इति च।

इत्थं च याज्ञिकसमयेन यथा ' तच्चोदकेषु मन्त्राख्या ' (मी. द. २।१।३०) इत्यनेन मन्त्रो मन्त्रस्यैव बोधकः, ' शेषे ब्राह्मणशब्दः ' (मी. द. २।१।३१) इत्यनेन च ब्राह्मणं ब्राह्मणस्यैव बोधकं, न तथा विद्यावेदादिशब्दाः प्राक्-पश्चाद् वा काले नियमान्मन्त्रस्यैवाहोस्विद् ब्राह्मणस्यैव बोधका इति वक्तुं शक्यम्; किं तु, शेषशेषिरूपयोरुभयोरपि। एकोहि स्वाध्यायो यज्ञार्थमेवं विभज्यत इति तत्त्वम्। मन्त्रब्राह्मणयोः सहप्रादुर्भावोऽपि श्रूयते—

' ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः॥ '

(अथर्वसं. ११ कां. २५ प्रपा. ४ अनु.) इति।

इहोच्छिष्टपदेन यज्ञ इव पुराणपदेन ब्राह्मणमेव ग्रहीतुं न्याय्यम्। तत्र यजुःसाहित्यमपि भावानुरूपम्। एवं पुरुषसूक्तेऽपि—' छन्दांसि जज्ञिरे तस्मात् ' (ऋ. सं. १० मं. ८ अ, ९० सू.) इति द्वितीयवाक्ये छन्दःपदेन ब्राह्मणग्रहणे परं सौष्ठवम्। तत्र ' श्रोत्रियँश्छन्दोऽधीते ' (५।२।८४) इति पाणिनिरप्यनुग्राही। मन्त्रब्राह्मणयोरपौरुषेयतापि सहैव समर्थ्यते। तत्र ' अनित्यदर्शनाच्च ' (मी. द. १।१।२८) इति पूर्वपक्षे, ' परं तु श्रुतिसामान्यम् ' (मी. द. १।१।३१) इत्युत्तरम्। यथाक्रमं च शाबरं भाष्यम्—

" जननमरणवन्तश्च वेदार्थाः श्रूयन्ते—' बबरः प्रावाहणिरकामयत ' (तै. सं. ७ कां. १ प्रपा. १० अनु.) ' कुसुरुबिन्द औद्दालकिरकामयत ' (तैत्ति. सं. ७ कां. २ प्रपा. २ अनु.) इत्येवमादयः। उद्दालकस्यापत्यं गम्यत

औद्दालकिः । यद्येवं, प्राग् औद्दालकिजन्मनो नायं ग्रन्थो भूतपूर्वः । एवमप्यनित्यता । ” इति । ‘ कुस्तुविन्दः ’ इति वृत्तिकाराः पठन्ति ।

“ यच्च प्रावाहणिरिति । तन्न । प्रवाहणस्य पुरुषस्य असिद्धत्वात् । न प्रवाहणस्य अपत्यं प्रावाहणिः । प्रशब्दः प्रकर्षे सिद्धः, वहतिश्च प्रापणे, नत्वस्य समुदायः क्वचित् सिद्धः । इकारस्तु यथैवापत्ये सिद्धः, तथा क्रियायामपि कर्तरि । तस्मात् यः प्रवाहयति, स प्रावाहणिः । बबर इति शब्दानुकृतिः । तेन यो नित्योऽर्थस्तमेवैतौ शब्दौ वदिष्यतः । अत उक्तं, परं तु श्रुतिसामान्यमात्रमिति ॥ ” इति च ।

एवमादिसूत्रभाष्योदाहरणव्याक्रियानिदर्शनेन मन्त्रभाग इव ब्राह्मणभागोऽपि नित्यशब्दार्थघटित एव परीक्ष्यते । मन्त्रेषु तु वसिष्ठकश्यपजमदग्निप्रभृतीनां नित्योऽर्थ उरीक्रियत एव वादिभिस्तदा ब्राह्मणेनैव किमपराद्धम् । बहुवक्तव्यत्वात् तथाकर्तुं न शक्यत इति चेत्, तदन्यत् । परं न ‘ इषेत्वा– ’ इत्यादिः ‘ –खं ब्रह्म ’ इत्यन्तैव याजुषी विभूतिः, तैत्तिरीयादेरपि विद्यमानत्वात् अत एव तु **शतपथादिषु याज्ञवल्क्यादि-** पदार्थोऽपि वसिष्ठादिवन्नित्यार्थ इत्यत्र काभ्यसूया को वा प्रत्यवायः । भवति चात्रोपसंहारः—

“ वेदा व्याकृतिकल्पतोऽपि सुमते ! शाखाबहुत्वं गता,<br>
नो चेत्, पाणिनिनापि तित्तिरिमुखा भागाः कथं सूत्रिताः ।<br>
इत्थं वाजसनेयिमन्त्रतुलया वेदप्रथायन्त्रणा,<br>
तद्वच्छिष्टनिविष्टशाखिककथोच्छेदः कथं जायताम् ॥ ”

‘ तित्तिरिवरतन्तुखण्डिकोखाच्छण् ’ ( पा॰ सू॰ ४ । ३ । १०२ ) इत्यादि ।

“ मन्त्रस्वरवद् ब्राह्मणस्वरश्चरकाणाम् ॥ २५ ॥<br>
तेषां खाण्डिकेयोखेयानां चातुःस्वर्यमपि क्वचित् ॥ २६ ॥<br>
ततोऽन्येषां ब्राह्मणस्वरः ॥ २७ ॥ ”

( शुक्लयजुः प्रातिशा॰ प्रतिज्ञापरिशिष्ट ३ कं॰ )

**दैवतपूजनादिक्रिया** इति । स्त्रिया दैवतपूजनादावधिकारोऽस्त्येव ।

योऽपि कश्चिन्निषिध्यते स तावदसत्स्त्रीविषयक इति मन्तव्यम् । तथाच वाल्मीकीये **रामायणे** कौशल्यावाक्यम्—

'मयार्चिता देवगणाः शिवादयो
महर्षयो भूतमहासुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते
हितानि काङ्क्षन्तु दिशश्च राघवः ॥'

(अयो. कां. २५ स. ४५ श्लो.)

इत्यादि । स्त्रिया गौरीगणेशाद्याभ्युदयिकव्रतपूजने तु सुप्रसिद्धे, तथा प्रतिकुलं कुलदेवताव्रतपूजने । विधुरायास्त्वेकादशीव्रतादिकम् । स्त्रिया आपद्धर्मस्तु तदलकगतः ॥ १०९–११० ॥

इति स्त्रीशिक्षीया वेददृष्टिः ।

## अथ शूद्र-शिक्षा ।

कर्माणि कृत्वाधिचिकीर्षयैव
शोचन्तु शूद्रा व्यवसायशक्तिम् ।
नूनं क्रियासाधनसाहसेन
परिश्रमक्लान्तिसहाः प्रतीकाः ॥ १११ ॥

अथ चतुर्विंशत्या छन्दोभिः शूद्रान् प्रत्यभ्यर्थना ।

तत्र प्रथमेन द्विजस्येव शूद्रस्यापि कर्मरङ्गव्यायामं निरूपयति—**कर्माणीति** । कृतापेक्षया कर्तव्ये अधिचिकीर्षा=सर्वात्मना विधित्सा । शोचन्तु=मयेदं कियत् कृतम्, इतोऽपि बहु कर्तव्यमासीत्, इति प्रकृतिसदृशं चिन्तयन्तु । क्रियासाधनसाहसेन=उत्तरोत्तरकर्मकरणाभिनिवेशेन प्रतीकाः=शरीरावयवाः परिश्रमक्लान्तिसहाः नूनं स्युः । लोकप्रसिद्धमेतत् ॥ १११ ॥

विशेषवाक्यानुपलम्भभावे
मन्त्रान्विना संस्कृतयो मताः वः ।
अदृष्टधर्माचरणप्रसङ्गे
महात्मनां शासनमेव मानम् ॥ ११२ ॥

द्वितीयेन संस्कारार्थमाह—**विशेषवाक्यानुपलम्भभाव इति** । मन्त्राः संहिताब्राह्मणगताः । तथा च स्मर्यते—

'शूद्रोऽप्येवंविधः कार्यो विनामन्त्रेण संस्कृतः ।'

"त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात् ततो मुखम् ।
शारीरं शौचमिच्छन् हि, स्त्री शूद्रस्तु सकृत् सकृत् ॥" (मनु. २ । १३६)

"भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥

'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥" (याज्ञ. १।१२१-१२२)

अथ न द्विजातिस्पर्धया श्रौते स्मार्ते वा विधौ प्रवर्तितुं चेष्टितव्यम्, अत उच्यते **अदृष्टधर्माचरणप्रसङ्ग** इति ॥ ११२ ॥

**यदग्निहोत्रं रथकारजाते-**
**रादिश्यते संकरवर्णभाजः ।**
**वेदोदिताचारपथाश्रयेण**
**तद्वो न शूद्राः खलु पादजाताः ॥ ११३ ॥**

तृतीयेन वैशिष्ट्यमाह—**यदग्निहोत्रमिति** । अग्नये होत्रं होमो यस्मिन्नित्यग्निहोत्रं '*तत्प्रख्यं चान्यशास्त्रम्*' (मी. द. १।४।४) इति तत्प्रख्यन्यायेन कर्मनामधेयम्। आधाने 'वर्षासु रथकार आदधीत' इति श्रूयते । तत्र रथं करोतीति व्युत्पत्त्या न त्रैवर्णिको न वा शूद्रो रथकारः, किंतु संकीर्णजातिः । तथा च स्मर्यते 'माहिष्येण करण्यां तु रथकारः प्रजायते ।' (याज्ञ. १।९५) इति । क्षत्रियाद् वैश्यायामुत्पन्नो माहिष्यः, वैश्याच्छूद्रायां जाता करणी । एवं माहिष्यात्करण्यां संभूतो रथकार इति सौधन्वनापरपर्यायः । स्पष्टोऽयमर्थो रथकाराधिकरणे **शाबरभाष्ये** (मी. द. ६।१।४४-५०) । एवं निषादस्थपतिरप्युदाहरणीयः । तत्र—

"द्विजः स्थपतिरन्यो वा, द्विजः षष्ठीसमासतः ।"

इति पूर्वपक्षे—

"कर्मधारयमुख्यत्वान्निषादो रौद्रयागकृत् ॥"

इति सिद्धान्तः । अयं निषाद-स्थपतिन्यायो मीमांसायामुत्तरत्र (६।१।५१-५२) ॥ ११३ ॥

**यद् यस्य वर्णस्य हि धर्मकृत्यं**
**तत्तस्य वेदस्मृतिषु प्रसिद्धम् ।**
**एतच्च गीता परधर्मभीति-**
**प्रदर्शनेनाह विविक्तमेव ॥ ११४ ॥**

चतुर्थेन कर्मैव विशदयति—**यदू यस्येति** । तथा च **भगव-द्गीतो**पनिषत्सु पठ्यते—

" श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः, परधर्मो भयावहः ॥" ( ३-३५ )
" श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥" ( १८-४७ )

मनुनापि स्मर्यते—

' वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्मेण जीवन् हि सद्यः पतति जातितः ॥' ( १०-९७ )

तथा **गीतास्वपि**—

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति, न सुखं, न परां गतिम् ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥" (गी० १६।२३-२४)

॥ ११४ ॥

**यद् व्यक्तिवादादधुना वदन्ति**
**मौर्ख्यादिकं शूद्रपदाभिधेयम् ।**
**तत्र श्रुतिव्याकृतिदर्शनानां**
**मानं सुदूरे निकटे तु कोपः ॥ ११५ ॥**

पञ्चमेनापाततः कर्मणैव वर्णव्यवस्थां वर्णयतो जन्मना शूद्रजातिमपलपतः प्रतिवक्ति—**यद् व्यक्तिवादादिति** । यत् केऽप्यधुना— " जाड्यादिर्बुद्धिधर्मः, स तावन्न सार्वत्रिकः "इति व्यक्तिवादाद्=व्यक्तिविशेषाश्रयकथनात् मौर्ख्यादिकम्=अध्ययनवेदनाऽसामर्थ्यप्रभृति शूद्रपदस्याभिधेयं वाच्यं वदन्ति । तत्र श्रुत्यादीनां मानना सुतरां दूरेऽस्ति, विमाननैव निकटे जागर्ति । श्रुत्या ब्राह्मणादय उपनीयन्ते, तत्र मूर्खा न पृथग्विधीयन्ते,

परं तथा सति जाड्याश्रितत्वादेषां पृथग्विधानं प्राप्तमिति महद्वैषम्यम्। व्याकृत्या शोचतीति शूद्रो योगरूढो जातिवचनः, तत्र मूर्खाः पण्डिता इत्युभये। इदमपि वैशसम्। दर्शनेनापि शूद्रशब्दो जातिवाचक एव प्रतीयते न व्यक्तिवाचकः। अतएव शूद्र आनीयतामित्यादेशे तत्र मौर्ख्यपाण्डित्ये अनादृत्यैव यः कश्चन चैत्रो मैत्रो वा शूद्र आनीयत इति दृश्यते। त्रैवर्णिक इव शूद्रोऽपि कयापि भङ्ग्या अष्टादशविद्याविदिताच्चातुर्वर्ण्यसंकेतान्न पृथक्। तस्य त्रैवर्णिकस्येव प्रत्येकमधिकारवैषम्यमास्ताम्, योगरूढमुपनयनमुपेक्ष्य यौगिकमस्त्येव। अत एव चाग्रे--

'वेदार्थमालम्ब्य निरूपितं यत्
पुराणरामायणभारतादि।
तन्निर्मलान्तःकरणैरधीत्य
विज्ञानसीमानमधिश्रयन्तु॥' (११८ श्लो.)

इति पठितम्। योगरूढोपनयनं तूपेक्ष्यतरमेव प्रमाणाभावात्। यन्मूलकः पूर्वमीमांसायामपि--'चातुर्वर्ण्यमविशेषात्' (६।१।२५-३८) इत्यादिना सूत्रसंदर्भेण यज्ञे शूद्रस्यानधिकारो मीमांस्यत इति संक्षेपः॥११५॥

**सामान्यशक्यः खलु शूद्रशब्द-**
**स्ततो वराश्चाप्यवराश्च ते स्युः।**
**ताँल्लोकशास्त्रव्यवहारवेद्या-**
**न्प्रसङ्गतः पाणिनिरप्युवाच॥ ११६॥**

षष्ठेन शूद्रवर्गे विभागमुपन्यस्यति--**सामान्यशक्य इति**। वरावरश्रेणिदर्शनादिति तात्पर्यम्। उपनयनराहित्येन शूद्रवर्णाभ्यामेव न भेतव्यम्, विभीय वा न कान्दिशीकैर्भवितव्यम्। देवानामप्युपनयनानुपलम्भात्। यत्संबन्धेनैव ब्राह्मणा भूदेवाः, क्षत्रिया मनुष्यदेवा इति व्यपदिश्यन्ते। **पाणिनि**नामा महामुनिरपि तान् लोकवेदप्रसिद्धान् शूद्रान् प्रसङ्गतः=लक्ष्यव्युत्पादनप्रसङ्गात् लोकशास्त्रयोर्व्यवहारेण वेद्यान् 'शूद्राणामनिरवसितानाम्' (२।४।१०) इत्येवमुवाच=सूत्रयामास॥

" अनिरवसितानामुच्यते । कुतोऽनिरवसितानाम् ? आर्यावर्तादनिरवसितानाम् । कः पुनरार्यावर्तः ? प्रागादर्शात्, प्रत्यक्कालकवनाद्, दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम् । यद्येवम्, ' किष्किन्धगन्धिकम् ' ' शकय (ज ) वनम् ' ' शौर्यक्रौञ्चम् ' इति न सिद्ध्यति । एवं तर्ह्यार्यनिवासादनिरवसितानाम् । कः पुनरार्यनिवासः ? ग्रामो घोषो नगरं संवाह इति । एवमपि, य एते महान्तः संस्त्यायास्तेष्वभ्यन्तराश्चण्डालमृतपाश्च भवन्ति । तत्र—चण्डालमृतपा इति न सिद्ध्यति । एवं तर्हि याज्ञात्कर्मणोऽनिरवसितानाम् । एवमपि ' तक्षायस्कारम् ' ' रजकतन्तुवायम् ' इति न सिद्ध्यति । एवं तर्हि, पात्रादनिरवसितानाम् । यैर्भुक्ते पात्रं संस्कारेण शुद्ध्यति तेऽनिरवसिताः । यैर्भुक्तेपात्रं संस्कारेणापि न शुद्ध्यति ते निरवसिता इति ॥ " ( महाभाष्य. )

अत्रेदमपि प्रतिपत्तव्यम्—यत्खलु किमप्यभिधायकमभिधेयं वा भवतु; तन्न तावज्जातिगुणक्रियायदृच्छाभ्यो, योगिकाद् रूढाद् योगरूढाद् योगिकरूढाद्वा मुच्येत । अपर आह—यत्किमपि प्रमेयं प्रमाणमाकाङ्क्षद् जातिगुणक्रियोपाधिं परिहर्तुं नोत्सहते । तत्र जात्यादयः—

" समानप्रसवात्मिका जातिः " ( न्या. द. २ । २ । ६६ )

समान एकबुद्धिनिर्ग्राह्यः प्रसवो विशकलनम् आत्मा स्वरूपं यस्याः सा—अस्ति, जायते, विपरिणमते, वर्धते, अपक्षीयते, नश्यतीति भावयोगिनी जातिः ।

" आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह ॥ " इति ।
" प्रादुर्भावविनाशाभ्यां सत्त्वस्य, युगपद् गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥ " इति च ।

( 'जातेः' ( ४ । १ । ६३ ) इति सूत्रभाष्यम् )

आक्रियते व्यज्यतेऽनयेत्याकृतिः संस्थानम् । गृह्यतेऽनेनेति ग्रहणम् ।

आकृतिर्ग्रहणं यस्याः सा 'आकृतिग्रहणा। अनुगतसंस्थानव्यङ्ग्येति यावत्। यथा—मानुषी तटी। अनेन लक्षणेन व्यापकरूपा मनुष्यत्वपशुत्वादिका जातिर्लक्षिता। या चासंस्थानव्यङ्ग्या सर्वाणि लिङ्गानि न भजति सा सकृदाख्यातनिर्ग्राह्या। यथा—ब्राह्मणी, महाशूद्री, वृषली। इह 'ब्राह्मणी' इति रूपोदाहरणम्, ब्राह्मणशब्दस्य शार्ङ्गरवादिषु पाठेन ङीना (पा. सू. ४।१।७३) ङीषो (पा. सू. ४।१।६३) बाधनात्। 'महाशूद्री' तु 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा' इत्याग्नेयकोशाद् व्युत्पादितैव। 'वृषली' तु सुप्रसिद्धं जात्युदाहरणम् (सि. कौ.।) वृषलशब्दः—'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः' । इति शूद्रवर्गेऽमरसिंहेन पठितः। अनेन लक्षणेन मनुष्यत्वाद्यपेक्षया व्याप्यरूपा ब्राह्मणत्वादिका जातिर्लक्षिता। शेषं प्राग् व्युत्पादितम्।

" सत्त्वे निविशतेऽपैति, पृथग् जातिषु दृश्यते।
आधेयश्च क्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः॥" इति।
" उपैत्यन्यज्, जहात्यन्यद्, दृष्टो द्रव्यान्तरेष्वपि।
वाचकः सर्वलिङ्गानां, द्रव्यादन्यो गुणः स्मृतः॥" इति च।

('वोतः—' (४।१।४४) इति सूत्र भा.)

" प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥
सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः, प्रदीपवच्चार्थतो वृत्तिः॥" (सां. का. १२-१३)
" गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं, तन्मायैव सुतुच्छकम्॥"

('ते व्यक्तसूक्ष्माः—' (४।१३) यो. द. भाष्य.)

" न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं, प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।

सर्वाणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥"

( भ. गी. १८।४०-४१ )

" यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्, सा क्रियेत्यभिधीयते ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥"

( 'भूवादयः-' ( १।३।१ ) इति सूत्रभाष्यग्राही हरिः )

तथा--

" रूढं च, लक्षकं चैव, योगरूढं च, यौगिकम् ।
तच्चतुर्धा, परे रूढयौगिकं मन्यतेऽधिकम् ॥
रूढं संकेतवन्नाम, सैव संज्ञेति कीर्त्यते ।
नैमित्तिकी, पारिभाषिक्यौ, पाधिक्यपि तद्भिदा ॥
जात्यवच्छिन्नसंकेतवती नैमित्तिकी मता ।
उभयावृत्तिधर्मेण संज्ञा स्यात्पारिभाषिकी ॥
औपाधिकी त्वनुगतोपाधिना या प्रवर्तते ।
यद्वाऽऽधुनिकसंकेतशालि स्यात् पारिभाषिकम् ॥
जात्या नैमित्तिकं शक्त,मौपाधिकमुपाधिना ॥" इति ।

" आजानिकश्चाधुनिकः संकेतो द्विविधो मतः ।
नित्य आजानिकस्तत्र, या शक्तिरिति गीयते ॥
कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः ।" इति च ।

( शब्दशक्तिप्रका. नामप्रक. )

इत्थं च ब्राह्मणादिशूद्रपर्यन्ता वर्णानुपूर्वी अभिधायकाभिधेयसामर्थ्य-भूम्ना तत्र तत्र निरूप्यमाणोदाहरणप्रत्युदाहरणतात्पर्यमहिम्ना च जाति-गुणक्रियायोगान् सभाजयन्ती पर्यवेद्यते; तथैव वर्णानुपूर्वीमजहती स्त्री-व्यक्तिरपि गुणक्रियालंकर्मीणा जातिपुंयोगशालिनी प्रकृतिप्रत्ययतः पर्या-

सोच्यते । इहेयं संकलनदिक्—ब्राह्मणः, ब्राह्मणी, उपाध्यायानी, उपाध्यायी, उपाध्याया, आचार्यानी, आचार्या । क्षत्रियः, क्षत्रियी, क्षत्रियाणी, क्षत्रिया । वैश्यः, वैश्याः, अर्यः, 'अर्यः स्वामिवैश्ययोः' (पा. सू. ३।१।१०३) अर्यी, अर्याणी, अर्या । शूद्रः=वृषलः, शूद्री, शूद्रा=वृषली । इत्येवमादि ।

अथ बन्धवो वर्णशेषा विभज्यन्ते । अहो अस्यां नवनवोन्मेषजागरूकायां विक्रमैकोनविंशशताब्द्यां १९०० ब्राह्मणादिसंज्ञासु चतसृषु वर्णकक्षासु प्राय ऊना अनूना भवितुकामाः पूर्णं प्रयतन्ते । प्रायेण चतुर्थकक्षायां केऽपि यथाशास्त्रमवस्थातुं नोत्सहन्ते । अवतिष्ठमाना वा शास्त्रमेव परिवर्तयितुं समीहन्ते । तृतीयकक्षायोगिनोऽपि प्रथमां द्वितीयां वा कक्षामारोढुं चेष्टन्ते । प्रथमद्वितीयतृतीयकक्षासु संचरन्तस्तु यथोत्तरं यथापूर्वं वा समुदासते तावत् । त एव उपर्युपर्यारोहन्तः पर्यन्तपाताः स्वस्ववर्णातिक्रमपातकं न जानते । जानाना वा प्रतिष्ठालुब्धा न श्रद्दधते । वस्तुतो नैवं, नायं वा प्रतिष्ठालाभ इति मन्यामहे । तथाहि—अन्यथा सत आत्मनोऽन्यथाख्यानमाख्यापनं च सर्वलोकशास्त्रविरुद्धम् । तदपि बुद्धिपूर्वकमिति महान् व्युत्क्रमः । जामदग्न्यसविधे राधेयः कर्ण आत्मानमन्यथाख्याप्य पर्यन्ते किमर्जितमिति भारतमालोकनीयम् ( शां. प. रा. ध. ३ अध्या. ) । भूतभवद्भविष्यद्व्यक्तिप्रवाहकं कुलं तु श्राद्धतर्पणयौनसंबन्धेषु क्रियन्तं प्रत्यवायभारं धारयिष्यतीति धर्मशास्त्रतो विज्ञेयम् । एवमपि चिराय परिवाददुर्गन्धः स्थास्यति मानभृतां पुरस्तात् । अहो क्वचित् क्वचिद् यौनसंबन्धलुब्धमित्थमभिप्रायकं ब्राह्मणकुलमपि कलङ्कमर्जयद् गोत्रावटङ्कविपर्यासं प्रतिपद्यते । क्वचित् क्वचित्पुनर्यौतकलोभेन यथास्पदमपि ब्रह्मकुलं पंक्तिश्रियं म्लापयत इति । ब्रह्मबन्धवस्तु अन्त्येष्टौ दशाहभोजिनो महाब्राह्मणादिशब्दव्यवहार्याः । क्षत्रियकुलमपि यावद्भूभागसंबन्धमावर्तते । क्षत्रबन्धवस्तु व्रात्यादिदोषभारेण भुग्नाः शकयवनादिप्रथां दधतो जात्यन्तरमेवापन्ना इति न चोदावसरः । वैश्यकुलं प्रायेण कृषि-

पाशुपाल्ये वृत्तीं विहाय वाणिज्यं कुर्वत् कुसीदप्रणयि जज्ञे । कृषिस्तु पादजातेभ्यार्यश्रेणिभिर्गृहीता । तत्रेदानीं काचन श्रेणी **जाटेति** संज्ञया, काचित् **कुर्मीति** संज्ञया, काचन पुनरन्यया देशीयसंज्ञया व्यवह्रियमाणा लभ्यते । पाशुपाल्यं तु **आभीरैर्गृहीतम्** । आभीरा राज्ञामन्तःपुर-सहाया अपि परिगण्यन्त इति **साहित्यदर्पणादितो**ऽवधेयम् । तेषां वरावराचेति श्रेणिद्वयी । तत्राद्या प्रायो मध्यभारतावष्टम्भा । भगवतो द्व्यामुष्यायणाभासस्य **वासुदेवस्य** पालको **नन्दगोपालको यशोदा** चेति जायापती आभीराविति पाशुपाल्यमूलकः सांप्रतिकः प्रलापः । वस्तुतस्तु तौ वैश्यावेव । द्वितीया तु पर्यन्तदेशगा । वैश्यवन्धवस्तु ' न वेदबाह्याचरणेन सार्धं यौनो विधिः क्वापि निरूपणीयः' इति मूले एव दर्शिताः । संकीर्णमसंकीर्णमिति द्विप्रकारकं कुलम् । तत्राद्यं यथा—

" विप्रान्मूर्धावसिक्तो हि क्षत्रियायां, विशः स्त्रियाम् ।
अम्बष्ठः, शूद्र्यां निषादो जातः पारसवोऽपि वा ॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां, विन्नास्वेष विधिः स्मृतः ॥
ब्राह्मण्यां क्षत्रियात्सूतो, वैश्याद् वैदेहिकस्तथा ।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥
क्षत्रिया मागधं वैश्यात्, शूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥
माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥" ( याज्ञ. १।९१-९५ )

मूर्धावसिक्तादिषट्कापेक्षया सूतादिषट्कमवरम् । रथकारस्तु संकीर्ण-संकरः । इह क्वचित् कारणगौरवेण प्रागुपनयनसंस्कारोऽभूत् । इदानीं तु प्रायेणैता जातयो विच्छिन्ना इति कोपनयनावसरः ? ।

ये पुनर्ब्राह्मणादिषु वा मूर्धावसिक्तादिषु वा सूतादिषु वा रथकारादिषु

वाप्यावन्नासु ( अविवाहितासु ) जायन्ते ते खल्वार्यविगर्हिताः । त एते कानीनकुण्डगोला एव भवन्तीति । अत्र **मनु**राह—

" वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।
आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥
अनार्यता, निष्ठुरता, क्रूरता, निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥
पित्र्यं वा भजते शीलं, मातुर्वोभयमेव वा ।
न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥
कुले मुख्येऽपि जातस्य यस्य स्याद् योनिसंकरः ।
संश्रयत्येव तच्छीलं वरोल्पमपि वा बहु ॥" इति । ( १०।५७-६० )
" क्षेत्रभूता स्मृता नारी, बीजभूतः स्मृतः पुमान् ।
क्षेत्रबीजसमायोगात् संभवः सर्वदेहिनाम् ॥
विशिष्टं कुत्रचिद्बीजं, स्त्रीयोनिस्त्वेव कुत्रचित् ।
उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते ॥ " इति । ( ६।३३-३४ )
" बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥ "
" तत् प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ।
आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥ " इति च । ( ६।३५-४१ )

इति वर्णानां व्यभिचारेण सांकर्यम् । भवति चात्रोपसंहारे **मनू**पदेशः—

' यत्र त्वेते परिध्वंसाज्जायन्ते वर्णदूषकाः ।
राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥' ( १०।६१ )

अवेद्यावेदनेन सांकर्यं प्राङ् निरूपितमेव । तत्र क्वचिद् राजपूताना-मण्डले राजकुलेऽपि सपिण्डसगोत्रसप्रवरप्रयुक्तं सांकर्यं द्रष्टव्यम् । मन्ये **मुहम्मदी**यसाम्राज्यसमयादेवंजातीयका धर्मोपप्लवाः प्रादुरासन्निति।स्वकर्मणां त्यागेन सांकर्यं तु संप्रति बहुत्र परिदृश्यते । तत्र च माण्डलिकस्य

गजनिमीलिका, त्रैवर्णिकसमाजस्योपेक्षा, सत्यामभ्युपपत्तौ लोभमात्रोद्रेका-दवरकर्मभ्यो निवृत्तिराहित्यम्-किं वा प्रवृत्तिलाहित्यं चेति कारणानि न विश्राम्यन्ति । आः कष्टम् । चतुर्थवर्णसमाजस्तु स्ववर्ग्यानन्यथाचरतो नोपेक्षते यथाशक्ति शास्ति चेति प्रत्यक्षम् । द्वितीयं त्वसंकीर्णम् । यथा— चातुर्वर्ण्यम् ॥

अथ द्विजातिप्राणभृता एकजातयो यैः कर्मभिर्न संकीर्यन्ते तानि प्रदर्श्यन्ते—तत्र यथा कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्, तथा परि-चर्यात्मकं शूद्रकर्मेति चातुर्वर्ण्यगुरोरुपदेशः (भ.गी.१८।४४) तथा च **मनुः**—

' एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ' (१।९१)

एवकारेण द्विजातिव्यतिरिक्ताः प्रतिषिध्यन्ते । इहापि विशेषः—

' स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः ।
जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥
विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ।
यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥' ( मनु· १०।१२२-१२३ )

' अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् ।
पुत्रदारात्ययं प्राप्तो जीवेत् कारुककर्मभिः ॥
यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ।
तानि कारुककर्माणि शिल्पानि विविधानि च ॥' (मनु·१०।९९-१००)

इदानीं पुण्यात्मानः शूद्रा उत्सन्नप्राया एव प्रतीयन्ते । तत्र जाता आपदा लोभापदा वा क्लिश्यमाना वरं कृषिपाशुपाल्यादिजीवनम्, तथा अवरं तक्षायस्कारादिजीवनं चिराय गृह्णाना लभ्यन्त इति मूलच्युतिः संवृत्ता । यत उक्तम्—'परधर्मेण जीवन् हि सद्यः पतति जातितः' (मनु.१०।९७ ) इति । अथ केऽपि दाशशब्देन व्यपदिष्टाः । तेऽप्यने-कधा कथ्यन्ते । तत्रैके 'रथकारादिवत्संकीर्णा धर्मशास्त्रनिबन्धेषु प्रसिद्धाः ।

अपरे रथकारादिवदसंकीर्णाः । यत्र भगवतः पाराशर्यस्य वेदव्यासस्य जननी जन्म लेभे । या कौरवपुंगवस्याबालब्रह्मचारिणो भारतयोद्धृमूर्धन्यस्य भीष्मस्य प्रयत्नेन जनकेन शंतनुना विवाहिता बभूव । अत्र दृष्टान्ते रथकारास्तक्षाणः । तथा चामरसिंहः पठति—'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् । ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ॥' इति । इतरे पुना राजपूतानादिमण्डले कुण्डगोलसधर्माणः । यथेमे चरमे, न तथा पूर्वे द्वये । चरमेऽपि यवनसाम्राज्यात्संकीर्णा इत्यसकृदावेद्यते । रामायणादिषु वैवाहिकादिप्रसङ्गविदितो दाशशब्दश्चतुर्वर्णसाधारण इति प्रतीयते । इह 'दाशगोघ्नौ संप्रदाने' (३।४।७३) इति **पाणिनि**रप्यनुकूलः । यथा—संप्रदानकारके " गां घ्नन्ति, दातुं गमयन्ति अस्मा इति गोघ्नः" इति निपात्यते । अर्थात् ' गां हन्तीति गोघ्नः' इत्यत्र कृत्संज्ञकत्वात् कर्तरि प्राप्तस्य पचाद्यचः ( ३।१।१३४ ) संप्रदाने निपातनात् चण्डालादिमपहाय अतिथ्यादि यथालक्ष्यमाद्रियते, तथा अन्तर्भावितणिजर्थो गत्यर्थश्च हन्तिरिति तात्पर्यम् । "निपातनसामर्थ्यादेव गोघ्न ऋत्विगादिरुच्यते, न तु चण्डालादिः । असत्यपि च गोहनने तस्य योग्यतया गोघ्न इत्यभिधीयते ।" इति **काशिका** । " यथा ह्यपचन्नपि योग्यतया पाचक इत्युच्यते, तथा असत्यपि गोहनने गोघ्न इति" इति **न्यासः** । तथा खलु संप्रदानकारके एव 'दाशन्ति, ददति देयमस्मा इति दाशः' इति निपात्यत इति दार्ष्टान्तिकेऽपि ज्ञेयम् । ' दाशृ दाने । दासृ दाने" इति भ्वादौ ,'दाश हिंसायाम्' इति स्वादौ च पठ्यते । 'दासो वाणाभुजिष्ययोः । दासे भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे ॥' इति स-द्विके **मेदिनिकारो**ऽपि । " दंसेष्टटनौ न आच ।" दासः सेवकशूद्रयोः । ' दंशेश्च । ' दाशो धीवरः ।" इति । ( सि. कौ. उणा. ५ पा. )." दाशि दंशने । दसि दर्शनदंशनयोः " इति चुरादावाकुस्मीयेषु पठ्यते । " दाशि । दसि " इति तत्रैव आस्वदीयेषु पठ्यते । इत्यादि ।

इत्थं च चातुर्वर्ण्यस्य चातुराश्रम्यस्य चातुर्वर्णिका दासाः, त्रैवर्णिकस्यैकवर्णिकाः शूद्राः, अन्तरप्रभवस्यान्तरालिकाः, तक्षायस्कारादेः कैवर्तनापितादयश्च परिचारका लभ्यन्ते । अत्र परिचयार्थं सान्तरालानां वर्णानां देशविभागादिकं **गर्गपराशर**लेखसंदब्धं **वराहमिहिरोक्त**मुपन्यस्यते । तत्र पूर्वापरयाम्योत्तरविदिक्संज्ञकैश्चतुर्भिर्बृहद्वृत्तैर्विभक्तं भूगोलमाकलय्य, भारतीयग्रहगणितनिवासानुरोधेन वेदादिनिरूपित**कुरुक्षेत्रं** मध्यं प्रकल्प्य, यथानिर्देशलक्ष्या भगवत्या वसुमत्या (भूदेव्याः) हारयष्टिमुक्ताफलायिता देशा अनुसंधेयाः । तथाहि—

'भद्रारिमेदमाण्डव्यसाल्वनीपोज्जिहानसंख्याताः ।
मरुवत्सघोषयामुनसारस्वतमत्स्यमाध्यमिकाः ॥
माथुरकोपज्योतिषधर्मारण्यानि शूरसेनाश्च ।
गौरग्रीवोद्देहिकपाण्डुगुडाश्वत्थपाञ्चालाः ॥
साकेतकङ्ककुरुकालकोटिकुकुराश्च पारियात्रनगः ।
औदुम्बरकापिष्ठलगजाह्वयाश्चेति मध्यमिदम् ॥

(भट्टोत्पलव्याख्यया मध्यदेशसंख्या=३२)

अथ पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः ।
व्याघ्रमुखसुह्मकर्वटचान्द्रपुराः शूर्पकर्णाश्च ॥
खसमगधशिबिरगिरिमिथिलसमतटोड्राश्च वदनदन्तुरकाः ।
प्राग्ज्योतिषलौहित्यक्षीरोदसमुद्रपुरुषादाः ॥
उदयगिरिभद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः ।
एकपदताम्रलिप्तककोशलका वर्धमानाश्च ॥ (भट्टोत्प. पूर्वदेशसंख्या=३२)
आग्नेय्यां दिशि कोशलकलिङ्गवङ्गोपवङ्गजठराङ्गाः ।
शौलिकविदर्भवत्सान्ध्रचेदिकाश्चोर्ध्वकण्ठाश्च ॥
वृषनालिकेरचर्मद्वीपा विन्ध्यान्तवासिनस्त्रिपुरी ।
श्मश्रुधरहेमकुड्यव्यालग्रीवा महाग्रीवाः ॥

किष्किन्धकण्टकस्थलानिषादराष्ट्राणि पुरिकदाशार्णाः ।
सह नग्नपर्णशवरैराश्लेषाद्ये त्रिके देशाः ॥

( भट्टोत्प. आग्नेयदेशसंख्या=२७ )

अथ दक्षिणेन लङ्का कालाजिनसौरिकीर्णतालिकटाः ।
गिरिनगरमलयदर्दुरमहेन्द्रमालिन्धभरुकच्छाः ॥
कङ्कटकङ्कणवनवासिशिबिकफणिकारकोङ्कणाभीराः ।
आकरवेणावर्तकदशपुरगोनर्दकेरलकाः ॥
कर्णाटमहाटविचित्रकूटनासिक्यकोल्लगिरिचोलाः ।
क्रौञ्चद्वीपजटाधरकावेर्यो रिष्यमूकश्च ॥
वैदूर्यशङ्खमुक्तात्रिवारिचरधर्मपट्टनद्वीपाः ।
गणराजकृष्णवेल्लूरपिशिकशूर्पाद्रिकुसुमनगाः ॥
तुम्ववनकार्मणेयकयाम्योदधितापसाश्रमा ऋषिकाः ।
काञ्चीमरुचीपट्टनचेर्यार्यकसिंहला ऋषभाः ॥
बलदेवपट्टनं दण्डकावनतिमिङ्गिलाशना भद्राः ।
कच्छोऽथ कुञ्जरदरी सताम्रपर्णीति विज्ञेयाः ॥

( भट्टो. दक्षिण-देश सं=५६ )

नैर्ऋत्यां दिशि देशाः पह्लवकाम्बोजसिन्धुसौवीराः ।
वडवामुखारवाम्बष्ठकपिलनारीमुखानर्त्ताः ॥
फेणगिरियवनमार्गरकर्णप्रावेयपारशवशूद्राः ।
बर्बरकिरातखण्डक्रव्यादाभीरचञ्चूकाः ॥
हेमगिरिसिन्धुकालकरैवतकसुराष्ट्रबादरद्रविडाः ।
स्वात्याद्ये भत्रितये ज्ञेयश्च महार्णवोऽत्रैव ॥

( भट्टो. नैर्ऋत्यदेशसंख्या=२६ )

अपरस्यां मणिमान् मेघवान् वनौघः क्षुरार्पणोऽस्तगिरिः ।
अपरान्तकशान्तिकहैहयप्रशस्ताद्रिवोक्काणाः ॥

पञ्चनदरमठपारततारक्षितिजृङ्गवैश्यकनकशका: ।
निर्मर्यादा म्लेच्छा ये पश्चिमदिक्स्थितास्ते च ॥
( भट्टो.पश्चिमदेशसं=१८ )
दिशि पश्चिमोत्तरस्यां माण्डव्यतुषारतालहलमद्रा: ।
अश्मककुलूतहलडा: स्त्रीराज्यनृसिंहवनखस्था: ॥
वेणुमती फल्गुलुका गुलुहा मरुकुञ्चचर्मरङ्गाख्या: ।
एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च ॥
( भट्टो.वायव्यदेशसं=२१ )
उत्तरत: कैलासो हिमवान् वसुमान् गिरिर्धनुष्माँश्च ।
क्रौञ्चो मेरु: कुरवस्तथोत्तरा: क्षुद्रमीनाश्च ।
कैकयवसातियामुनभोगप्रस्थार्जुनायनाग्नीध्रा: ।
आदर्शान्तर्द्वीपित्रिगर्ततुरगानना: श्वमुखा: ॥
केशधरचिपिटनासिकदासेरकवाटधानशरधाना: ।
तक्षशिलपुष्कलावतकैलावतकण्ठधानाश्च ॥
अम्बरमद्रकमालवपौरवकच्छारदण्डपिङ्गलका: ।
माणहलहूणकोहलशीतकमाण्डव्यभूतपुरा: ॥
गान्धारयशोवतिहेमतालराजन्यखचरगव्याश्च ।
यौधेयदासमेया: श्यामाका: क्षेमधूर्त्ताश्च ॥
( भट्टो. उत्तरदेशसं=४० )
ऐशान्यां मेरुकनष्टराज्यपशुपालकीरकाश्मीरा: ।
अभिसारदरदतङ्गणकुलूतसैरिन्ध्रवनराष्ट्रा: ॥
ब्रह्मपुरदार्वडामरवनराज्यकिरातचीनकौणिन्दा: ।
भल्ला: पटोलजटासुरकुनटखसघोषकुचिकाख्या: ॥
एकचरणानुविद्धा: सुवर्णभूर्वसुधनं दिविष्ठाश्च ।
पौरवचीरनिवासित्रिनेत्रमुञ्जाद्रिगान्धर्वा: ॥
( भट्टो. ऐशानदेश. सं.=३४ ॥ ( बृ॰ सं. १४ । २= ३१)

इह कृत्तिकादित्रिकगणनया मध्यदेशादिनवकवर्गे भरण्यन्तानि नक्षत्राणि विभाजितानि ३×९=२७ सार्वभौमफलार्थम्। तत इयं सार्वभौमी भूगोलभक्तिरिति व्यक्तम्। इहेदमपि न विस्मर्तव्यं परीक्षकैः—

" ग्रामो वनं, वनं ग्रामो, मरुः स्रोतः, सरो मरुः।
शैलोऽपि भिद्यते हन्त काले बहुतिथे गते॥"

भवभूतिरप्याह—

" पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां,
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं,
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥ " (उ.रा.च.)

॥ ११६ ॥

**मुखं तदूर्ध्वं चरणं त्वधस्ता-**
**दास्तां चतुर्वर्णनिरूपणायाम्।**
**स्वस्वक्रियासु प्रथितप्रयत्ना-**
**श्चत्वार एतेऽपि समानसत्त्वाः॥ ११७॥**

सप्तमेन वैषम्याभावं दर्शयति—**मुखं तदूर्ध्वमिति**। चतुर्वर्णनिरूपणा 'ब्राह्मणोऽस्य मुखमासीत्—' इति ऋग्वेदादिविदिता। तथा च **मनुर्व्याख्यत्**—

' लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत्' इति। (१।३१)

तथा—

' रुचं नो धेहि ब्राह्मणेषु रुचꣳराजसु धारय।
रुचꣳविश्येषु शूद्रेषु मयि धेहि रुचा रुचम्॥'

इत्यनेन **मैत्रायणी**यसंहितायामुपरिकाण्डेऽग्निचितिब्राह्मणस्य वसोर्धारीयाख्यप्रपाठकगतेन मन्त्रेण—चातुर्वर्ण्यस्य समानसत्त्वं व्याख्यातम्।

धारयेत्यत्र 'नस्कृधि' इति वाजसनेयिनः पठन्ति ॥ ११७ ॥

वेदार्थमालम्ब्य निरूपितं यत्,
पुराणरामायणभारतादि ।
तन्निर्मलान्तःकरणैरधीत्य
विज्ञानसीमानमधिश्रयन्तु ॥ ११८ ॥

अष्टमेनाध्ययनार्थमाह—वेदार्थमालम्ब्येति । न तु साक्षाद् वेद इति प्रपञ्चितं प्राक् । पुराणरामायणभारतादीति । तत्र पुरा भवं पुराणम्—

' सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ '

इत्युक्तस्वरूपम् । तच्चाष्टादशधा—

' अष्टादशपुराणानां कर्ता सत्यवतीसुतः । ' इति ।

तानि—

' मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
अनापलिंगकूस्कानि पुराणानि पृथक् पृथक् ॥ ' इति ।
( देवी० भा. ३।२ )

मत्स्यमार्कण्डेयभविष्यभागवतब्रह्मब्रह्माण्डब्रह्मवैवर्तवामनवायुविष्णुवराहाग्निनारदपद्मलिङ्गगरुडकूर्मस्कन्दसंज्ञानीत्यष्टादश । रामस्य दाशरथेरयनं चरितं रामायणम् । तच्च अध्यात्मवाल्मीकीयादिभेदेन बहुविधम् । भरतानां भरतवंशानामिदं भारतम् । तच्च महत्त्वात् महाभारतमपि व्यपदिश्यते । माहात्म्याद् इन्द्रं महेन्द्रं भारतं महाभारतं चाहुः । तथा च पाणिनिः—'महेन्द्राद् घाणौ च' ( ४।२।२९ ) 'महान्....भारत...., ( ६।२।३८ ) । आश्वलायनगृह्येऽपि—'सूत्रभाष्यभारतमहाभारतधर्माचार्याः' ( ३।४।४ ) एतेन भारतं प्रक्षेपवशान्महाभारतमजनीत्यायुष्मतां प्रलापो भ्रान्तिमूलक एवावधेयः । आदिशब्देन योगवासिष्ठम् । तच्च रामस्य वैराग्यलक्षणमयनमधिकृत्य कृतत्वाद् रामायणमपि व्यव-

ह्रियते । 'वेदान्ते योगवासिष्ठं जीवन्मुक्त्या विशिष्यते ।' इति ॥ ११८ ॥

**स्वोत्प्रेक्षिताभिर्बहुकल्पनाभि-**
**र्यद्भक्तमालादि निबद्धमस्य ।**
**परामृशद्भिः परमार्थतत्त्वं**
**तद्धर्मपाठ्येषु न माननीयम् ॥ ११६ ॥**

नवमेन धर्मपाठ्यपुस्तकं नियन्त्रयति—**स्वेति** । स्वोत्प्रेक्षिताभिरित्यनेन ब्राह्मादेः पौराणिकस्य भारतादेरैतिहासिकस्य च कथाशरीरस्योपमर्दः सूच्यते । भजन्तीति भक्ताः सेवकाः, तेषां माला वीथी यत्र पुस्तके तद् भक्तमालम् । हिन्दुभाषया संस्कृतवाण्या वा ग्रथितं स्यान्नात्र विशेषः प्रतिपाद्यतौल्यात् । व्यधिकरणो बहुव्रीहिः, अर्शआद्यजन्तं वा । परमार्थतत्त्वं वैदिकविज्ञानम् । 'धर्मपाठ्येषु' इत्यनेन समाचारपत्रवत् तस्य पठने नो प्रत्यवायः । संप्रति वैदिके विज्ञाने सुप्ते पौराणिके खिन्ने ऐतिहासिके रुग्णे दुर्बलहृदयेषु भाक्तमालिको बोधः प्रविशन् दृश्यते तदर्थमियमुक्तिः ॥ ११६ ॥

**यत्संस्कृतं प्राकृतभाषिकं वा**
**वेदोद्भवं धर्मनिबन्धरत्नम् ।**
**तदेव बाढं हृदयाधिरूढं**
**स्फुरत्प्रसादां सुषमां प्रसूते ॥ १२० ॥**

दशमेन पाठ्यं निर्वक्ति—**यदिति** । अव्याकृता वाक् प्रकृतिप्रत्ययकल्पनया व्याकृता सती संस्कृतमित्यभिधीयते संस्कारयोगात् । तथा च श्रूयते—'वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्यता इति तस्मादैन्द्रवायवः सहगृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते ॥' (तै.सं.६कां.४ प्रपा. ७ अनु.) इति । न काचन प्राकृतिकी वाक् संस्करणात् संस्कृत्वमापन्नेति भ्रमितव्यम् । प्रकृतिः संस्कृतम्, तत

आगतं प्राकृतमिति बोद्धव्यं **कात्यायना**दिभिस्तथैव सूत्रणात् । भाषिकं देशिकम् । तथोक्तं **रुद्रटेन**—'देशविशेषादपभ्रंशः' इति । तथा महाराष्ट्री-प्रभृतिरपि प्रसिद्धमहाराष्ट्रादिभाषाभ्योऽतिरिक्तैवविज्ञेया । 'महाराष्ट्राश्रितां भाषां प्रकृष्टं प्राकृतं विदुः । सागरः सूक्तिरत्नानां **सेतुबन्धादि** यन्मयम् ॥' इति काव्यादर्शे **दण्डिन** उक्तेः । पैशाची भूतभाषा । नान्या काचिदु-त्प्रेक्षिता । तथोक्तं **दण्डिना**—'भूतभाषामयीं प्राहुरद्भुतार्थां **बृहत्कथाम्**।' इति । बृहत्कथाया एव संस्कृतानुवादौ बृहत्कथामञ्जरी–कथासरित्सागरौ **क्षेमेन्द्रसोमदेवाभ्यां** निरमायिषाताम् । अत्र—'पैशाची (१०।१) प्रकृतिः शौरसेनी (१०।२) मागधी (११।१) प्रकृतिः शौरसेनी (११।२) । शौरसेनी (१२।१) प्रकृतिः संस्कृतम् (१२।२) ।' इति कात्यायन-सूत्राणि संवादीनिति संक्षेपः । **वेदोद्भवमिति** । चातुर्वर्ण्यस्य चातुरा-श्रम्यस्य च वेदमूलकत्वात् तदीयो धर्मोऽपि तथैवेष्यत इति तत्त्वम् । तथा च **मनुः**—

> 'चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
> भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिद्ध्यति ॥' (१२।९७) इति ।
> 'उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ।
> तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥' (१२।९६) इति च ।

**तदेव** इत्युत्तरार्धेन संस्कृतस्य प्राकृतस्य भाषिकस्य वा सतो निबन्ध-स्याकलनफलमाह । भाषानिबन्धः—महात्मनस्**तुलसीदासस्य** रामा-यणम् । यच्च सप्तविधमित्याख्यायते । अत्रैतन्मयकोक्तम्—

> "म्लाने वेदमहिम्नि, भारतधरा-वैमत्यवादज्वर-
> ज्वालाजालविसर्पणाकवलिता प्रस्थातुकामा भवेत् ।
> चेत्, प्रत्याशमुदारवाक्यभरितैर्वाक्यैः कवित्वामृतै-
> र्निर्वैरेण जगद्धितेन तुलसीदासेन न लभ्यते ॥"

अन्तर्वाणिवरस्य **निश्चलदासस्य** विचारसागर-वृत्तिप्रभाकरौ च ।
उक्तं च तेनैव दोहाछन्दसा—

" अस्ति-भाति-प्रिय-सिन्धु में, नाम-रूप-जंजाल ।
लषिति हि आतमस्वरूप निज, है ततकाल निहाल ।।" ॥ १२० ॥

**युष्मासु केचित्पटवो युवानः**
**प्राचीनचर्यां परिवर्तयन्तः ।**
**अवाप्य दानेन कुवाडवेभ्यो**
**यज्ञोपवीतं प्रचरन्त्यपूर्वम् ॥ १२१ ॥**

एकादशः श्लोको द्विजन्मानमुद्दिश्येत्थमुपश्लोक्यते—

' द्विजेष्वनेके नवनीतिनिष्ठा
नवीनविज्ञानकलापटिष्ठाः ।
वर्णाद् विरुद्धामपि वृत्तिमास्ता
वर्णाभिमानश्रियमङ्कयन्ति ॥ '

इति सत्यपि वर्णान्तरविडम्बकैर्न भवितव्यम् । सदनुक्रियते न पुनरसत् ॥ १२१ ॥

**अन्ये स्वसंज्ञाक्षरसाम्ययुक्त्या**
**भवन्ति वर्णान्तरलाभभाजः ।**
**स्वर्गान्यथात्वेऽपि यथा वदन्ति**
**त्रिविष्टपं तिब्बतमेव नान्यत् ॥ १२२ ॥**

द्वादशेन वर्णान्तरारोहणे सोपानमाक्षिपति—**अन्ये इति** । इतरे तु स्वस्य आत्मनो या संज्ञा=दैशिकी वर्गाख्या, तस्या यानि अक्षराणि=वर्णाः, तेषां परैः सह यत् साम्यं सादृश्यं संवादो वा, तद्युक्त्या=उपायेन । यथा—**भाट**शब्दस्य भटो भट्टो वेति प्रकृत्युत्प्रेक्षणम् । तत्र च ब्रह्मपदस्य आचार्यपदस्य वा संमेलनम् । यथा वा—**जाट**शब्दस्य परमेश्वर-

जटासंबन्धसंभावनम् । यद्वा—**कुर्मी** कूर्मपदं मीमांसमानो वेदावधि धावते । **रयदासः** स्वसंज्ञां निभालयन् 'वयं स्याम पतयो रयीणाम्' ( ऋ. सं. १० मं. १० अ. १२१ सू. )इत्याद्यवगाहते। इह रयेण, उत राया, आहोस्वित् रयिणा भवितव्यमित्यवगाहनदिक् । उत्तरार्धेन प्रसिद्धं दृष्टान्तं निबध्नाति—**स्वर्गान्यथात्वेऽपीति** । अयमाशयः—'मनुष्या मनुतो जाता मनुर्देवतनूद्भवः । देवानां वसतिः स्वर्ग इति श्रुत्यादिसंमतम् ॥'इति हिमगिरेरुत्तरप्रदेशे वर्तमानः 'तिब्बत' इति 'तिबेट' इति वा नाम्ना ख्यातो भूप्रदेश एव त्रिविष्टपमिति । तदेतद् आपातरमणीयम् । त्रिविष्टपशब्दस्य तथापभ्रंशसंभवेऽपि भूलोकादन्यत्रैव स्वर्गलोकस्य सहस्रधा प्रतिपादितत्वात् ॥ १२२ ॥

**यदृच्छया लब्धमथेच्छया वा**
**संवादि वृत्त्यन्तरमुद्दिशन्तः ।**
**परे द्विजाग्र्यान् द्रविणप्रसूनै-**
**रभ्यर्च्य जात्युत्तमतां भजन्ते ॥ १२३ ॥**

त्रयोदशेनैतदेव प्रपञ्चयति—**यदृच्छयेति** । न वा संज्ञासंवादमात्रेण न वा वृत्त्यन्तरसंवादमात्रेण शब्दो वा अर्थो वा अन्यथा कर्तुं शक्यः । निघण्ट्वादिवद् अतिपरोक्षवृत्तिः, परोक्षवृत्तिः,प्रत्यक्षवृत्तिर्वा शब्दोऽस्तु; तत्र लक्षणाव्यञ्जनातात्पर्याणां यथादर्शनं संक्रमो भवतु; तत्रापि सहस्रशाखोऽपभ्रंशोऽवतरतु; प्राकृतसहकृत्वरी देशी संगच्छताम्; उणादिकल्पनया वा, पृषोदरादिमर्यादया वा, नैरुक्तनिरुक्त्या वा अभिनवोन्मेषा शब्दार्थसृष्टिर्जायताम्; नहीयतापि अच्छिन्नपारम्परिकार्थभिन्नं वाक्यं प्रेक्षावत्प्रेक्षाधिरूढं स्यात् । अतएव '**सुभान अल्ला**' इति मूलकल्पितापि अल्लोपनिषत् नार्वाचीनास्वप्युपनिषत्सु परिगण्यते । तथा "औणादिक्–प्रत्यय किया डियाँ, डोलना, डुल्क । मा–धातु से साधलिया मियाँ, मोलना; मुल्क ॥" एवंविधा व्युत्पत्तयोऽपि नाद्रियन्ते । इहैष निष्कर्षः–संस्कृत-

शब्दो वा तदपभ्रंशात्मा देशिकशब्दो वा भवतु; तत्र " यवशब्दो दीर्घ-शूकेष्वेव प्रयुज्यते, न तु प्रियंगुषु; तथा–वराहः सूकरे एव प्रयुज्यते, न तु कृष्णशकुनौ " इत्येवमादाविव शास्त्रप्रसिद्धार्थप्रामाण्यमपेक्षते । अपभ्रंशेऽप्येवमवधेयम् । स्पष्टं व्युत्पादितोऽयमर्थो मीमांसासूत्रवृत्तिभाष्यवार्तिकादिषु आर्यम्लेच्छाधिकरणादिषु ( मी॰ द. १ । ३ । ८–९ ) ।

इत्थं च स्वस्वोत्कर्षान्वेषणप्रसङ्गे–'एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके कामधुग् भवति' इति **महाभाष्यस्य** पस्पशाह्निके (मुखबन्धे) लिखितया श्रुत्या, तथा ' समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शब्देन धर्मनियमः क्रियते ' इति फक्किकया अपभ्रंशादनपभ्रंशशब्दावश्यके महाजनक्षुण्णेनैव वर्त्मना गन्तव्यम् । अनपभ्रष्टशब्दघटितवाक्यादेव शक्तिप्रमया शाब्दबोधो जायते, अपभ्रष्टशब्देभ्यस्तु भ्रमादिति तार्किकाः । अपभ्रष्टशब्देभ्योऽपि शब्दशक्तिप्रमयैवेति वैयाकरणाः । तत्र च साधुशब्दानां धर्मविशेषजनकत्वनिरूपणात् तज्जनकतावच्छेदकतया साधुत्वजातिसिद्धौ साध्वसाधुवर्तमानकत्वादिना जातिसांकर्येऽपि फलबलेनादूषणमास्थेयमिति दिक् ॥ १२३ ॥

**प्रायेण पादोनशताब्दतः प्राक्**
**कायस्थनामाङ्कितजातिरेषा ।**
**आरोपिता पञ्चमवर्णशय्यां**
**संप्रत्यगात्क्षत्रिययोगि वर्म ॥ १२४ ॥**

चतुर्दशेन सुप्रसिद्धां जातिसंज्ञामुदाहरति–**प्रायेणेति** । अत्रैतत्सारम्–

' यौनादिसंबन्धनिरूपणेन
स्वः स्वो हि वर्गः पृथगेव येषाम् ।
ते त्वात्मवाञ्छासदृशं भवन्तु
द्विजातयो वाऽपरजातयो वा ॥ '

इहेदं विवेकाख्यानमापतद्दुःखाकरोति—

'अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥' ( सां. का. ५३ )

इति परमेश्वरसर्जनसाम्ये भौतिकसर्गे मनुष्येषु वर्णेषु द्विजातिष्वपि ब्राह्मणानामेव प्रातिस्विकं गोत्रमस्तीति धर्मशास्त्रकोलाहलः । तत्र विश्वामित्र-जमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपानां सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद् गोत्रमित्याचक्षते । एते भूरादिसप्तव्याहृतीनामृषयः । अन्यत्र—

'पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात् ।
तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ॥
पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्यात् ।
तत्र वसिष्ठं मुनिवरमुपाश्रितारुधन्ती साध्वी ॥'

( बृ. सं. सप्तर्षिचा. १३ । ५–६ )

इति सप्त । **मनुस्मृतौ—**

'अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन् प्रजानामसृजं महर्षीनादितो दश ॥
मरीचिमत्र्याङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥' ( १ । ३४–३५ )

इति दश प्रजापतयः । अत्र स्वस्ववर्गे आर्षं हानमुपादानं च दृश्यम् । वसिष्ठप्रभृतयो हि तार्त्मिकानां वसिष्ठप्रभृतीनां व्यापकास्तदधिष्ठातारो वा लब्धजन्मानो वैवस्वतमन्वादेर्विवस्वदादय इव स्वस्ववंशस्य प्रवर्तका बभूवुरित्यास्थेयम् । वेदघटितवसिष्ठादिपदार्थास्तु नित्या इत्यवोचाम ।

'तत्राष्टाशीतिसाहस्रमुनयो गृहमेधिनः ।
पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः ॥' ( याज्ञ. ३ । १८६ )

इत्यादि लिङ्गमपि । तत्र=पितृयाने । पितृयानस्तु अजवीथ्या अगस्त्यस्य चान्तरवर्तीति । अथ च क्षत्रविशां प्रातिस्विकं गोत्रं नास्तीति मिताक्षराकारप्रभृतयः । तथाचोच्यते–"क्षत्रियवैश्यौ तु पुरोहितगोत्रप्रवराविति

सर्वसिद्धान्तः । अथ स्वगोत्राज्ञाने उपनयने य आचार्यस्तद्गोत्रप्रवरैरेव कर्माणि विवाहाविवाहौ चेति । आचार्यगोत्राज्ञाने तु—'दत्वात्मानं तु कस्मैचित्तद्गोत्रप्रवरो भवेत् ।' इति ( धर्मसि.३परिच्छे. ) । शूद्राणां तु गोत्राभाव इति बहवः । अत्र पुरोहितः—' राजपुरोहितौ सायुज्यकामौ यजेयाताम् ' इत्यनेन ' स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसाकृते । ' इत्यनेन च, आचार्यस्तु—

' आचार्यस्त्वस्य यां जातिं विधिवद् वेदपारगः ।
उत्पादयति सावित्र्या सा सत्या साऽजरामरा ॥ ' ( मनु. २।१४८)

इत्यनेन च प्रतिपादितगौरवौ द्रष्टव्यौ । एतेन पुरोहिताचार्ययोर्व्युत्क्रमे कुलव्यत्यासो व्याख्यातः ।

इहेदमपि पर्यवेक्षणीयम्—प्रायेण क्षत्रविशामुपनयनक्रिया वैवाहिकविधिसंश्लिष्टैव दृश्यते । विवाहाभावे तु सा गुरुदेवतातीर्थसंनिधाने संगच्छते । एवं दुरवस्थयैव ' कलावाद्यन्तयोः स्थितिः' इत्युक्तिः पप्रथे । पुरा क्षत्रसाम्राज्ये कुरुपाण्डुसमयेऽनेकधा संश्लिष्टोऽपि त्रैवर्णिकसमाजो विश्लिष्टीभवन् प्राच्यावाच्यप्रतीच्योदीच्यमाध्यमिकादिसंज्ञेन वर्गप्रतानेन सहस्रधाजनिष्ट । शास्त्रेण संश्लेपसत्वेऽपि व्यवहारेण विश्लेषमर्यादयैव यौनभोजनमुख्यसंबन्धः प्रावर्तिष्ट । इत्थं चरमोऽपि वर्णः प्रावर्तत । कन्यादानप्रतिग्रहात्मा यौनसंबन्धो वैवाहिकेनैव विधिना व्यजायत । तत्र विवाहस्याष्टविधत्वे विवाह्यस्य चतुर्विधत्वेऽपि प्राधान्येन सर्ववर्णेषु सावर्ण्यघटितो मुख्यो ब्राह्मो विवाहविधिरेवाद्यावधि प्रवर्तते । इतरे देवादिधर्माणो विवाहविधयस्तु देशकालपात्रवैषम्यादुपशान्ताः । तत्र दैवार्षप्राजापत्या देवर्षिप्रजापतिसधर्मणामभावादेव विच्छिन्नाः । आसुरादयस्तु असुरगन्धर्वराक्षसपिशाचप्रकृतितया निराकृता आकलनीयाः । तदानीं प्रभाववद्भिः कैश्चिदादृता अप्यासुरगान्धर्वराक्षसपैशाचकल्पा इदानीं प्रेक्षावद्भिरवहेलिता इति तात्पर्यम् । तथाच मनुराह—

'ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः॥' ( ३।३९ ) इति
'इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥'
( ३।४१ ) इति च ॥

एवं कामतः प्रवृत्तानामसवर्णापरिणयोऽपि मूर्धावसिक्तादिसंकीर्ण-वर्णप्रयोजकत्वाद् दूरदर्शिभिरुपेक्षितः ; तत्र शूद्रापरिणयस्तु द्विजन्मनां पातित्यहेतुत्वेन दर्शितः । तथा च **मनु**राह—

"हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या, तदपत्यतया भृगोः ॥"
( ३। १५-१६ ) इति ।

"यदुच्यते द्विजातीनां शूद्राद् दारोपसंग्रहः ।
नैतन्मम मतं, यस्मात् तत्रायं जायते स्वयम् ॥"
(याज्ञ. १ ।५६) इति च ।

यच्च कतिपये स्वस्य मूर्धावसिक्ताम्बष्ठप्रभृतिं जातिं परिवर्तुमशक्नुवानाः संप्रति वैजिकानुरोधेन ब्राह्मणादिजातिं प्रख्यापयन्ति, तद्धि संज्ञाकरण-सामर्थ्यादितो निःसारम् । यदपि प्राक्कालिकमवरं यौनसंबन्धं दृष्टान्तयन्ति, तद्धि काचित्कं कारणगौरवेण संजातं मूर्धावसिक्तादिव्यवहारासंस्पृष्टं च परीक्षणीयम् । नहि **व्यास**दृष्टान्तेन कानीनाः पाङ्क्तेयाः, **पाण्डव**-निदर्शनेन कुण्डा राज्यदायादाः, **द्रौपद्यु**दाहरणेन स्त्रियः पञ्चपतिकाश्च भवितुमर्हन्ति । अतएवच परम्परया शब्दार्थाभ्यां वेदान् विदद्भिः पर-मार्थतो वर्णाश्रमव्यवस्थासु नियन्त्रितसंस्थासु प्रचरद्भिरद्य चौरिकानृतमाया-भिर्धर्मस्य ह्रासं विचारयद्भिरनुभवद्भिश्च शिष्टैरौरसपुत्राभावे दत्तकविधानेन

पारम्परिकी विभूतिः प्रतिष्ठाप्यते। न हि. क्वचिन्नैयोगिकी कथा क्रियते कार्यते वा। नियोगसुहृत् पौनर्भवघटकः पुनर्भूसंबन्धस्तु क्वाचित् क्वचिच्छूद्रवर्णेष्वेव परिणीतानिःधनोत्तरं क्रियते। तत्र नियोगः—

'अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति॥'

(मनु. ९। ६६)

इत्येवं निन्दितोऽपि यावन्नियमेन पुत्रोत्पादने शक्तिरासीत्तावदेव पशुधर्मवैलक्षण्येन प्रववृते, नोत्तरम्। वेदेषु गृह्यसूत्रेषु चालब्धप्रवेशोऽप्येष नियोगो यावत्प्रभावं प्रवृत्त्य निवृत्त इति तत्त्वम्। पुनर्भूसंबन्धस्तु शुष्केष्टिवत्। न तत्र कश्चिन्मन्त्रो नियत इति रहस्यम्।

आर्यावर्ते हि पुरापि मनागपि स्त्रीदोषाभासोऽपि मर्यादापुरुषोत्तमैरसह्य एवाभूत्। तथाच पठ्यते—

'कृतसीतापरित्यागः स रत्नाकरमेखलाम्।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्॥'

(रघुवं. १२। १) इति।

एवमाद्याचारादेवायमार्यावर्तः पुण्यभूमिरिति कीर्त्यते, पुण्यक्षेत्रमिति संकल्प्यते। यद् यत्रोप्तं प्ररोहति तत् तस्य क्षेत्रं भूमिर्वा व्यपदिश्यत इति दृश्यम्।

अथावसरप्राप्तं भोजनम्—भोजनव्यवहारो ब्राह्मणानां तद्याज्यानां क्षत्रियाणां वैश्यानां च परस्परमासीदिति श्रौतसमाचारात्पुराणेतिहासाच्च लभ्यते। स च **परीक्षितः** क्षेमकान्तं, बृहद्बलात् सुमित्रान्तं, जरासंधाद् रिपुंजयान्तं च यावन्निश्शङ्कं प्राचारीत; तदुत्तरमपि स्यात्। किं तावता, संप्रति तु प्रायेण विस्मृतोपनयनसंस्काराणां तेषां याजकानां च मिथो भोजनव्यवहारः सर्वत्र लुलोप।

इह वर्णजातिसंबन्धदर्शनार्थमुत्तममध्यमाधमकष्टजीवनैरस्मिन्मानुष्यकव्यव-

द्वारो निरूप्यते—तत्र पाचका **अर्याः** ( वैश्याः ) विज्ञायन्ते । यत एषा-मिमान्यवधानानि—" रसवत्यां तु पाकस्थानमहानसे । पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवाः ॥ आरालिका आन्धसिकाः सूदा औदनिका गुणाः । आपूपिकः कान्दविको भक्ष्यकारा इमे त्रिषु ॥ " ( अमरसिं. वैश्यव. २७-२८ ) । अन्धः, ओदनः=भक्तमिति यावत्; शिल्पमेषां ते । 'शिल्पम्' ( ४।४।५५ ) इति ठक् । सूदन्ति छागादीनिति सूदाः, ' षूद हिंसायाम् ' इति तद्व्याख्यातारः । एवम्—अपूपाः ( पिष्टकादीनि ) पण्यमस्य । ' तदस्य पण्यम् ' ( ४ । ४ । ५१ ) इति ठक् । कन्दौ स्वेदन्यां ( कडाहीति प्रसिद्धे ) संस्कृतं कान्दवम् । ' संस्कृतं भक्षाः ' ( ४ । २ । १६ ) इत्यण् । तत् पण्यमस्य । ठक् । भक्षं करोति । कर्मण्यण् ॥ इह ओदनः, सूपः ( दालिः ) कृशर, पायसम् ( क्षीरिका ), मण्डः, रोटिका ( करपट्टिका ), अङ्गारकर्कटी, शुद्धामिषम्, इत्येवमादिर्जलपाकः । शष्कुली, पूरी, पर्पटः, बटकः, पुष्पिका, अपूपः, मोदकः, कुण्डलिनी, इत्यादिः स्नेहपाकः । सक्तुः, चिपिटः, लाजाः, धाना, शिम्बा इत्यादिरग्निपाकः । एवं कन्द-पत्र-पुष्प-फलपाकोऽपि द्रष्टव्यः।

' भर्जनं तलनं स्वेदः पचनं क्वथनं तथा ।
तान्दूरं पुटपाकश्च पाकः सप्तविधो मतः ॥ ' ( क्षेमकुतूह. )

आपदि क्षत्रिया ब्राह्मणाश्च पाचकाः । अतएव मध्यमकौन्तेयेन विराटस्यावासे वल्लवत्वेन समयोऽतिवाहित इति **भारते** प्रसिद्धम् । इदानीं तु ब्राह्मणा एव पाचकतया आद्रियन्ते । परं कतिपयैः शूद्रैर्नेति विशेषोऽपि ।

पालकाः **क्षत्रिया** विज्ञायन्ते । यत एषु शतरूपाजानिं स्वायंभुवं **मनु**मारभ्य चाहमान-**पृथ्वीराज**पर्यन्तं सम्राजः स्मर्यन्ते । मनोः सुतः **प्रियव्रतः** सप्तधा भूगोलं विभज्य स्वस्य सुताय आग्नीध्राय जम्बूद्वीपं, मेधातिथये प्लक्षद्वीपं, वपुष्मते शाल्मलिद्वीपं, ज्योतिष्मते कुशद्वीपं, द्युति-

मते क्रौञ्चद्वीपं, भव्याय शाकद्वीपं, सवनाय पुष्करद्वीपं च प्रददौ । तथा-च पठ्यते **विष्णुपुराणे**—

'प्रियव्रतो ददौ तेषां सप्तानां मुनिसत्तम ! ।
विभज्य सप्तद्वीपानि मैत्रेय ! सुमहात्मनाम् ॥'

(द्वितीयांश. १ अ. ११ श्लो.)

प्रियव्रतस्यैव भ्रातुष्पुत्र औत्तानपादिर्ध्रुवो ध्रुवेन्द्र इति । अथच यस्य स्तोत्राय **सूतमागधौ** यज्ञे जज्ञाते, स वैन्यः **पृथुर्भुवं** मनीषितं दुदोह । इहेदमुच्यते—

'प्राणप्रदाता स पृथुर्यस्माद् भूमेरभूत्पिता ।
ततस्तु पृथिवीसंज्ञामवापाखिलधारिणी ॥'

(विष्णु पु. प्रथमांश. १३ अ. ८९ श्लो.)

अपि च—

'अतोऽयमश्वः कपिलानुकारिणा
पितुस्त्वदीयस्य मयापहारितः ।
अलं प्रयत्नेन तवात्र मा निधाः
पदं पदव्यां सगरस्य संततेः ॥'

(रघु. ३ सर्ग ५० श्लो.)

इत्येवंजातीयकस्य दीर्घदीर्घतरव्यापारस्य कथाशरीरस्याकलनात् क्षत्रियाणां तत्पाल्यस्य सकलस्य भूगोलस्य चावासभवनस्येव भूयान् संबन्ध इति । याजका **ब्राह्मणा** इत्यत्रावधि न मानमपेक्षते । एषु देवलका अपि । पठ्यते हि—'रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग् धिक्' (पां. सू. ५ । ३ । ९९) । ब्राह्मणानां यज्ञायुधेषु च क्षत्रियाणामन्तःपुरसहाये लेख्यकर्मणि हस्त्यश्वरथे च वैश्यानां महानसीयोपस्करेषु च शूद्राणां तदीयविज्ञानानां च यथायथमवसर आपततीति सूक्ष्मेक्षिकया तावद् व्यक्तम् । यत्तु पुनः संप्रतिपत्तिगौरवाद् वर्णस्य

जातेर्वृत्तेश्च पारम्पर्यभाजोऽन्यथा प्रादुष्करणं तन्नूतनविज्ञानोन्मीलितैव समस्येति पुरस्तात् । पुरातु प्राणसंकटेऽपि—

'ब्रह्महत्याकृतं तापं हृदयादपनीयताम् ।
न द्विजातिरहं राजन् ! मा भूत्ते मनसो व्यथा ॥
शूद्रायामस्मि वैश्येन जातो नरवराधिप ॥'

( वाल्मी. अयो. कां. ६३ स० ५०-५१ श्लो. )

इत्येवंप्रायो व्यवहार आसीत् । अन्यत्रापि कथ्यते—

"तपो न कल्को,ऽध्ययनं न कल्कः,
स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्क-
स्तान्येव भावोपहतानि कल्कः ॥"

( महाभा. आदि. अनुक्रमणी. २७५ श्लो. )

एतेन पुराणाचार्याणां मानसिको भावो व्याख्यातो भवति । अहो प्राचामाकूतम् ॥ १२४ ॥

**अहो वणिग्वृत्तितया प्रतीता**
**चिराय या दूसरजातिरग्र्या ।**
**प्रतिग्रहादीन्प्रतिषेधयन्ती**
**सा सांप्रतं ब्राह्मणशर्म लेभे ॥ १२५ ॥**

पञ्चदशेन देशीं जातिसंज्ञामुदाहरति—**अहो** इति । अत्र पुनरेतत्सारम्—

'उच्चैरिदानीं जनतेष्टजातिं
वृत्त्या तथा व्याकरणेन विन्देत् ।
परीक्ष्यते केवलमत्र सुज्ञै-(कैश्चित्)
र्निर्बाधलोकव्यवहारसिद्धिः ॥'

यदि पुनः कालमहिम्ना स्वः स्वो हि वर्गः पृथगेव परिणयादिना

प्रवर्तते, राजा धार्मिकीषु संस्थासूदास्ते, तर्हि यो वर्गो यस्मै जातिलाभाय स्पृहयति स तेन संगच्छताम्। किमियता पर्यनुयोगः शाम्यति ? यथा खलु निर्मीलितायां जामदग्न्यपरशुधारायां कान्दिशीकैः क्षत्रियैर्यथापूर्वं स्वधर्मो भेजे कतिपयैः पुनर्बहुतिथेऽपि काले गमिते नेति क्षत्रियतासाधनायां हेत्वाभासः। इहाभिनवजातय इव तत्पोषकाः पुष्टा अपि दुर्बला मन्तव्याः। यस्मात् किंगोत्रः किंप्रवरः किंशाखो भवान् इतिवत् किंजातिरित्यपि यथाज्ञानं पारम्परिकमेव न्याय्यं मन्यन्ते दीर्घदृशः। इह किंचिच्चातुर्वर्ण्यस्य प्रधानावासश्चिन्त्यते—

" यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत्।
सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः॥
तस्याः पार्श्वगताश्च ये जनपदा व्यक्तादुदीच्यां स्थिता-
स्ते भूदेव-महर्षि-दैवतकुलैः क्रान्ताः, परे चापरैः॥ "
" लक्ष्या वेदपुराणेषु गोलाकृतिरियं क्षितिः।'
यतः षाण्मासिकं देवासुराणामहरिष्यते॥ "
" मन्यते दर्शनात् साम्यं, वैषम्यमुदयाद् रवेः।'
निराजो रूपविस्फाराद् भूवोऽनन्ताचलादिता॥ "
" शतं लक्षं सहस्रं च कोटिर्योजनमप्यथ।
शब्दाः श्लिष्टाश्च विज्ञेया विश्वरूपनिरूपणे॥ "
" सुमेरोर्ब्रह्मवंशस्य प्ररूढस्यावरोहणात्।
लम्बांशेषु विवर्तन्ते दैवतर्षिद्विजादयः॥ "

सौम्यभुवनमण्डलाधोवर्तिनि सुमेरौ लम्बांशाः=०। कुरुक्षेत्रे लम्बांशाः=६०। उज्जयिन्यां लम्बांशाः=६६। लङ्कायां लम्बांशाः=९०। तत्र स्वायंभुवस्य मनोः पौत्रेण औत्तानपादिना सुनीतिगर्भजेन उन्नतस्थानं वाञ्छता ध्रुवमण्डलमासादितम्। तच्च सुमेरुमधितिष्ठत एव सर्वोन्नतं भवितुमर्हति। सुमेरुश्च—'द्रुहिणजन्मकुपद्मजकर्णिकेति च पुराणविदोऽमुमवर्णयन्' इति।

'अहोऽस्य तपसो वीर्यमहोऽस्य तपसः फलम्।
यदेनं पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः॥'

(विष्णुपुरा. प्रथमांश. १२ अ. ६६ श्लो.)

इत्यौशनसं वाक्यं च। एवमादिना पुराणवर्त्मनाप्यार्याणामावासः सुमेरुपूर्वक इति सिध्यति। सुमेरौ दिनमानम्–१८२दिवसाः, एत एव रात्रिमानम्। संध्यासमयः=५३दिवसाः। लङ्कायां दिनमानम्=३० घटिकाः, एता एव रात्रिमानम्। संध्यासमयो महान्=३। १० लघुश्च=३। ० घट्यादिकः। मध्ये ४५ दिनमानं महत्=३८। ३६ लघुच=२१। २४ घट्यादिकम्। संध्यासमयो महान्=६। ४० लघुश्च ४। १६ घट्यादिकः। इत्थं यत्र रात्रेराधिक्यं तत्र तावत् संध्याप्रकाशेनारुणोदयेनापि व्यवहारो निर्वहति। सुमेरुवासिनां तु संध्याप्रकाशाद्याशयेन मकरकर्कटसंक्रमाभ्यामहोरात्रारम्भं वर्णयन्तो रात्रिदिनशेषाभ्यामेव दिनरात्रिप्रवृत्तिं कार्यगौरवादाचक्षते संहिताध्येतारः संहिताकृतः। तदेतदद्दृष्टप्रायानुसरणं युगमन्वन्तरावधिकं धावति। संध्याकाल एवासौ उषा; या हि वेदेषु बहुधा वर्ण्यते। उष दाहे, दाहस्तु तदानीं प्रवर्तमानस्य रात्रितमस इति। तत्रेयं दिक्—

'तानीदऽहानि बहुलान्यासन् या प्राचीनमुदिता सूर्यस्य।
यतः परिजार इवाचरन्त्युषो दद्दते न पुनर्यतीव॥'

(ऋ. सं. ५ अ. ५ अ. २३ व.)॥ १२५॥

**उत्पद्यतां नाम विलीयतां वा**
**नवा नवा जातिरहो तया किम्।**
**न यत्र पारम्परिकी प्रतीतिः**
**क्रियापि सा जातिरनर्गला किम्॥ १२६॥**

षोडशेनाभिनवजातिवर्णपरिणाममाह—**उत्पद्यतामिति**। एकमतीभवन् श्वपाकोऽपि यद्यात्मानं द्विजन्मानं शंसेत्तर्हि कः प्रतिषेद्धा?

वृत्तेर्विचालितत्वाद् उच्चावचेषु लोकेषु दृष्टान्तोद्भावनस्य सुलभत्वाच्च । अत्र भवभूतिपथानुवर्ती राजशेखरोऽपि स्निह्यति—

'अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः ।
श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥'

इह प्रागभिहितं संहृत्यापि पाठ्यम्—

'उच्चैरिदानीं जनतेष्टजातिं
वृत्त्या तथा व्याकरणेन विन्देत् ।
यौनादिसंबन्धनिरूपणेन
स्वः स्वो हि वर्गः पृथगेव यस्याः ॥ १२६ ॥'

**यावन्न वर्णाश्रमवर्त्मरक्षि**
**क्षात्रं कुलं दुर्बलशक्ति जज्ञे ।**
**तावत्सुखं धर्मवृषोऽयमुच्चै-**
**रुद्योतमानश्चरति स्म लोके ॥ १२७ ॥**
**कालोऽयमुद्वृत्त एव पृथ्वी-**
**राजावसानोत्तरमुज्झितश्रीः ।**
**यत्रोत्पथाचारमतान्तरोघै-**
**रुन्मूल्यते वैदिकशाखिमूलम् ॥ १२८ ॥**

द्वाभ्यामन्तरङ्गं शासनं स्मारयति—यावदिति ।

'वृषो हि भगवान् धर्मः' ( मनु. ८ । १६ )

"यः पुरुषं निःश्रेयसेन संयुनक्ति, स धर्मशब्देनोच्यते."

( मीमांसाभाष्यम्-१ । १ । २ )

"श्रेयो हि पुरुषप्रीतिः, सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या, तस्मात् तेष्वेव धर्मता ॥" ( १९१ )

( मीमांसावार्तिकम् )

"तस्मात् तेष्वेव धर्मत्वं 'धर्माणी'ति च दर्शनात् ।
लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥" ( ११४ )
( मीमांसावार्तिकम् )

शुकं प्रति व्यासश्च—

'संचिन्तितश्चाप्युपसेवितश्च
दृष्टः श्रुतः संकथितः स्तुतो वा ।
सर्वाणि पापान्यपहन्ति धर्मो
निशातमांसीव सहस्ररश्मिः ॥'

( महाभा. शान्ति. ३२२ अ. १२ श्लो. )

'पृथ्वीराजस्यावसानम् ( संवत् ११६१ ) ॥ १२७–१२८ ॥

**जातिस्तदुत्कर्षविधिर्द्वयीति**
**श्रौती न लौकिक्यथ शासनेन ।**
**तत्रोदयो युज्यत एव किंतु**
**नहीच्छया सिध्यति भागधेयम् ॥ १२९ ॥**

जातिपरिवर्तनं दर्शयति—**जातिस्तदुत्कर्षविधिरिति** । जाति-शब्दो बहुधा व्याख्यातः । इहेदमप्याकलनीयम्—यथा खलु स भूरिति व्याहरन् भुवं ससर्ज, तद्वद् यः कश्चिन्माणवको ब्राह्मणादिर्न सृज्यते, किं तु यथोक्तब्राह्मणादिमातापितृभ्यां लब्धजन्मैव स च ब्राह्मणादिः सृज्यते । जन्मना प्राप्तप्रतिष्ठैव जातिः कर्मणा समुन्मीलिता वृत्त्या विशिष्यमाणा जायत इति तत्त्वम् । शरीरारम्भो हि—

"आहुत्याऽऽप्यायते सूर्यः, सूर्याद्वृष्टि,रथौषधिः ।
तदन्नं रसरूपेण शुक्रत्वमधिगच्छति ॥
स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते ।
पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः ॥" (याज्ञ. ३।७१-७२)

इत्येवंलक्षणः । तत्र च सति प्रतिबन्धकाभावे शुक्रशोणितद्वारेण गुणा दोषाश्चानुप्रविशन्ति । तथाच पठ्यते **सुश्रुतसंहितायां** शारीर-

स्थाने—

'आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ॥
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥'

इत्येवंप्रभृति । यदपि—

"जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा ।
व्यत्यये कर्मणां साम्यं, पूर्ववच्चाधरोत्तरम् ॥" ( याज्ञ. १ । ९६ )

इत्युक्तं तत्र **मिताक्षरा**कारा आहुः—जातयो मूर्धावसिक्तादयः तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिः जात्युत्कर्षः, युगे जन्मनि सप्तमे पञ्चमे अपिशब्दात् षष्ठे वा बोद्धव्यः । व्यवस्थितश्चायं विकल्पः । व्यवस्था च—ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेन ऊढा दुहितरं कांचिज्जनयति, सापि ब्राह्मणेन ऊढा अन्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । ब्राह्मणेन वैश्यायामुत्पादिता अम्बष्ठा, सापि अनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति । मूर्धावसिक्तापि अनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति । एवमुग्रा क्षत्रियेण ऊढा माहिष्या च यथाक्रमं क्षत्रियं षष्ठं पञ्चमं जनयति । तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम् ।

किं च । कर्मणां वृत्त्यर्थानां व्यत्यये, यथा ब्राह्मणो स्ववृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन् वैश्यवृत्त्या, तयाप्यजीवन् शूद्रवृत्त्या । क्षत्रियोऽपि स्वकर्मणा जीवनार्थेन अजीवन् वैश्यवृत्त्या, शूद्रवृत्त्या वा । वैश्योऽपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः । तस्मिन् व्यत्यये सति यदि आपद्विमोक्षेऽपि तां वृत्तिं न परित्यजेत्, तदा पञ्चमे षष्ठे सप्तमे वा यस्य हीनवर्णस्य कर्मणा जीवेत्, तेन साम्यम् अर्थात् तत्समानजातित्वं भजेत् । तद्यथा—ब्राह्मणः शूद्रवृत्त्या जीवन् तामपरित्यजन् यं पुत्रमुत्पादयेत्, सोऽपि तयैव वृत्त्या जीवन्–पुनरप्येवं परम्परया सप्तमे जन्मनि शूद्रमेव जनयेत् । वैश्यवृत्त्या जीवन् षष्ठे वैश्यम्, क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियं । क्षत्रियोऽपि

शूद्रवृत्त्या जीवन् षष्ठ शूद्रम्, वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम्। वैश्योऽपि शूद्रवृत्त्या जीवन् तामपरित्यजन् पुत्रपरम्परया पञ्चमे शूद्रं जनयेत्।

किं च। मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैः, अम्बष्ठायां वैश्यशूद्राभ्यां, निषाद्यां शूद्रेण चोत्पादिताः प्रतिलोमजाः=अधरे। मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेन, माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण, करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिता अनुलोमजाः=उत्तरे। असन्तः सन्तश्च स्युरित्यर्थः।

इयमेव जातिपरिवर्तनशैली **मनुना** दशमेऽध्याये स्मर्यते—

"शूद्रायां ब्राह्मणाज्जातः, श्रेयसा चेत् प्रजायते।
अश्रेयान् श्रेयसीं जातिं गच्छत्या सप्तमाद् युगात्॥ ६४॥
शूद्रो ब्राह्मणतामेति, ब्राह्मणश्चेति शूद्रताम्।
क्षत्रियाज्जातमेवं तु विद्याद् वैश्यात्तथैव च॥ ६५॥"

प्रकरणाद् ब्राह्मणोऽत्र ब्राह्मणाच्छूद्रायां जातो निषादो विवक्षितः। इत्थं च मनुयाज्ञवल्क्यादिशास्त्रेभ्यो यस्य कस्यापि वर्णस्य जात्युत्कर्षापकर्षौ जन्मान्तरापेक्षिणाविति स्पष्टं विज्ञायते। तत एव च—'धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ। अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ।' इत्येवमादि प्रतिपाद्यते। धर्माधर्मचर्ये अपि नैच्छिक्यौ 'यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः।' (२।७) इत्यादिस्मरणात्। प्रागपि यथादर्शनं निरूपितोऽयमर्थो विभावनीयः।

इहेदमपि पर्यवेक्षणीयम्—स्वरूपाधायकम्, उत्कर्षाधायकम्, अपकर्षाधायकं चेति त्रिविधं कर्म। तत्र प्रथमम्—

'गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥' (२।२७)

इत्यनेन; द्वितीयम्—

'स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥' (२।२८)

इत्यनेन च **मानवेन** वचनेन व्याख्यातम्। तृतीयं तु व्याख्यात-चरम्। एवमादिना शुक्रशोणितपुरस्कृतैव ब्राह्मणत्वादिजातिर्लभ्यते। तस्मादेव च—'ब्राह्मण्यां ब्राह्मणेनैव उत्पन्नो ब्राह्मणः स्मृतः।' इति **हारीत** आहस्म (१।१५)। 'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते' **इत्यत्रिश्च** (१।३८) अथ श्रुतिरप्यनुग्राहिका—"तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" (छान्दोग्य• ५।१०।७) इत्येवंप्रभृति ॥ १२९ ॥

**न मन्यते पार्थिवशासनं यः**
**पदे पदे दुःखमुपैति सोऽत्र ।**
**यः स्यान्न विश्वेश्वरवाक्यगामी**
**सोऽत्यन्तदुःखात्ययमर्जयेत् किम् ॥ १३० ॥**

उक्तार्थे दृष्टान्तमुपन्यस्यति—**न मन्यत इति**। दुःखनिवृत्त्यर्थं हि प्रयत्नः, स परमेश्वरवैमुख्ये कथं फलेत् ॥ १३० ॥

**ये केऽपि शिल्पेषु न सन्ति सुज्ञा-**
**न वा पराराधनसावधानाः ।**
**तेऽप्यङ्ग ! निष्कारणबन्धुबुद्ध्या**
**हितोपदत्त्यै बहु बोधनीयाः ॥ १३१ ॥**

**न सा क्रिया यत्र न वस्तु रम्यं**
**न वस्तु तद्यत्र न रागबन्धः ।**
**रागः स नो यत्र न गुप्तवित्त-**
**मुद्घाट्यते द्राग्भवदर्पणाय ॥ १३२ ॥**

वैदेशिकं शिल्पमवेक्ष्य कोऽपि
चिन्नीयतां नाम ततोऽपि भूयः ।
युष्मासु सारं ननु जाग्रताङ्ग !
किं विश्वकर्मान्वयजा न यूयम् ॥ १३३ ॥
तत्तत्कलाकौशलमांसलेषु
कार्येषु कार्यालययोजनेषु ।
द्वीपान्तरोत्थानपि सुप्रयोगा-
न्प्रचारयन्तो विलसन्तु पज्जाः ॥ १३४ ॥

इति पादचतुर्विंशतिका ।

इदानीं चतुर्भिः शिल्पकौशलप्रवृत्तिं निरूपयन्नाह—**ये केऽपीति**। शिल्पं वृत्तवर्तमानवर्तिष्यमाणलक्षणं नानाविधम्, यत्संबन्धात् शिल्पिनो भवन्ति । तेषु बहवो विश्वकर्मणः शूद्रायां जाता इति पौराणिकाः । तथाच पठ्यते **ब्रह्मवैवर्त्तपुराणे** ब्रह्मखण्डे दशमाध्याये—

'विश्वकर्मा च शूद्रायां वीर्याधानं चकार सः ।
ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः ॥
मालाकारः कर्मकारः शङ्खकारः कुविन्दकः ।
कुम्भकारः कंसकारः षडेते शिल्पिनां वराः ॥
सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च ॥
पतितास्ते ब्रह्मशापादयाज्या वर्णसंकराः ॥' ( १९-२१ श्लो. ) इति ।
'स्वर्णकारः स्वर्णचौर्याद् ब्राह्मणानां द्विजोत्तम ! ।
बभूव सद्यः पतितो ब्रह्मशापेन कर्मणा ॥
सूत्रधारो द्विजानां तु शापेन पतितो भुवि ।
शीघ्रं च यज्ञकाष्ठानि न ददौ तेन हेतुना ॥
व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा ।
पतितो ब्रह्मशापेन ब्राह्मणानां च कोपतः ॥

कश्चिद् वणिग्विशेषश्च संसर्गात् स्वर्णकारिणः ।
स्वर्णचौर्यादिदोषेण पतितो ब्रह्मशापतः ॥ '

( ६२-६४ श्लो० )

इति च । अन्ये च बहवः शिल्पभेदास्तद्वंशाश्च शिल्पिभेदा आकर-ग्रन्थेभ्य आकलनीयाः । शिल्पमित्युपलक्षणम्, तेन जीवनोपयोगिनो बहुस्वरूपा भावा विभावनीयाः ॥

**विश्वकर्मान्वयजा इति** । ' द्वौ प्रोक्तौ विश्वकर्माणौ मयस्त्वष्टा च योगवित् । ' विश्वं कर्म अस्माद् अस्य वेति । अन्वयेन विद्यावंशोऽपि सूचित इति ॥

**द्वीपान्तरोत्थानिति** । केतुमालसिद्धपुरादिसमुद्गतान् । विश्व-कर्मान्वयजो हि विश्वकर्मकलनाय विश्वभ्रमणशीलः स्यादेव पादगुणा-रब्धः पादज इति शिवम् ॥ १३१–१३४ ॥

इति शूद्रशिक्षीया वेददृष्टिः ।

## अथ त्रिवर्गशेषम् ।

—⁂(०)⁂—

प्रायो भवन्तः स्वयमात्मनीन-
कर्तव्यकर्मस्वधिरूढसत्त्वाः ।
यद् भ्रश्यते भ्रान्तिवशेन शुद्धा-
स्तदर्थपूत्यै हितघोषणेयम् ॥ १३५ ॥

यद् यद् भवेद्भारतभूतिहेतु-
स्तत्तद् विधेयं नियतं विधेयम् ।
अये वृथालापकथाप्रथाभि-
र्न यापनीयः समयो ह्यमूल्यः ॥ १३६ ॥

यथाकथंचिद् व्यवहारवृद्ध्यै
साध्यानि मित्राणि बहूनि तावत् ।
नायं स कालः परिभाव्य यत्र
मैत्रं परीक्ष्येत सुवर्णतत्त्वम् ॥ १३७ ॥

ये शुद्धिभावं खलु दर्शयन्ति
न सन्ति चान्तःकरणेन शुद्धाः ।
ते कार्यकाले समुपार्जितानि
वैरस्यपूयानि समुद्गिरन्ति ॥ १३८ ॥

उद्योगशस्त्रप्रणयी प्रमृष्ट-
धीदर्पणालोकितकार्यकायः ।
बम्भ्रम्यमाणो वसुधान्तरेषु
समीहितार्थान्क्रमशोऽभ्युपैति ॥ १३९ ॥

**उद्योगयन्त्रे परिवर्तितेऽपि**
**चेद्दैवयोगान्न फलोदयः स्यात् ।**
**तथापि यत्नः करणीय एव**
**प्रारब्धशव्याशामितक्रमेण ॥ १४० ॥**

**इति त्रिवर्गशेषम् ।**

इदानीं षड्भिः साधारण्येन कर्मारण्यविहारिणः पुरुषसिंहान् प्रति प्रार्थयते—**प्रायो भवन्त इति** । भातेर्डवतुः । अपिचेयं हितघोषणा—

"ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥"

( भारतसावित्री, स्वर्गारो. १ । ६२ )

'सत्यस्कन्धस्तरुणकरुणापूर्णपूपासिक्तः
क्षान्तिच्छायः शुभमतिलतालङ्कृतः शीलमूलः ।
भूयात् सत्त्वप्रसवविलसत्पल्लवः पुण्यभाजां
धर्मः प्रोद्यत्कुशलकुसुमः श्रीफलो मङ्गलाय ॥'

( क्षेमेन्द्रः )

अयि धर्मिन् ! धर्मपदश्रवणादेव तावन्न भेतव्यम्, बोद्धव्यमपि; रामरावणपथन्यायेन उचितकर्मैव धर्म इति । किं पल्लवितेन ॥

**भारतेति** स्वस्य जन्मभुवः परिग्रहार्थम्, सा हि परजन्मभुवा आश्लिष्टेव, तत एवानुबन्धितया स्वजन्मभूपुरस्कारेण सकलाया भुवो हितैषिणा भवितव्यम् । तत्र कर्तव्यस्य गौरवाद् व्यर्थं समयस्य यापना नो श्रेयसीति । किं बहूक्त्या, वेदाङ्गोपाङ्गविज्ञानविपक्षभूतं काव्यादिकमपि नादरणीयम् । उक्तं च शिल्हणेन—

'यदा प्रकृत्येव जनस्य रागिणो
भृशं प्रदीप्तो हृदि मन्मथानलः ।

तदात्र भूयः किमनर्थपण्डितैः
कुकाव्यहव्याहुतयो निवेशिताः ॥ ' इति ।

नीलकण्ठोक्तिपरिष्कारेण मयाप्युच्यते—

' वर्णयन्ति वृथावर्ण्यान् वाणीं लब्ध्वापि ये विदः ।
लब्ध्वापि कामधेनुं ते लाङ्गले विनियुञ्जते ॥ ' इति च ।

**मैत्रं** सुवर्णतत्त्वमित्यत्र सुवर्णपदस्य श्लिष्टत्वाद् दृष्टान्तोऽप्यवतारयितुं सुशक इति ॥

**ये शुद्धिभावमिति** स्वभावाख्यानम् । ततो हि वैरस्यपूयपूरप्रथनेऽपि स्वभावस्य कालस्य च महिमानं प्रेक्षमाणेन संतोष्टव्यमेव तावद् उपेक्षावृत्तिस्मरणात् । तथाच सूत्रितं भगवता **पतञ्जलिना**— ' मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखप्रियाप्रियाणां भावनातश्चित्तप्रसादनम् ' (यो. द. १ । ३३) ॥

**उद्योगशस्त्रप्रणयीति** पौरुषप्रपञ्चार्थम् । इह ' अङ्गनवेदी वसुधा—' इति प्रागुक्तमपि न विस्मर्तव्यम् ॥

**उद्योग** एव फलाख्यवस्तूत्पादकत्वाद् यन्त्रम्, तस्मिन् परिवर्तितेऽपि तदवयवानामावापोद्वापाभ्यां संस्कृतेऽपि । किं वा, ' परिचालितेऽपि ' इति पठनीयम् । चेद् दैवयोगाद् दुर्दैवसंयोगात्, दैवं तु—

' अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ '
(गी. १८ । १४)

इत्युक्तम् । फलोदयो न स्यात्, तथापि यत्नः=प्रयत्नः, करणीयः= संपादनीय एव । " यत्ने कृतेऽपि नहि सिद्ध्यति, कोऽत्र दोषः ?" इत्युक्त्या दोषलेशमप्यन्विष्य तन्मार्जनाय प्रयासो विधेय इति तत्त्वम् । इत्थमनुत्साहप्रसङ्गे क्लिलक्षणेन यत्नः, कर्तुं शक्यत इति चेत्—' प्रारब्धशय्याशमितक्लमेन ' इति ।

वासिष्ठास्त्वेवं मन्यन्ते—

“ सर्वमेव हि संसारे पौरुषादेव लभ्यते ।
न तादृक् किंचिदप्यत्र यदलभ्यमुदीर्यते ॥
शास्त्रोपदिष्टमार्गेण यद् देहेन्द्रियचेष्टितम् ।
तत्पौरुषं तत्सफलमन्यदुन्मत्तजृम्भितम् ॥
प्राक्तनाद्यतने गीते पौरुषे पुरुषर्षभ ! ।
वृद्धो यूनेव पूर्वं हि परेण परिभूयते ॥
यत्नवद्भिर्दृढाभ्यासैः प्रज्ञोत्साहसमन्वितैः ।
गिरयोऽपि निगीर्यन्ते कैव प्राक्पौरुषे कथा ॥
पौरुषेण प्रयत्नेन त्रैलोक्यैश्वर्यभास्वराम् ।
काश्चित् प्राणिविशेषो हि विन्दति स्म महेन्द्रताम् ॥ ’
‘प्रवृत्तिरेव प्रथमं यथान्यायं प्रवर्तिनाम् ।
प्रभेव वर्णभेदानां साधनी सर्वकर्मणाम् ॥
मनसा साध्यते यच्च यथान्यायं न कर्मणा ।
तदुन्मत्तक्रियाकल्पं चेष्टनं नार्थसाधनम् ॥
परं पौरुषमाश्रित्य दन्तैर्दन्तान् विचूर्णयन् ।
शुभेनाशुभमुद्युक्तं प्राक्तनं पौरुषं जयेत् ॥
प्राक्तनः पुरुषार्थो मां नियुङ्क्त इति चेतना ।
बलादधस्तात्कर्तव्या प्रत्यक्षात्प्रबला न सा ॥
प्रत्यक्षमानमुत्सृज्य योऽनुमानेषु तिष्ठते ।
इमौ सर्पाविति प्रेक्ष्य स स्वदोर्भ्यां पलायते ॥
दोषः शाम्यत्यसंदेहं प्राक्तनोऽद्यतनैर्गुणैः ।
विधीयमानैर्भैषज्यैरुल्लाघोऽत्र निदर्शनम् ॥
न यातव्यमनुद्योगैः साम्यं पुरुषगर्दभैः ।
उद्योगो हि यथाशास्त्रं लोकद्वितयसिद्धये ॥

प्रत्यहं प्रत्यवेक्षेत देहं नश्वरमात्मनः ।
संत्यजेत्पशुकर्माणि साधुवर्त्मानि संश्रयेत् ॥
किंचित्कान्तान्नपानादिकलिलं कोमलं गृहे ।
व्रणे कीट इवास्वाद्य वयः कुर्यान्न भस्मसात् ॥
उद्यत्सच्छास्त्रसत्सङ्गसदाचारसुधार्जितः ।
एष पौरुषसंतानो दत्ते फलमभीप्सितम् ॥'
'यथा प्रयत्नैर्भूयेत तथेष्येत फलैरपि ।
इति पौरुषमेवेष्टं किं दैवं नाम दृष्यति ॥
शक्तस्य पौरुषं व्यक्तमव्यक्तं वापि यद् भवेत् ।
तद् दैवमित्यशक्तेन बुद्धमात्मन्यबुद्धिना ॥
पौरुषेण कृतं कर्म यद्यकस्माद् विपद्यते ।
तत्र व्यापादकाकोपो न दैवमिति बुध्यताम् ॥
द्वौ हुडाविव युध्येते पुरुषार्थौ परस्परम् ।
जीयते दुर्बलस्तत्र वृथा दैवकदर्थना ॥
भिक्षुको मङ्गलेभेन नृपतां यदि नीयते ।
प्राक्तनं पौरुषं तत्र बलवद्वापि कारणम् ॥
यन्न शक्नोमि तस्यार्थे यदि दुःखं करोम्यहम् ।
तदमारितमृत्योर्मे युक्तं प्रत्यहरोदनम् ॥
ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव वा ।
य एवं मन्यते मन्दो नाथवान् पशुरेव सः ॥
कश्चिन्मां प्रेरयत्येवमित्यनर्थकुकल्पने ।
यः प्राप्तो दृष्टमुल्लङ्घ्य स हेयो दूरतोऽधमः ॥
स्वार्थप्रापककार्यैकप्रयत्नपरता बुधैः ।
प्रोक्ता पौरुषशब्देन सा सिध्येच्छास्त्रसंस्कृता ॥
प्राक्तनं पौरुषं वीर ! दैवनाम्नावगीयते ।

तत्रालम्बितकर्तव्यः खञ्जः श्राणः कुणिर्न किम् ॥"

(एते ममदशकण्ठवधात्)

अथ 'बम्भ्रम्यमाणो वसुधान्तरेषु—'इति निरूपणाद् द्वीपान्तरयात्रा सांप्रतमुपतिष्ठते। तत्र प्रकृतं मीमांस्यते—

"विहितस्याननुष्ठानान्, निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां, नरः पतनमृच्छति ॥
तस्मात् तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥
प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥"

(याज्ञ. ३। २१९—२२१)

तदेतदादि दृष्टार्थवाक्यैश्चार्वाकैरपि राजशासनेषु आयुर्वेदविज्ञानेषु वा संचार्यपरिणाम्य च पर्यालोच्यम्। एतया विहिताविहितकर्मचर्यया निर्दिष्टयात्राक्रोडे वर्णाश्रमिणां देशान्तरस्य प्रस्थानम्; आचारस्य संकोचनम्, समुद्रान्तः कतिपयाहोरात्रपर्यन्तकं नौयानं चेति त्रिकं प्राधान्येन प्रसज्जते तावत्। तत्र प्रथमम्—

'सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः।
अङ्गवङ्गकलिङ्गान्ध्रान्गत्वा संस्कारमर्हति ॥' इति।

(मिताक्षरायां देवलः, याज्ञ. ३। २९२)

'सौराष्ट्रसिन्धुसौवीरानवन्तीदक्षिणापथम्।
एतानि ब्राह्मणो गत्वा पुनः संस्कारमर्हति ॥' इति।

(प्रस्थानचन्द्रिकायां बौधायनः)

'कर्मनाशजलस्पर्शात् करतोयाविलङ्घनात्।
गण्डकीबाहुतरणात् पुनः संस्कारमर्हति ॥' इति।

(त्रिस्थलीसेतौ)

'धर्माधर्मावदृष्टं स्याद् धर्मः स्वर्गादिकारणम् ।
गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः ॥
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ।'
'अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ॥
प्रायश्चित्तादिनाश्योऽसौ, जीववृत्ती त्विमौ गुणौ ।
इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ॥' इति च ।

(भाषापरिच्छेद. १६१–१६३)

अत्र 'कर्मनाशाजलस्पर्शात्—' इति त्रिस्थलीसेतुश्लोके चतुर्थपादे 'धर्मः क्षरति कीर्तनात्' इति पाठः सुप्रसिद्धतरः । सिन्धुसौवीरादि देशाः कर्मनाशाकरतोयादिसरितो भारतवर्षे प्रसिद्धाः । सिन्धुसौवीरादिगमनदूषणं तीर्थयात्राव्यतिरेकेण द्रष्टव्यमिति **विज्ञानेश्वर**प्रमुखाः । तदिदम्—"कीकटेषु गया पुण्या, पुण्यं राजगृहं वनम् । च्यवनस्याश्रमः पुण्यो नदी पुण्या पुनः पुनः ॥ (त्रिस्थलीसे.) इत्येवमादितोऽपि व्यक्तम् । तीर्यतेऽनेनेति तीर्थम्, तॄप्लवन–तरणयोः । एतदनेकप्रकारकमसंख्यं च वेदपुराणेतिहासेभ्यः सिध्यति । सुमेरोरवरोहतां स्वायंभुवस्य **मनोः** संतानानां **कुरुक्षेत्रादि**देशा एव विशिष्य निवासा बभूवुः । तथाच श्रूयते—

"तेषां कुरुक्षेत्रं देवयजनमास, तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनम्" इति ।

(शतपथब्रा. १४ कां. १ अध्या. १ प्रपा. १ ब्रा. २ कण्डिका.)

"यदनु कुरुक्षेत्रं देवानां देवयजनं, सर्वेषां भूतानां ब्रह्मसदनम् ।" इति च ।

(जाबालोपनिष. १)

'सितासिते सरिते यत्र संगथे
तत्राप्लुतासो दिवमुत्पतन्ति ।'

(ऋ. सं. ८ अ. ३ अ. ६ वर्गानन्तरं परिशिष्टे)

सितासिते सरितौ गङ्गायमुने 'इमं मे गङ्गे यमुने सरस्वति—' (ऋ० सं. १०. मं. ६ अ० ७५ सू.) इति मन्त्रे निर्दिष्टे। तत्र संगते संश्लिष्टे, तत्र अर्थात् प्रयागे। 'पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः। इति **कालिदासः** (रघु० १३। ५७)।

एवं हि **कुरुक्षेत्रादि** पुण्यतमेषु देशेषु निवसतां तपःस्वाध्याय-परायणानां भूदेवानामवरदेशप्रसङ्गो माभूदेतदर्थं सिन्धुसौवीरादिदेशयात्राणां निरङ्कुशाभावेन धर्मशास्त्रेषु शासनं युक्तमेव। प्रातिस्विकतया ब्राह्मणशब्दस्योल्लेखात्, तेषामेव पतनप्रसक्तौ प्रायश्चित्तगौरवस्मरणात्। क्षत्रियाणां तु **अङ्गवङ्गादि**देशाः पारम्परिका एव निश्चीयन्ते—अङ्गादीनां क्षत्रियविशेषाणां निवासो जनपदः अङ्गाः वङ्गाः कलिङ्गाश्च, 'तस्य निवासः' (४। २। ६९) इत्यणः 'जनपदे लुप्' (४। २। ८१) 'लुपि युक्तवद् व्यक्तिवचने' (१। २। ५१) इति व्युत्पादनात्। अथ **मनोर**पत्यस्य मनुष्यस्येव पाञ्चभौतिकपिण्डस्य भूतलस्यापि यथादर्शनमतिशयानतिशययोरपलपितुमशक्यत्वाद् वरावरविभागो न्याय्य एव। तथा च मन्त्रवर्णः—' किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्' (ऋ. सं. ३ मं. ४ अ. ५३ सू.) व्याख्याता **यास्काचार्यैः**—"किं ते कुर्वन्ति कीकटेषु गावः। कीकटा नाम देशोऽनार्यनिवासः। कीकटाः किं कृताः, किं क्रियाभिरिति प्रेप्सा वा—" इति (निरु. नैगमकां. ६ पा. ४ खं.)। इत्थं क्षत्रियाणां तद्विशेषाणां विशांपतीनां च नातिचिरंतने दैशिकसंज्ञासंबन्धे निर्व्यूढे तदनुवर्तिनो विशः शूद्राश्च न पृथङ् मीमांसनीयाः।

सांप्रतमाचारसंकोचो हि सामुद्रिकनौकायान इव स्थलधूमयानेऽपि दीर्घप्रवासिनः प्रसजत्येव। बहुत्र अवरोहणप्रदेशानामसमञ्जसत्वाद् इन्द्रियनिग्रहाभ्यासकार्पण्याद् बहूनां सहचारिणां च सत्वरं पानाशन-प्रवृत्तिपर्यवेक्षणात्। स्मरन्ति हि—

" यत्र पानमपेयस्य देशे,ऽभक्ष्यस्य भक्षणम् ।
अगम्यागामिता यत्र, तं देशं परिवर्जयेत् ॥ " इति ।
" संवत्सरेण पतति, पतितेन सहाचरन् ।
भोजनाशनशय्यादिकुर्वाणः सार्वकालिकम् ॥ " इति च ।

इत्थं च प्रवासी तथा प्रयत्नैः प्रवर्तेत यथा नो प्रत्यवेयात् । तत्र रोगिण इव प्रवासिनः स्नानं–जलेन, जलार्द्रपटेन, जलदैवतेन मन्त्रेण वा भवेत् । मन्त्रस्तु––

' आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥' इत्यादिः । ( शु. य. सं. ११ । ५०, ५१, ५२ )

तथाच **याज्ञवल्क्य** आह—

" स्नानमब्दैवतैर्मन्त्रैर्मार्जनम् । " ( १ । २२ )

स एवाग्रे पुनराह––

" प्राणसंयमः ।
सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ " ( १ । २२ )

प्राणसंयमः–ॐकारस्य षोडशचतुःषष्टिद्वात्रिंशद्वारजपैः पूरककुम्भक-रेचकैः प्राणायामः । सूर्योपस्थानम्––

' उद् वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ' इति ।
( शु. य. सं. २० । २१ )

गायत्र्याः–गायत्रीछन्दस्कायाः सावित्र्याः दशकृत्वो जपः । इति सांध्यो विधिः । साकारोपासकस्य प्रवासिनस्तु–हृदयाकाशे परमेश्वरस्य चिन्तनं "लं, हं, यं, रं, वं" भौतिकैरेतैः क्रमेण गन्धपुष्पधूपदीपनैवे-द्यानां कल्पनं चेति विशेषः ।

पानाशनप्रवृत्तिचिन्तायां तावत्–प्रवहन्नलोदकं ग्राह्यमेव, क्वचिदात्म-रक्षितेन गङ्गोदबिन्दुना संसृष्टमुदकान्तरमपि । नानाविधानि मूलानि फला-नि ऐक्षवाणि शष्कुल्यादीनि वा । भवतश्चात्र––

"फलानामपि मूलानां सेवनात् सारवाहिनाम् ।
युक्त ( मित ) कर्मस्वप्रबोधश्चिरंजीवति मानुषः ॥
गत्वाप्यगम्यदेशेषु साध्यसाधनतत्परः ।
वीरो वर्णश्रियं रक्षन् सफलो विनिवर्तते ॥"

द्वीपान्तरस्य **केतुमाल-सिद्धपुरा**दिरूपस्य यात्रायामिव द्वारकादियात्रायामपि सामुद्रिकनौयानप्रसङ्ग आपतति । स चायमल्पस्तैर्थिकश्चेति विशेषः । नौयानं तु समानम् । धर्मशास्त्रे श्राद्धप्रकरणेऽब्धिनौयातापि प्रतिषिद्धत्वेन प्रतिपाद्यते तथा च **मनु**राह स्म—'समुद्रयायी वन्दी च–' ( ३ । १५८ ) इत्यादि । तत्र समुद्रयायी ब्राह्मणो विज्ञायते भोज्यनिर्णयप्रस्तावात् । **पराशरो**ऽपि—

'समुद्रयानगमनं ब्राह्मणस्य न शस्यते ।
संभवेद् यदि मोहेन पुनः संस्कारमर्हति ॥'

कलिवर्ज्यप्रकरणे तु अब्धिनौयातुर्द्विजस्येति दर्शनाद् ब्राह्मणवत् क्षत्रियवैश्ययोरपि प्रायश्चित्तं लभ्यते । शूद्रस्य तु नास्ति । कलिवर्ज्यप्रकरणं नाम शक्तिह्रासात् कलियुगे कर्तुमशक्यानां कतिपयानामाचरणानां संकलनसंदर्भः । इहेत्थमुपसंहृतं च धर्मशास्त्रकारैः—

'एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥'

एवं च भारतवर्षेऽङ्गादिदेशेष्विव वर्षान्तरे **युरोपा**दिष्वपि यात्राकरणेन नाधिकं प्रायश्चित्तमुपलभ्यते । उच्छृङ्खलाचरणेन तु सर्वत्र बहिष्कृतिरनिष्कृतिर्वा धावत्येव । शेषम्—'आत्मानमुद्धृत्य शिवं श्रयन्ताम्' ( १६३ श्लो. ) इत्यत्र द्रष्टव्यम् ॥ १३५-१४० ॥

इति त्रिवर्गशेषीया वेददृष्टिः ।

( इति चातुर्वर्ण्यभागः )

---

## अथाश्रमशिक्षा ।

### तत्र ब्रह्मचर्यदिक् ।

उत्पद्य वर्णाः परमेश्वरस्य
भिन्नक्रियेभ्योऽवयवेभ्य एते ।
यथाविभागं गुणकर्मयोगै-
रलं चतुर्वर्गफलानि भोक्तुम् ॥ १४१ ॥

शारीरिकं मानसिकं च वीर्य-
मत्यर्थमिष्टं फलसाधनाय ।
इत्यादरादेव स वेददेव-
स्तं ब्रह्मचर्याह्वयमाह योगम् ॥ १४२ ॥

द्विजातयो येन महर्षिभाव-
साम्राज्यवाणिज्यसुखान्यवापुः ।
स्त्रियः कलाकौशलसंततीश्च
शूद्राश्च शिल्पानि गुणोत्तराणि ॥१४३॥

यत्सेवनाद्भारतवर्षभूभृत्
सार्वैकसीमेति पुरान्यगादि ।
स सांप्रतं यन्त्रनिपीडितेक्षु-
काण्डोपमामाश्रयते समन्तात् ॥१४४॥

क्षमा च शौर्यं च धृतिश्च सम्य-
ग्भोगश्च योगश्च पराक्रमश्च ।
यत्किंचिदुत्कर्षविशेषशालि
तद्ब्रह्मचर्याश्रयकं स्मरन्ति ॥ १४५ ॥

इति ब्रह्मचर्यदिक् ॥

अथ ब्राह्मणादिचतुर्णां वर्णानामवस्थाविशेषाः खलु ब्रह्मचर्याद्याश्रमा इत्युपश्लोकितं पूर्वम्, तदेव विशदयितुमुर्वरितो ग्रन्थ आरभ्यते । तत्र प्रथमं पञ्चभिर्ब्रह्मचर्याश्रमं परामृशति—**उत्पद्य वर्णा इति** । यदिदं शब्दार्थलक्षणं जगदन्तर्बहिरुन्मिषदनुभूयते, तद्धि प्रादुर्भावात् प्राङ् निजकारणे वटधानिकान्यायेन प्रलीनं नामरूपाभ्यामव्याकृतं सच्चिदानन्दरूपब्रह्मात्मवस्तुस्वरूपेणैवासीत् । तथाचाम्नायते—

"नासदासीत्, नो सदासीत्, तदानीं
नासीद् रजो, नो व्योमा परो यत्" इत्यादि

(ऋ. सं. १० मं. ११ अ. १२९ सू.)

'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ. उ. १।४।७)

"सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्"

(छां. उ. ६।२।१)

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ (मनु. १।५)

ततो हि—"तस्माद् वा एतस्माद् आत्मन आकाशः संभूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्" (तै. उ. २ वल्ली. १ खं.) इत्यादिक्रमेण जायते ।

सद्रूपं ब्रह्मैव हीच्छाज्ञानक्रियाशक्तिसंश्लिष्टं सद् विश्वकारणतां प्रतिपद्यमानं हिरण्यगर्भयज्ञोच्छिष्टस्कम्भप्रजापत्यादिशब्दव्यपदिष्टं लभ्यते । तथाहि—

'हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत् ।
सदाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥' (ऋ. सं. १० मं. १० अ. १२१ सू.)

'तस्माद् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥' इत्यादि ।
(शु. य. सं. ३१ । ६)

'उच्छिष्टे नाम रूपं चोच्छिष्टे लोक आश्रितः ।
उच्छिष्ट इन्द्रश्चाग्निश्च विश्वमन्तः समाहितम् ॥' इत्यादि ।
( अथर्वसं. ११ कां. २४ प्रपा. ४ अनु. ७ सू. )

'स्कम्भो दाधार द्यावापृथिवी उभे इमे स्कम्भो दाधारोर्वऽन्तरिक्षम् ।
स्कम्भो दाधार प्रदिशः षडुर्वी स्कम्भ इदं विश्वं भुवनमा विवेश ॥'
(अथर्व सं. १० कां. २३ प्रपा. ४ अनु. ७ सू.)

"प्रजापतिरकामयत—प्रजायेय भूयान् स्यामिति, स तपोऽतप्यत, स तपस्तप्त्वेमाँल्लोकानसृजत, पृथिवीमन्तरिक्षं दिवम् ।" (ऐतरेयब्रा. ५ पंचि. ५ अध्या.)

'तदैक्षत, बहुस्यां, प्रजायेय' ( छां. उ. ६ । २ । ३ )

"ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि, वृत्तौजाः प्रादुरासीत् तमोनुदः ॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ, तासु बीजमवासृजत् ॥" इत्यादि ।
( मनु. १ । ६–८ )

इत्थंचेह संभूतासु भूतभौतिकसृष्टिसु गुणभूम्ना जरायुजेषु मनुष्या एवाधिक्रियन्ते । तेऽमी सर्वे प्रकृतिप्रत्ययमहिम्ना मनोरपत्यानि विज्ञायन्ते 'मनोर्जातावञ्यतौ षुक् च' ( ४ । १ । १६१ ) इति हि पाणिनिस्मरणम् । तेषाममीषामुत्कृष्टत्वे 'नारायणं नमस्कृत्य नरं चैव नरोत्तमम्' इति जयोक्तिर्लिङ्गम्—

'पिण्डब्रह्माण्डनेतृत्वान्नरौ जीवेश्वरावुभौ ।
तयोश्च नयनाच्छुद्धं ब्रह्मापि नर उच्यते ॥
नरजानामपां कार्यं नारं ब्रह्माण्डमिष्यते ।
तदस्य वसतिस्थानं तेन नारायणो विभुः ॥
स्वाविद्यासृष्टपिण्डेन तादात्म्यं यो गतो नरः ।
स जीवः स परं ब्रह्म नरोत्तमपदाभिधम् ॥'

इति । अयं नरपदवाच्योऽविद्यावच्छिन्नं चैतन्यं जीवः पुरुषसूक्ते— "ततो विराडजायत, विराजो अधि पूरुषः" (शु. य. सं. ३१ । ५) इत्येवं श्रूयते । अयमेवार्थः **श्रीमद्भागवते** तृतीयस्कन्धे षड्विंशेऽध्याये भगवता कपिलेन स्वमातरं देवहूतिं निमित्तीकृत्य सम्यगुपबृंहितः । तत्र—'एतान्यसंहत्य यदा महदादीनि सप्त वै । कालकर्मगुणोपेतो जगदादिरुपाविशत् ॥ ५० ॥ ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् । उत्थितं, पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५१ ॥" इत्युपक्रमः । 'एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् । पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६२ ॥ वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट् । घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् ॥ ६३ ॥' इति विराज उत्थापने वह्निप्रभृतीनामप्रयोजकत्वम्; 'चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद् यदा । विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥७०॥' इत्युपसंहारः । अथ त एवामी मनुष्या मध्यमलोकदायनिष्पत्तये प्रजापतिना चतुर्भिर्वर्णैर्व्यभाजिषत । इह शरीरिणां प्रारब्धकर्मणां वन्ध्यत्वं मा प्रसाङ्क्षीदिति तेनैव साक्षिणा रमणीयचरणानां रमणीया ब्राह्मणादिशब्दिताः; कपूयचरणानां कपूयाश्चाण्डालादिशब्दिताश्च जन्मयोनयो निरणायिषत (छां. उ. ५ । १० । ७) एतेन औत्पत्तिको वर्णविभाग इति परीक्ष्यम् । नहि सुवर्णत्वसाम्येऽपि परिवर्तमन्तरेण दशवर्णं सुवर्णं पञ्चविंशतिवर्णं भवितुमर्हेम् । अयं परिवर्तपदार्थश्चेतनेषु जन्मान्तर-

पदव्यपदेश्यः । सेयं वर्णनीया वर्णीया आश्रमीया च पारमेश्वरी साम्राज्यपद्धतिः—

"यत्पुरुषं व्यदधुः, कतिधा व्यकल्पयन् ।
मुखं किमस्य ? कौ बाहू ? का ऊरू ? पादा उच्येते ॥"
(ऋ. सं. १० मं. ८ अ. ९० सू. )

इति मन्त्रवर्णैरेवं कलिता—

'ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः, पद्भ्यां शूद्रो अजायत ॥''
( ऋ. सं. १० मं. ८ अ. ९० सू. )

इति मन्त्रवर्णैरेवं सिद्धान्तिता ।

अत्र मुखबाहूरुपादस्य रूपणा वर्णानां गुणकर्मविभागप्रतिपत्तिप्रयोजना, रूपणान्तरप्राधान्यप्रयोजना च । तथाहि—मुखाद्यधोधः संनिवेश—क्रमादेव ब्राह्मणाद्युत्कर्षः । एवमेव मन्वादिस्मृतिप्रवाहेऽपि ।

एतेन 'एते प्राकृतिका ब्राह्मणादिवर्णाः लीलाविग्रहस्य परमेश्वरस्य भिन्नक्रियेभ्यो मुखादिभ्योऽवयवेभ्य उत्पद्य प्रादुर्भूय' इति सोपपत्तिकम् । शेषं स्पष्टम् । अत्र शरीरग्रहणे लिङ्गम्—

"स वै शरीरी प्रथमः, स वै पुरुष उच्यते ।
आदिभूतः स देवानां, ब्रह्माग्रे समवर्तत ॥"
( शारीरक० १ । २ । २३ ॥ कूर्मपु. पूर्वभा. ४ अध्या. )

'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥' ( मनु. १ । २३ )
'यो ब्रह्माणं विदधाति पूर्वम्—' ( श्वे. उ. ६ । १८ ) इति
'ब्रह्मा देवानां प्रथमः संबभूव—' ( मुं. उ. १ । १ ) इति च ॥१४१॥

**शारीरिकमिति** । ब्रह्मणे वेदादिलाभाय चर्यत इति ब्रह्मचर्यम् । तद्धि महाव्रतत्वात् योग इत्याख्यायते । तदर्थं पित्रादिः स्वयं ब्रह्मचारिणं

सदाचारान् वेदादींश्च शिक्षयेत्, सद्गुरुं वा नयेत्, येनात्र दोषो न संक्रमेत्। सात्त्विकमाहारमाशयेत्, येनास्य शारीरिको विकारो नोत्पद्येत। दुःसङ्गं परिहारयेत्, येनास्मै विषयवासना नो प्रभवेत्। अथ ब्रह्मचारिण आख्यानम्—

'इयं समित्पृथिवी द्यौर्द्वितीयो
तान्तरिक्षं समिधा पृणाति।
ब्रह्मचारी समिधा मेखलया
श्रमेण लोकाँस्तपसा पिपर्ति॥ ४॥
पूर्वो जातो ब्रह्मणो ब्रह्मचारी
धर्मं वसानस्तपसोदतिष्ठत्।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं
देवाश्च सर्वे अमृतेन साकम्॥ ५॥
ब्रह्मचार्येति समिधा समिद्धः
कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः' इत्यादि।
(अथर्व सं. ११ कां. ४ प्रपा. ३ अनुवा. ७ सू.)

अथर्वसंहितायाः ११ काण्डे २४ प्रपाठके ३ अनुवाके १-२६ एते सर्वे मन्त्रा ब्रह्मचर्याश्रमप्रतिपादका अध्येयाः। ब्रह्मचारिणो ब्रह्मचर्याश्रममधितिष्ठत आह्निकम्—

''उपनीय गुरुः शिष्यं, महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं, शौचाचारांश्च शिक्षयेत्॥
दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः।
कुर्यान्मूत्रपुरीषे च, रात्रौ चेद् दक्षिणामुखः॥
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः॥
अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः।

प्राग्वा, ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥
त्रिः प्राश्यापो, द्विरुन्मृज्य, खान्यद्भिः समुपस्पृशेत् ।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥
हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुद्ध्येरन्, स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं, प्राणसंयमः ।
सूर्यस्य चाप्युपस्थानं, गायत्र्याः प्रत्यहं जपः ॥
गायत्रीं शिरसा सार्धं जपेद् व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां, त्रिरयं प्राणसंयमः ॥
प्राणानायम्य, संप्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत सावित्रीं प्रत्यगा तारकोदयात् ॥
संध्यां प्राक् प्रातरेवं हि तिष्ठेदा सूर्यदर्शनात् ।
अग्निकार्यं ततः कुर्यात् संध्ययोरुभयोरपि ॥
ततोऽभिवादयेद् वृद्धानसावहमिति ब्रुवन् ।
गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥
आहूतश्चाप्यधीयीत लब्धं तस्मै निवेदयेत् ।
हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥" इति ।

(याज्ञ. १ । १९-२७)

'उपनीय गुरुः शिष्यं, शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च संध्योपासनमेव च ॥
अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।

संहृत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः॥' (मनु. २।६९-७२)
'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च विशीर्यति ॥' (मनु. २।७४)
'प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्यग्निं चरेद् भैक्षं यथाविधि ॥' (मनु. २।४८)
'व्रतवद् देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते ॥
ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः ।
राजन्यवैश्ययोस्त्वेवं नैतत्कर्म विधीयते ॥' (मनु. २।१८९-१९०)
'वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः ।
शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥'(मनु. २।१७७)
'मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥' (मनु. २।६४)
'एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् ।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥
स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्॥'(मनु. २।१८०-१८१)
'पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः ।
पुनर्ब्राह्मणमैतु मा पुनर्द्रविणमैतु मा ॥' इत्यृक्
(तैत्तिरी. आरं. १ प्रपा. ३० अनु.)
'इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥' (मनु. २।९३)
'न तथैतानि शक्यन्ते संनियन्तुमसेवया ।

विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥
वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥' (मनु. २।९६-९७)
'आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुद्ध्यति ॥' (मनु. ५।८८)
'आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥' (मनु. ५।९१)
'त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥' इत्यादि ।
(याज्ञ. १।१४४)
'न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित् ।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥' (मनु. २।२४५)

अत्र रघुवंशस्य पञ्चमे सर्गे **रघुकौत्सयोः** संवादो दृश्यः । इदानीमपि श्रोत्रियकुलालंकाराणां मिथिलेश्वराणां राज्यं शिष्योपार्जितं द्रष्टव्यमिति दिक् ।

**द्विजातय इति** । महर्षिभावसुखम्=मन्त्रद्रष्टृत्वगौरवम् 'ब्रह्मचारी ब्रह्म भ्राजद् बिभर्ति' इत्यादिश्रवणात् । साम्राज्यसुखम्—निर्बाधकीर्ति-प्रतापप्रसरणम् ।'ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति ।' इत्यादिश्रवणात् । इदमाकलय्यैव—'असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत् सर्वं नो संध्यां भजते रविः ॥' इत्येवमादिकथनात् । **स्त्रियः कलाकौशलसंततीश्चेति** 'ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्' इत्यादिश्रवणात् । एवमन्यत्रापि—'अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीषति' इत्येवमादिमन्त्रवर्णदर्शनाद् ब्रह्मचर्यस्य प्राणप्रदत्वमवसेयम् ॥

**यत्सेवनादिति** । भारतवर्षभूमृदिति श्लिष्टं द्रष्टव्यम् । उत्तरार्धेन निःसारताया लोकप्रसिद्धो दृष्टान्त इति ॥

उपसंहरन्नाह—**क्षमा चेति** । सकलमिदं ग्राम्यधर्मसंकोचादेवा-विकलम् । ग्राम्यधर्मस्तु—'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥' इत्येवंरूपः ॥

अथ विनेयार्थं पाठ्यं निर्णेयम् । तच्च व्युत्पित्सानुसारेण **प्राथमिकं माध्यमिकं पार्यन्तिकमिति** त्रिरूपम् । तत्र प्रेक्षावान् पूर्वमष्टम-वर्षात्प्रागेव क्रीडनकादिव्याजमधुरेण वर्त्मना विनेयं यथाकालं पाठनलेखन-संमुखीं स्वदेशभाषां ग्राहयेत्, येन यो ह्युपनयनसमये वेदमन्त्रोच्चारणे प्रभवेत् । ततो हि—

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥' ( मनु. २ । १६८ )

इति मानवीं मर्यादामत्यजन् स्वाध्यायं वा तस्य कंचन भागं वा यथा-संप्रदायं विनेयं पाठयेत्, येन स हि सामयिकप्रवाहेण लोकयात्रावर्ते पतन्नपि कदाचिदात्मानमुद्धर्तुं वाञ्छेत् । अथ पाठ्यशरीरे भाषा तन्नि-बन्धनो विषयश्चेति भागद्वयम् । तत्र विषयः प्रायो न भिद्यते, तस्य प्रकाशिकया भाषया तु भिद्यत एव । एवं पाठ्ये लोकयात्रार्थं तावत् षट्पदार्थी पूर्वमवतरति—

( १ ) व्याकरणम् । यच्च भाषिकं, प्राकृतं, लौकिकं, वैदिकं च ।
( २ ) काव्यम् । यदपि भाषिकप्राकृतलौकिकवैदिकलक्षणम् ।
( ३ ) कोषः । अयमपि चतुर्धा ।
( ४ ) भूगोलः ।
( ५ ) इतिहासः । } एते भाषिकाः ।
( ६ ) गणितम् ।

इह प्राथमिके पाठ्ये भाषिकं लौकिकं चेति द्विप्रकारकं, व्याकरणं, काव्यं, कोषः ( प्रायोगिकं नामलिङ्गानुशासनं ) चेति षट्कमपेक्ष्यते ।

भूगोलप्रभृतीनां तु निक्रमिष्यते । इह लौकिकं व्याकरणं नाम कतिपयानां पाणिनिसूत्राणां वृत्तिग्रन्थः । यथा—वैयाकरणलघुसिद्धान्त**कौमुदी** यथासंनिवेशं वैदिकस्वरानुशासनसंसृष्टा । काव्यं नाम कवीनां (वर्णकानां) कर्म । यथा—शृङ्गारवर्जं **हितोपदेश-रघुवंशे** । कोषो नाम रत्नानामिव शब्दानां नामलिङ्गानुशासनपुरःसरं संग्रहः । यथा—आग्नेयोऽ**मरसिंह**-संकलितः । भाषिकं व्याकरणादि तु नोदाह्रियते संस्क्रियमाणत्वात् । भूगोलो नाम समुपलभ्यमानभौगोलिकवृत्तवर्णनात्मको ग्रन्थः । इतिहासो नाम समुपलभ्यमानभौगोलिकशासनवर्णनात्मको ग्रन्थः । गणितं नाम संख्यासंख्येयव्यवहारप्रदर्शको ग्रन्थः एषां कृताः क्रियमाणाश्चानेके निबन्धाः ।

इदं पाठ्यं द्वादशवर्षासन्ने वयसि विनेयः समापयेत् । आः सांप्रतमसांप्रतमेतदनुभूयते, यदस्य मातापितरौ यथा विवाहादिविषये त्वरमाणौ बहुप्रयत्नौ लक्ष्येते, न तथा शास्त्रशिक्षणे । कष्टं भोः ! कष्टम्—

> "माता शत्रुः, पिता वैरी, याभ्यां बालो न पाठ्यते ।
> न शोभते सभामध्ये हंसमध्ये बको यथा ॥"

माध्यमिके पाठ्ये हि—

( १ ) व्याकरणम्; वैयाकरणसिद्धान्तकौमुदी सकला, प्राकृतप्रकाशश्च ।

( २ ) तर्कः; न्यायसिद्धान्तमुक्तावली ।

( ३ ) काव्यम्; शिशुपालवध-किरातार्जुनीययोरादितः सर्गद्वयी, भगवद्गीताया द्वितीयाष्टादशावध्यायौ, श्वेताश्वतरोपनिषच्च ।

( ४ ) ज्यौतिषम्; पञ्चाङ्गशुद्धिः, भास्करीयपाटी च ।

( ५ ) राजभाषापरिचयः ।

इदं षोडशवर्षासन्ने वयसि समापनीयम् ।

पार्यन्तिके पाठ्ये तु—

( १ ) संहिता, ब्राह्मणम्, श्रौतसूत्रम्, स्मार्तसूत्रं च स्वशाखीयम्। मीमांसादर्शनम्। याज्ञवल्क्यस्मृतिश्च।

मन्त्रार्थाकलने तु—

'एतस्मिन् प्रथमाध्यायः श्रोतव्यः संप्रदायतः।
व्युत्पन्नस्तावता सर्वं बोद्धुं शक्नोति बुद्धिमान्॥'

इति ऋक्संहिताया उपोद्घातप्रकरणगतः **सायणाचार्याणामुप-देशश्लोको** बह्वृचेतरविषयेऽनूचानैरन्तेवासिव्युत्पत्तये यथानुभवं संचार्य इति दिक्। इहैव मन्त्रकार्येषु व्याख्यायमानेषु प्रातिशाख्यनिरुक्तच्छन्दः-शिक्षाः संक्रामयितुं शक्या इति। इदमाचार्यताप्रयोजकं **वैदिक-विज्ञानम्।**

( २ ) निरुक्तम्, महाभाष्यम्, वाक्यपदीयम्; इति **शाब्दम्।**

( ३ ) सांख्य-योगदर्शने, गीताभाष्यम्, बृहदारण्यकच्छान्दोग्यो-पनिषद्भाष्ये, ब्रह्मसूत्रभाष्यम्, ईश्वरप्रत्यभिज्ञा, खण्डनखण्डखाद्यम्; इति **वैदान्तम्।**

( ४ ) काणादाक्षपाददर्शने, कुसुमाञ्जलिः, चिन्तामणिः, व्युत्पत्ति-शक्तिवादौ, अद्वैतसिद्धिः; इति **तार्कम्।**

( ५ ) सिद्धान्तः। स नवरूपः—व्यक्ताव्यक्ते, सरले चापीये च क्षेत्रमिती, शङ्कुच्छेदः, चलगणितम्, ज्योतिर्गणितम्, इति। संहिता होरा च। एषामिमे संदर्भाः—सिद्धान्तशिरोमणिः, मुहूर्तचिन्तामणिः, बृहज्जातकं च। तथा च स्मर्यते—

'सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम्॥'

इति **ज्यौतिषम्।**

( ६ ) सुश्रुत, चरकः, वाग्भट इत्यायुर्वेदत्रयी वनस्पतिविज्ञान-

विजृम्भिता रससंचारकरम्बिता प्रत्यक्षक्रियातरङ्गिता द्रव्यगुणकर्मसामान्यविशेषसमवायाभावविभावनेनात्मस्वास्थ्यक्रिया । भवति चात्र—

'सुश्रुते सुश्रुतो भूत्वा चरके चरकक्रियः ।
प्रत्यक्षकर्मजीवातु( निष्णातो )र्वाग्भटे वाग्भटायताम् ॥'

**इत्यायुर्वेदम् ।**

( ७ ) वास्तविकानां काल्पनिकानां च वस्तूनां वर्णनासु प्रवणाः कुमारसंभव-मेघदूत-किरातार्जुनीय-शिशुपालवध-नैषधीयचरित-हरविजयानां विशिष्टा भागाः । वैशिष्ट्यं च वर्णनीयसाम्ये कविकर्मणस्तरतमभावपरीक्षणार्थम् । यथा—भारवितो माघस्य शैलवर्णने सौष्ठवम् । क्वचिद् वर्णनीयसाम्येऽपि संकरवत् तरतमाभावे विश्रमः । यथा—माघरत्नाकरयोर्ऋतुवर्णनासु । इत्यादि । कादम्बर्याः पूर्वभागः । उत्तररामचरित-रत्नावली-प्रबोधचन्द्रोदयानि; अभिज्ञानशाकुन्तल-वेणीसंहार-मुद्राराक्षसानि वा । वामनसूत्रवृत्ति-काव्यप्रकाशध्वन्यालोकाः, कुवलयानन्द-साहित्यदर्पणव्यक्तिविवेका वा । इति **साहित्यम् ।**

( ८ ) व्यावहारिकविज्ञानप्राग्भारा राजभाषा । इति **राजभाषम् ।**

अत्र सर्वत्र प्रमेये प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि यथाकथाप्रसङ्गमवतरन्ति, तथावतारयन्ति च नानाभाषाभङ्गिमधुरान् प्रबन्धानिति । अध्यापकोऽथ विद्याचञ्चुरिवाचारचञ्चुरपि सर्वथैव स्मर्यते । यदुक्तम्—

'प्राज्ञोऽपि साधुवेषोऽपि स्फीतभाषोऽपि मानुषः ।
चोरजारमृषावादिष्वेकश्चेन्न हि शस्यते ॥' इत्यादि ।

अध्ययनम्, अध्यापनम्, आचरणम्, विद्याभवनं चेति तथा निर्बाधानीष्यन्ते यथा प्रयत्नसाफल्यं स्यात् । इत्थं च ब्रह्मचारी विंशतिवर्षासन्ने वयसि अष्टविधेषु विषयेष्वन्यतमे सवेदेऽधीती स्नातः स्नातकपदभाक् । अध्ययनशेषेऽपि नास्य दीर्घकालं ब्रह्मचर्यं वरं मन्यन्ते; इन्द्रिय-

निग्रहस्यातितरां दुष्करत्वात्, लिङ्गमात्रनिर्वहणेन प्रत्यवायास्पदत्वात्, आश्रमान्तरकर्तव्यस्य परिशेषत्वाच्च । अतएव **महाभाष्ये** भुजगविभुना भाषितम्—"चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति । आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति ।" इति । तथाचास्य आगमस्वाध्यायकालाभ्यामेवायुः पर्यवसन्नं स्यात् । न्यायकुसुमाञ्जलावु**दयनाचार्ये**णापि—

'जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।

ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयताम् ॥' (द्वितीयस्तव. ३ श्लो.)

तदिदं साधारण्यादभिहितमाकलनीयम् । पुरुषधौरेयेण तु दीर्घब्रह्मचर्यमप्यनुष्ठातुं सुकरम् ॥ १४१–१४५ ॥

इति ब्रह्मचर्याश्रमीया वेददृष्टिः ।

## अथ गृहस्थदिक् ।

ते पञ्चयज्ञाः समयानुसारं
संपादनीयाः सहसांध्यकृत्याः ।
येऽनुष्ठिता लोकफलाय पञ्च
प्राणा इवान्ये घटयन्ति शक्तिम् ॥ १४६ ॥

वर्णश्रुताभ्यामधिकैः समैर्वा
मीमांसनीयं व्यवहारकाण्डम् ।
न्यूनैः सहायैः कलितस्तु मन्त्रो
मेयाम्बुधौ कोल इव प्रणश्येत् ॥ १४७ ॥

प्रदीपिकावद् गृहकान्तिमूला
मणिप्रभावन्नयनाभिरामाः ।
स्त्रियो निलिम्पप्रतिमा इवारा-
त्संभावनीया बहुनादरेण ॥ १४८ ॥

धर्मं च कालं च विमृश्य संप-
न्नियोजनीया खलु सत्क्रियासु ।
दानं निधानं द्वयमप्यवाप्य
सत्पात्रमक्षय्यगुणान्प्रसूते ॥ १४९ ॥

नानाविभूत्यां शरणीभवन्त्या-
मप्युद्गताशङ्क इवाभिगच्छेत् ।
प्रायेण लोकोऽभ्युदयाभिमान-
यानः पतेत्स्वाद् नहुषायितेन ॥ १५० ॥

इति गृहस्थदिक् ।

इदानीं पञ्चभिर्गृहस्थाश्रमं सूत्रयति—ते **पञ्चयज्ञा इति** । अत्रेदं पर्यालोच्यम्—

'ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥' ( मनु. ६ । ८७ )

"यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्वे आश्रमाः ॥
यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥
स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता ।
सुखं चेहेच्छता नित्यं, सोऽधार्यो दुर्बलेन्द्रियैः ॥
ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्य,स्तेभ्यः कार्यं विजानता ॥"(मनु. ३ । ७७-८०)

इति गृहमहत्त्वम् ।

'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥' ( मनु. ३ । २ )

'चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः ।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥' ( मनु. ४ । १ )

'त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा, धर्मे सीदति सत्वरः ॥' ( मनु. ९ । ९४ )

सत्वरः पङ्के गौरिव धर्मे सीदति । तस्मात् त्वरावान् यथाशक्ति न स्यात् । कन्याया उपनयनस्थाने विवाहसंस्कारस्य **मन्वादिस्मरणात्** पुत्रस्याष्टमे वर्षे उपनयनमिव कन्याया अप्यष्टमे वर्षे विद्याविज्ञानकृते विवाहः श्रेयान् । तत आ च रजोदर्शनाद् गौणः कालः । यथा पुत्रस्य आ च षोडशादिवर्षात् । तदुत्तरं यथा अनुपनीतः पुत्रो व्रात्यत्वं भजते तथा विवाहाख्यसंस्कारं विना कन्यापि वृषलीभावमापद्यत इति लभ्यते ।

पुत्रस्येव कन्याया अपि यथाकालमध्यापने तथा प्रयत्न आधीयतां यथा दोषा न प्रादुष्युः । 'श्रयन्ति कान्तामणयो ह्यगुताः' इति दर्शनात् । इदानीं रजोदर्शनदोषावहेलनजृम्भायां हि—

'वर्णीमन्यापि जनता नवविज्ञानगर्विता ।
कन्यामुद्वहति प्रौढां यथा राजा तथा प्रजा ॥
स्वेच्छया वेद्यते वेदस्तथाचारो निवेद्यते ।
यियासुर्वर्णधर्मोऽद्य हिन्दुधर्मे प्रसर्पति ॥
इन्द्वतेर्जायमानेऽपि हिन्दाविन्दाविवानघे ।
त्रयीतनुमनासाद्य वर्णोत्कर्षः कथं भवेत् ॥'

यदपि—

"जत्थ रुई, तत्थ विही, जत्थ इमा णत्थि, तत्थ आंरोसेहो ।"

इत्याद्यवतार्यते, तत्र वर्णाश्रमसुहृद्भिर्न्यायकणिकामालोचयद्भिर्मण्ड-नीयो विधिविवेको न स्मृतिपथादपनेतव्य इत्यलमरण्यालापेन । स्त्रीपुं-सयो रतिकालस्तु—

"पञ्चविंशे ततो वर्षे पुमान्, नारी तु षोडशे ।
समत्वागतवीर्यौ तौ जानीयात् कुशलो भिषक् ॥" इति ।

( सुश्रुते सूत्रस्थाने आतुरोपक्रमणीये ३५ अध्याये )

'ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेद्, जीवेद् वा दुर्बलेन्द्रियः ।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥' इति च ।

( सुश्रुते शारीरस्थाने गर्भिणीव्याकरणे १० अध्या. )

यथा खल्वथर्ववेदेन देशकालक्षेत्रानुकूल्यादेवोप्तं बीजं सत्फलाय कल्पते, तथा आयुर्वेदविज्ञानेन गर्भाधानमिति तत्त्वम् । अनन्तरमपि पशुवन्न प्रवर्तेत—

'ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दशरात्रयः ॥' इत्यादि

(मनु. ३ । ४५-४७)

'अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥' (मनु. ४ । १२८)

इति गृहपरिग्रहः ।

'वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।
पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीं गृही ॥
पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनः ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः ।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥' (मनु. ३ । ६७-७२)

(१) यो ह्यध्यापयति सोऽधीत इति ब्रह्मणोऽध्यापनमध्ययनं चेत्युभयं विवक्षितम् । तच्चार्थज्ञानपूर्वकमिति विशेषः । तथाच पठ्यते—

'स्थाणुरयं भारहारः किलाभू-
दधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ॥' इति
(निरुक्तनैघण्टुक. १ अ, ६ पा, २ खं.)

'उतत्वः पश्यन्न ददर्श वाच-
मुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं [१] विसस्रे
जायेव पत्य उशती सुवासाः ॥' इति च ।
(ऋ. १० मं. ६ अ. ७१ सू.)

अत्र प्रथममन्त्रस्य पूर्वार्धेन वेदार्थमजानतः स्थाणुत्वेनोपहासः, उत्तरार्धेन वेदार्थं जानतः प्राशस्त्यमुच्यते । एवं द्वितीयमन्त्रस्य पूर्वार्धमविद्वांसमाचष्टे, उत्तरार्धं तु विद्वांसमिति । इह त्वशब्दोऽन्यपर्यायः, उतशब्दोऽप्यर्थकमव्ययम् । तथाच–कश्चन अविद्वान् वाचं पुस्तकरूपेण पश्यन्नपि न पश्यति, अर्थतो न निश्चिनोति । शृण्वन्नपि नैनां वाचं शृणोति, तात्पर्यतो नाध्यवस्यति । पत्ये जायेव, वाक् विदुषे आत्मानं समर्पयतीति दृष्टान्तः ।

अथात्र स्वाध्यायो विभज्यते । तत्र, ऋक्संहितायाम्—मण्डलानि=१० । अनुवाकाः=८५ । सूक्तानि=१०१७ । अथवा, अष्टकानि=८ । अध्यायाः=६४ । वर्गाः=२००६ । एवं मन्त्राः । अथ ऋग्ब्राह्मणे—पञ्चिकाः=८ । अध्यायाः=४० ॥ अथ शुक्लयजुःसंहितायाम्—अध्यायाः=४० । कण्डिकाः=१९७५ । एवं मन्त्राः । अथ शुक्लयजुर्ब्राह्मणे—काण्डानि=१४ । प्रपाठकाः=६८ । अध्यायाः=१०० । ब्राह्मणानि=४३८ ॥ अथ कृष्णयजुःसंहितायाम्—काण्डाः=७ । प्रपाठकाः=४४ । अनुवाकाः=६३१ । एवं ब्राह्मणश्लिष्टा मन्त्राः ।

अथ कृष्णयजुर्ब्राह्मणे—काण्डानि=३। प्रपाठकाः=२५। अनुवाकाः= ३०५। अथ सामसंहितायाम्—आर्चिकाः=३। तत्र, छन्दआर्चिके—काण्डानि=४। प्रपाठकाः=६। अध्यायाः=६। खण्डानि=६४। महानाम्न्यार्चिके—ऋचः=१०। उत्तरार्चिके—अध्यायाः=२१। खण्डानि=११९। प्रपाठकाः=९। अनुवाकाः=२२। सूक्तानि=४०२। एवं मन्त्राः। अथ सामब्राह्मणे—अध्यायाः=२५। खण्डानि=३४७॥ अथाथर्वसंहितायाम्—काण्डानि=२०। प्रपाठकाः=३४। अनुवाकाः= १११। सूक्तानि=६३६। एवं मन्त्राः। अथाथर्वब्राह्मणे—पूर्वोत्तरभागयोः प्रपाठकाः=११॥

एवममी प्रसिद्धशाखिनां द्विजन्मनां स्वाध्यायविभागाः। ये बाल्येषु दुर्दैवापसर्पणेन दुःशिक्षासंक्रमेण वा स्वस्वाध्यायपरिचयविकलाः शास्त्रान्तरेषु प्रवृत्तास्तैः प्रौढासु दशासु स्वगोत्रप्रवरादि परिष्कर्तुं स्वः स्वः स्वाध्यायो मन्त्रब्राह्मणरूपो यथावसरं यथासंप्रदायविभागं च प्रतिदिनमवश्याध्येतव्य इत्येतदर्थं पिष्टपेषणम्। तत्र यथायथं स्वरपरिचयाभावे एकश्रुत्या मन्त्राः पठितव्याः। तथा चोक्तं 'विभाषा छन्दसि' (१।२।३६) इति पाणिनिसूत्रे **काशिकायाम्**—'वेति प्रकृते विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थम्। तेनायं स्वाध्यायकालेऽपि ऐकश्रुत्यविधिर्भवति। "शं नो' देवीरभीष्टये। शं नो देवीरभीष्टये' (अथर्व सं.)। 'इषे त्वोर्जे त्वा। इषे त्वोर्जे त्वा' (यजु. सं.)। अग्निमीळे पुरोहितं। अग्निमीळे पुरोहितं' (ऋक्सं.) 'अग्न[2][3] आ[1] याहि [3]वीतये[2]। अग्न आ याहि वीतये' (सामसं.)" इति। इह प्रतिशाखं (१) मन्त्राः, (२) ब्राह्मणम्, (३) निरुक्तम्, (४) श्रौतं (५) स्मार्तं च सूत्रं (कल्पः) इति स्वाध्यायस्वरूपमावश्यकम्।

इतरेषां तु सांख्ययोगदर्शने भगवद्गीता चेति स्वाध्यायः। इति **ब्रह्मयज्ञः**।

( २ ) पितृयज्ञस्तु तर्पणमिति स्मर्यते । तत्र पितरो मृता एवो-द्दिश्यन्ते, न तु जीवन्तः ; श्रुतिस्मृतिव्यवहाराणां तथैव प्रवृत्तिदर्शनात् तर्पणश्राद्धशब्दयोस्तादृशपितृकर्मस्वेव निरूढत्वाच्च । तृप्यन्ति तर्पयन्ति वा अनेनेति तर्पणम् । श्रद्धा हेतुत्वेनास्यास्तीति श्राद्धम् । कर्मनामधेयमेतत् । 'श्राद्धे शरदः' ( ४ । ३ । १२ ) इत्येवमादिस्मरणात् । तथाहि—

'अग्नये कव्यवाहनाय स्वाहा;
सोमाय पितृमते स्वाहा' ( शु. य. सं. २ । २९ )
'अत्र पितरो मादयध्वम्' ( शु. य. सं. २ । ३१ )
"पितृभ्यः स्वधायिभ्यः स्वधा नमः ।
पितामहेभ्यः स्वधायिभ्यः स्वधा नमः ।
प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ।'
अक्षन् पितरः ।
अमी मदन्त पितरः ।
अती- तृपन्त पितरः ।
पितरः शुन्दध्वम् ।" ( शु. य. सं. १९ । ३६ )

'ये समानाः समनसः पितरो यमराज्ये ।
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥' (शु. य. सं. १९ । ४५)

'द्वे सृती अशृणवं पितृणा-
महं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत्समेति
यदन्तरा पितरं मातरं च ॥' ( शु. य. सं. १९ । ४७ )

इत्येवमादितात्पर्यवान्मनुराह स्वस्मृतौ तृतीयाध्याये—

"मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः ।
तेषामृषीणां सर्वेषां पुत्राः पितृगणाः स्मृताः ॥ १९४ ॥
ऋषिभ्यः पितरो जाताः पितृभ्यो देवमानवाः ।

देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः ॥ २०१ ॥
देवकार्याद् द्विजातीनां पितृकार्यं विशिष्यते ।
दैवं हि पितृकार्यस्य पूर्वमाप्यायनं श्रुतम् ॥ २०३ ॥
अग्नेः सोमयमाभ्यां च कृत्वाप्यायनमादितः ।
हविर्दानेन विधिवत् पश्चात् संतर्पयेत् पितॄन् ॥ २११ ॥
म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ।
विप्रवद् वापि तं श्राद्धे स्वकं पितरमाशयेत् ॥ २२० ॥
स्वाध्यायं श्रावयेत् पित्रे धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणान्यखिलानि च ॥ २३२ ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतुपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ॥ २३५ ॥
असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद् दर्भेषु विकिरश्च यः ॥ २४५ ॥
आसपिण्डक्रियाकर्म द्विजातेः संस्थितस्य तु ।
अदैवं भोजयेच्छ्राद्धे पिण्डमेकं तु निर्वपेत् ॥ २४७ ॥
पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी ॥ २६२ ॥
यद् यद् ददाति विधिवत् सम्यक् श्रद्धासमन्वितः ।
तत्तत् पितॄणां भवति परत्रानन्तमक्षयम् ॥ २७५ ॥
अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पाञ्चयाज्ञिकमन्वहम् ॥ २८१ ॥
यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।
तेनैव कृत्स्नमाप्नोति पितृयज्ञक्रियाफलम् ॥ २८३ ॥
वसून् वदन्ति तु पितॄन्, रुद्रांश्चैव पितामहान् ।
प्रपितामहाँस्तथाऽऽदित्यान्, श्रुतिरेषा सनातनी ॥ २८४ ॥

तदेतत्पद्धतीकृत्य **याज्ञवल्क्यः** स्वस्मृतावाचाराध्याये प्राह स्म ।
यत्रैवमुपसंहारः—

'वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄञ्श्राद्धेन तर्पिताः ॥
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥' ( २६९-२७० )

एवं **कात्यायनेन** मुनिना निर्मितानि नवकण्डिकात्मकानि श्राद्धसूत्राणि द्रष्टव्यानि ।

'पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ।' इति च (भ. गी. १ । ४१)

अथ तर्पणं श्राद्धं चेति कथं मृतानां प्रीतिमुत्पादयत इति किंचिन्मीमांस्यते—अथ मृतानामिति भणितिस्तु—

'मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पना ॥'

इत्येवंप्रायाणां चार्वाकतदाभासभाषणानां सुदूरनिरासार्थम् । किं वा, आस्तिकदर्शनेषु जीवतां श्राद्धविधानाभावान्मृतानामिति स्फुटप्रतिपत्त्यर्थम् । संनिहितलिङ्गशरीरा देवदत्तादिपदव्यपदेश्याः पितरः श्रद्धाभक्तिपुरस्कृतेन आज्ञाविधानेन, व्यवहितलिङ्गशरीराः श्राद्धविधानेन च पुत्रैः सत्क्रियन्ते । किं बहुना, शरीरिणामनुबन्धेन शरीराण्यपि मन्दिराणीव सत्क्रियन्त इति चाचार्वाकं प्रत्यक्षो व्यवहारः । सोऽयं शरीरिणो शरीरान्तरेषु संचारः—

'वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥' (गी. २ । २२)

इत्येवं व्युत्पाद्यते । अत्र शरीराणि अपञ्चीकृतभूतोत्थानि पञ्चीकृत-

भूतोत्थानि च यथाप्रसङ्गमायोजनीयानि । अथ येषामनुबन्धेन देवदत्तादिपदव्यपदेश्याः पितर इति प्रतिगृहं संज्ञायन्ते ते तावच्चन्द्रमण्डलवर्तिनो लभ्यन्ते । अतएव—

"विधूर्ध्वभागे पितरो वसन्तः
स्वाधः सुधादीधितिमामनन्ति ।
पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे
दर्शे यतो,ऽस्माद् द्युदलं तदैषाम् ॥"

इति गणितगोलदर्शनपुरःसरं सिद्धान्तशिरोमणौ **भास्कराचार्येण** निरूपितम् । एवं पितृणां दिनार्धं तिथिश्च दर्शो भवति, अतोऽत्र विशेषेण पितृकर्माणि क्रियन्त इति प्रसिद्धम् । पितृणां वर्णने—'उदीरतामवर–' इति मन्त्रा अवेतव्याः ( ऋ. सं. १० मं. १ अ. १५ सू. १–१४ मं. )—( य.सं. १९ अ.४९–६१ कण्डि. ) एवमन्येऽपि मन्त्राः। अथैतैश्चन्द्रमण्डलाधिष्ठानैरधिष्ठातृभिर्वसुरुद्रादितिसुतैः संगता देवदत्तादयः श्राद्धकर्मणि संप्रदानभूताः पित्रादिपदव्यपदिष्टाः पुत्रादिदत्तेनान्नपानादिना तृप्ताः सन्तस्तान् देवदत्तादीन् प्रातिस्विकशुभाशुभकर्मवशेन स्वर्गनरकादिगतानपि स्वनिष्ठेन ज्ञानशक्त्यतिशययोगेन तर्पयन्ति, पुत्रादींश्च श्राद्धकारिणो धनधान्यादिफलेन योजयन्ति, तेषां तथाविधाधिकारवत्त्वात्, इत्युद्दिष्टप्रमाणसिद्धो निष्कृष्टार्थः । इति **पितृयज्ञः** ।

( ३ ) होमो दैव इत्याचक्षते। तत्र देवा अग्न्यादयो मन्त्रब्राह्मणमीमांसामीमांसिता एव नत्वस्मत्सजातीया भूदेवाः, एतेषां भौतिकसर्गेतु मनुष्यत्वेन परिगणितत्वात् । तथाच पठ्यते सांख्ये– 'मानुष्यश्चैकविधः' ( सां. का. ५३ ) इति । अग्न्यादिदेवतानां तद्भक्तिविशेषाणां च परिचयार्थं **नैरुक्तं** दैवतकाण्डमप्याकलनीयम् ।

अत्रैतत्सारम्–देवदत्तादय इवाग्न्यादयोऽधिष्ठातृरूपेण चेतना अधिष्ठानरूपेणाचेतना उभयथा देवतापदव्यपदिष्टा विराजो ब्रह्मणः पूर्वोत्तरमीमां-

-साभ्यां मीमांसनीयाः। इह प्राधान्येन पूर्वमीमांसापथिका नैरुक्ताः, उत्तरमीमांसापथिका अपरे। ये नैरुक्तैः, पक्षान्तरप्रतिपन्नतया स्मर्यन्ते। सेयं पक्षान्तरप्रतिपत्तिरपि वेदशरीरस्य शब्दार्थवन्नित्यसंश्लिष्टैव। यौगिकेन भावेन देवदत्तादय इव नैसर्गिकेणाग्न्यादयः स्वयंसिद्धाः श्रूयन्ते स्मर्यन्तेऽपि। तथाहि—

'त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव (३३३९) चासपर्यन्।' (य. सं. ३३।७)

"त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति सहोवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति।" (शतपथब्रा. १४ कां. ५ प्रपा. ७ ब्रा. १ कंडि.)

'सद्यो जातो व्यमिमीत यज्ञ-
मग्निर्देवानामभवत् पुरोगाः।
अस्य होतुः प्रदिश्यृतस्य वाचि
स्वाहाकृतं हविरदन्तु देवाः॥'
(ऋ. सं. १० मं. ६ अ. ११० सू.॥ य. सं. २९।३६)

एवमादिमन्त्रब्राह्मणलिङ्गादेव भगवता **पाराशर्येण** वेदान्तदर्शने—'विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्' (१।३।२७) इत्यनेन देवतानां विग्रहवत्त्वं, विग्रहवत्तया च 'भावं तु बादरायणोऽस्तिहि' (१।३।३३) इत्यनेन तेषां ब्रह्मविद्यास्वधिकारभावश्च प्रादर्शि। भगवता **पतञ्जलिनापि** योगदर्शने—'स्वाध्यायादिष्टदेवतासंप्रयोगः' (२।४४) इत्यनेन प्रणवादिजपमाहात्म्यादिष्टदेवतासांनिध्यं न्यरूपि। अन्यैरप्यवोचि—

"विग्रहो-महिमा भोग ऐश्वर्यं च प्रसन्नता।
फलप्रदानमित्येतत् पञ्चकं विग्रहादिकम्॥" (शारीरकव्याख्या)

सोऽयमर्थो भगवता **वासुदेवेना**त्मनः सखायं प्रति—

'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान् भावयताऽनेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥' ( गी. ३ । १०-११ )

इत्यादिना विशदं व्युदपादि । अथ भावसूत्रशारीरके आचार्य-स्वामिनाप्यशिक्षि—"यस्तु ब्रूयाद् इदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति स जगद्वैचित्र्यं प्रतिषेधयेत् । इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियो नास्तीति ब्रूयात्, ततश्च राजसूयादि-चोदना उपरुन्ध्यात् । इदानीमिव च कालान्तरेऽपि अव्यवस्थितप्रायान् वर्णाश्रमधर्मान् प्रतिजानीत, ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात्" इति ।

इत्थंच यथा पितरो नास्मदादयो लौकिकाः श्राद्धदेवता एव, श्राद्धं च न श्रद्धावन्मात्रविश्रान्तमेव; तथा देवता अपि नास्मदादीनां भूदेवता-पादनकौशलेनापलायितुं शक्या इति व्यक्तम् । शेषं—'विष्णुः शिवः शक्तिगणेशसूर्या—' ( १७१ श्लो. ) इत्यत्र वक्ष्यते । इति **देवयज्ञः** ।

( ४ ) बलिर्भौत इति । तथाच पठ्यते—

'देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् ॥ ( याज्ञ, १ । १०३)
'शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणां च शनकैर्निर्वपेद् भुवि ॥' ( मनु. ३ । ९२ )

इति **भूतयज्ञः** ।

( ५ ) नृयज्ञोऽतिथिपूजनम् । अतिथिस्तु—

'अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥' ( याज्ञ. १ । १११ )
'एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥' ( मनु. ३ । १०२ )

'अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः ।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥' (याज्ञ. १ । १०७)
'तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥' ( मनु. ३ । १०१ )

अयमाशयः—श्रुताध्ययनसंपन्नः श्रोत्रियः, एकशाखाध्ययनसंपन्नो वेदपारगः । उभावपि अतिथिभावेन प्राप्तौ मान्यौ । अनित्यावस्थानान्न वर्तते द्वितीया तिथिरस्येत्यतिथिः । एवं यो विद्यया तपसा जात्यादिना च विशिष्टः समो वा पथिकः, सोऽतिथिः स्यादिति साधारण्यादवधार्यते । ततो ब्राह्मणस्य गृहे ब्राह्मण एव, न क्षत्रियादिरतिथिः, क्षत्रियस्य गृहे ब्राह्मणः क्षत्रियश्च, न वैश्यादिरिति यथायथं ज्ञेयम् । परमार्थतस्तु अतिथिकाले प्राप्ता ब्राह्मणादयः सर्वेऽपि स्वस्वाधिकारानुरूपं यथाशक्ति गृहस्थेन आतिथेयेन सत्कर्तव्या एव । परमिदमपि कदापि न विस्मर्तव्यम्—

'पाखण्डिनो विकर्मस्थान् वैडालव्रतिकाञ् शठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥' ( मनु. ४ । ३० )

पाखण्डिनः=वेदबाह्यव्रतलिङ्गधारिणः । एते पाषण्डा अपि कथ्यन्ते । 'पाषण्डाः सर्वलिङ्गिनः' इत्याग्नेयकोशात् । विकर्मस्थाः=वेदविरुद्धकर्मनिष्ठाः । वैडालव्रतिकाः—

'धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः ॥' ( ४ । १९५ )

इति मनुनैव व्याकृताः । विडालव्रतं मार्जारदम्भः । शठाः=वेदेषु अश्रद्दधानाः । हैतुकाः=वेदविरोधितर्ककुशलाः । बकवृत्तयः—

'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकवृत्तिधरो द्विजः ॥' ( ४ । १९६ )

इति मनुनैव लक्षिताः । बकवृत्तिर्बकदम्भः । धर्मध्वजीति प्राचीनलिङ्गाभिप्रायेण, नवीनलिङ्गाभिप्रायेण तु वेदध्वजीति । यत इदानींतना

धार्मिकशठाः शून्यललाटा दृश्यन्ते । अत्र खिन्नेन मयकापि पुरोभागितासादि—

'यद् रोचते तन्मतमादिशन्तो
यन्नेष्यते तद् विमतं वदन्तः ।
वेदेन वेदध्वजिनोऽद्यलोके
किं कुर्वते तन्न विदन्ति सन्तः ॥'

अथवा, किमियतापि—

"आयातो भगवान् कलिः, सहि गतः कालोऽद्य धर्मप्रियो,
हंहो ! कल्पनयाऽनया कुटिलयाऽऽम्नायोऽन्यथा नीयते ।
चिल्यासां परिहृत्य कर्णनयनं निष्पीड्य योगीभवं-
स्तद् भ्रातः ! समयाकुरुष्व विदधत् कर्तव्यमावश्यकम् ॥";

इति **मनुष्ययज्ञः** ।

अथ पञ्चयज्ञेषु प्रमाणम्—

"पञ्चैव महायज्ञाः । तान्येव महासत्राणि, भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति ॥ १ ॥ अहरहर्भूतेभ्यो बलिंꣳ हरेत्, तथैतं भूतयज्ञꣳसमाप्नोति । अहरहर्दद्यादोदपात्रात्, तथैतं मनुष्ययज्ञꣳ समाप्नोति । अहरहः स्वधा कुर्यादोदपात्रा, तथैतं पितृयज्ञꣳ समाप्नोति । अहरहः स्वाहा कुर्यादा काष्ठात्, तथैवं देवयज्ञꣳसमाप्नोति ॥ २ ॥ अथ ब्रह्मयज्ञः । स्वाध्यायो वै ब्रह्मयज्ञः, तस्य वा एतस्य ब्रह्मयज्ञस्य—वागेह जुहूः, मन उपभृत्, चक्षुर्ध्रुवा, मेधा स्रुवः, सत्यमवभृथः, स्वर्गोलोक उदयनं यावन्तꣳह वा इमां पृथिवीं वित्तेन पूर्णां ददल्लोकं जयति, त्रिस्तावन्तं जयति भूयाꣳसं चाक्षय्यं, य एवं विद्वानहरहः स्वाध्यायमधीते, तस्मात् स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ पय आहुतयो ह वा एता देवानाम् । यदृचः स य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते, पय आहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्तास्तर्पयन्ति योग-

क्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिर्घृतकुल्या मधुकुल्याः पितृन्स्वधा अभिवहन्ति ॥ ४ ॥ आज्याहुतयो ह वा एता देवानाम् । यद्यजूꣳषि स य एवं विद्वान् यजूꣳष्यहरहः स्वाध्यायमधीत आज्याहुतिभिरेव तद्देवाँस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे० ॥ ५ ॥ सोमाहुतयो ह वा एता देवानाम् । यत्सामानि स य एवं विद्वान् सामान्यहरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवाँस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे० ॥ ६ ॥ मेद आहुतयो ह वा एता देवानाम् । यदथर्वाङ्गिरसः स य एवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेद आहुतिभिरेव तद्देवाँस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे० ॥७॥ मध्वाहुतयो ह वा एता देवानाम् । यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशꣳस्यः स य एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशꣳसीरित्यहरहः स्वाध्यायमधीते मध्वाहुतिभिरेव तद्देवाँस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रे० ॥ ८ ॥ तस्य वा एतस्य ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्जति तस्मादेवं विद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्जत्यधीयीतैव वषट्काराणामच्छम्बट्कारायाति ह वै पुनर्मृत्युं मुच्यते गच्छति ब्रह्मणः सात्मताꣳ स चेदपि प्रबलमिव न शक्नुयादप्येकं देवपदमधीयीतैव तथा भूतेभ्यो न हीयते ॥ ९ ॥” इति ( शतपथब्रा. ११ कां. ३ प्रपा. ८ ब्रा. )

इति गृहशल्योद्धारः ।

अथ ये **मन्वादि**निर्णीतं गृहाधिकारशासनं प्रज्ञापराधाद् विपरीतमनुतिष्ठन्ति तानभियुक्तानुद्धर्तुमिदमारभ्यते—अयि ! वर्णाश्रमानुबन्धि पारम्परिकं कुलकर्म यद् यथानुष्ठितं तत्तथा यथासमयं कल्पानुकल्पदशानुष्ठातव्यं न कथंचिदपि वर्जितव्यम् तदिदमुपदिष्टं भगवता **मनुना**—

"द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि, न प्रसज्जेत विस्तरे ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदः ।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥" (३ । १२५-१२६)

एवं **पारस्करगृह्यसूत्रे** आवसथ्याधाने **कर्कादि**कृतब्राह्मणभोजन-व्याक्रिययापि त्रिभ्योऽधिका ब्राह्मणसंख्या न लभ्यते । समीचीनतरा चेयमृषीणामभ्यनुज्ञानपद्धतिः । कथमन्यथा गर्भाधानादिश्मशानावसानके जातिनिबन्धने कर्मणि धनिको वा दरिद्रो वाप्यविशेषेणाधिक्रियेत । आश्वपाकान्तं विभाव्यमानो जातिधर्म एव वा विलीयेत । नतरामित्थम् ॥ संप्रति वर्णाश्रमव्यवहारावहेलनेऽपि क्वापि श्रेणौ तिष्ठतामायुष्मतां जाति-व्यवहारादनिर्मोक एव । अहो जातिनिबन्धना व्यक्तिविडम्बना । अथ बहवो वर्णं चाश्रमं चारूढमात्मानं मन्यमाना अपि यथाशासनं सांस्कारिकं कर्म लोपयन्तोऽपि भोजनभट्टादिप्रणुन्ना औद्वाहिके वा आन्त्येष्टिके वा तैर्थिके वा कर्मानुष्ठानेऽहंपूर्विकया संचरणा ब्राह्मणजातिभोजनाख्यया तिरोहितां नानावर्णान्तरितां स्त्रीबालतराङ्गितां यथाशक्ति स्फारीकृतां जनतां स्वावासविक्रयावधिकचेष्टयापि भोजयन्ति भोः । किमेतन्न जानीमहे । किं वा लोकालोकबहिर्भूतिप्रेक्षणकमेतद् विधुरवृत्तस्य । उपपन्नानधिकृत्यापि ब्राह्मणभोजनव्यवस्था **यज्ञपार्श्वे** निरूपितैवेत्थम्—

'गर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद् दश ( १० ) ।
शतं (१००) विवाहसंस्कारे, पञ्चाशन् (५०) मेखलाविधौ ॥
आवसथ्ये त्रयस्त्रिंशत् ( ३३ ) श्रौताधाने शतात्परम् ।
अष्टकं, ( १०८ ) भोजयेद् भक्त्या तत्तत्संस्कारसिद्धये ॥
सहस्रं ( १००० ) भोजयेत् सोमे,—' इत्यादि ।

अथापरिचितधर्मव्यवस्थेषु गृहस्थेषु क्वावपि दम्पती तीर्थविशेषमवतरन्तौ दानातिशयप्रसक्तावुत्साहाप्यायितौ पतिर्जायां तीर्थप्वाङ्क्षाय दत्वा

परस्परानुमतेन निष्क्रयीकृतेन हेमरजतेन तां गृहीत्वा जायापती भवन्तावात्मानं श्रेयोभाजनं मन्येते । कावपि पुनरलब्धात्मजौ साधुवकेन कृताकृतसमयौ दैवविलसितेन प्रसादफलितेनात्मजं लब्ध्वा स्तनंधयमस्तनंधयं वा तं तस्मा उन्नतकाय बकाय प्रतिपादयेते । कावपि पुनरवस्थान्तरमापन्नौ मूढावात्मजमन्यस्मै कस्मैचन महाभागिने त्यागिने साधूपहारीकुर्वाते । भो ! भारलहतकानामेष सार्पो न्यायः । त एते साधवस्त्वेवंविधाः—

'स्वस्वाचार्यपरिक्लृप्तपथान्तरविहारिणः ।
सौधोत्सङ्गेषु विश्रान्ता वर्णिताः साधुशब्दिताः ॥'

इति गृहगर्हा ।

ते=श्रुतिस्मृतिषु रूढाः, पञ्चयज्ञाः=पाठादयो व्याख्यातस्वरूपाः । अग्निहोत्रादाविवात्र यज्ञशब्दो गौणः । विष्णुरुद्रयागादौ तु यज्ञशब्दो गौणतरतमः । वस्तुतस्तु तत्रादरार्थं यज्ञशब्दो व्यवह्रियते । यथा योगयज्ञादिषु ( भ. गी. ४ । २८ ) । यत्र खलु ' ( १ ) आश्रावय ( २ ) अस्तु श्रौषट् ( ३ ) यज ( ४ ) ये यजामहे ( ५ ) वौषट्' इति मन्त्रपञ्चकं विनियुज्यते स कर्मविशेषो यज्ञशब्दस्य मुख्यो विषय इति श्रौतं तत्त्वम् ॥ सांध्यकृत्यानि=संध्योपासनं सावित्रीजपः त्रेताग्निसाध्यमग्निहोत्रं च, तैः सह सहसांध्यकृत्याः समयानुसारं संपादनीयाः । येऽनुष्ठिता इत्याध्यात्मिकबलप्रदर्शनार्थम् ॥ १४६ ॥

**वर्णश्रुताभ्यामिति** । अत्र ( १९१४ ) वैक्रमाब्दे लक्ष्मणपुरे **वाजिदअलीशाहप्रभृतय** उदाहरणम् ॥ १४७ ॥

**प्रदीपिकावदिति** । निलिम्पप्रतिमा इव स्त्रिय आराद्=दूरतः समीपतश्च, यथाधिकारं पुरुषैः बहुना आदरेण संभावनीयाः । इह समर्तृकाः संभाव्यन्त एव । अमर्तृका असंतानाश्चापि संभावनीया एव, न कथंचिदपि विप्रकर्तव्या श्रेयोर्थिभिः । निलिम्पप्रतिमा अपि तत्पीठभूता आदरास्पदमेव । यत्त्विदानीं गतानुगतिकन्यायेन बहुत्र निलिम्पानां

प्रतिमाः प्रतिष्ठाप्यन्ते तन्न शोभनम् । अद्यावधि प्रतिष्ठितानामेव बहुषु स्थलेषु योगक्षेमप्रबन्धवैधुर्यात् । प्रतिमाः सीदन्ति, मन्दिराणि गलन्ति, रजांसि राशीभवन्ति । अहो धर्मभ्रातृषु जीवत्सु केयं दुरवस्था । तर्हि नूतनप्रतिष्ठापनविलसितेन किम् । स्वर्गस्य लौकिकप्रतिष्ठाया वा साधनान्तराणि बहूनि । अत उच्यते विश्वजनीनमेतत्—

'नूत्नारम्भं परित्यज्य प्रत्नोद्धारे प्रयत्यताम् ।
एवं धर्मश्च कीर्तिश्च स्वेष्टापूर्ताद् विशिष्यते ॥' ॥ १४८ ॥

**धर्मं चेति** । संपत्=स्थावरजङ्गमरूपा । सत्क्रिया=लौकिक्या वैदिक्या च मर्यादया निरूपित आदरो न तु वैतालचेष्टितेन सर्वस्वविनियोगः । दानम्, अत्राह **याज्ञवल्क्यः**—

'गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।
नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥' ( १ । २०१ )
'दातव्यं प्रत्यहं पात्रे निमित्ते तु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥' ( १ । २०३ )
'यथाकथंचिद् दत्वा गां धेनुं वाऽधेनुमेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥' ( १।२०८ )

गोदानानुकल्पाः—

'श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥' ( १ । २०९ )
'सर्वधर्ममयं ब्रह्म, प्रदानेभ्योऽधिकं यतः ।
तद् ददत् समवाप्नोति ब्रह्मलोकमविच्युतम् ॥' ( २ । २१२ )
'सर्वेषामेव दानानां विद्यादानं परं स्मृतम् ।'
( सूतसंहि. ज्ञानयोगखं. ८ अ. ) ।

'दानमेकं कलौ युगे' ( १ । ८६ ) इति **मनुः** । एकं प्रधानम्, न तु केवलम् । 'दीयते सेवया कलौ' ( पराशरस्मृ. १ । २९ ) इति कालि-

युगीयदातृस्वभावाख्यानम् । इदं त्वितरामनुपादेयमित्यपि—'सेवादानं हि निष्फलम्' ( पराशरस्मृ. १ । ३० ) इत्यनेन प्रतिपादितम् । अहो इदानीं सेवयैव दानमिति विशेषः शान्तिके पौष्टिके श्राद्धिके चापि कर्म-कलापे द्रष्टव्यः । सत्पात्रं तु—

"न विद्यया केवलया, तपसा वापि पात्रता ।

यत्र वृत्त, मिमे चोभे, तद्धि पात्रं प्रकीर्तितम् " ( १ । २०० )

इति **याज्ञवल्क्येनैव** प्रदर्शितम् । अन्यत्राप्युत्तराधिकारी औरसो दत्तक अन्तेवासी वा सत्पात्रमेवापेक्ष्यते । इतरथा निधानमप्यपहारयेत् । अत्र दानधर्ममाहात्म्ये श्रुतिः—

'उच्चा दिवि दक्षिणावन्तो अस्थु-

र्ये अश्वदाः सह ते सूर्येण ।

हिरण्यदा अमृतत्वं भजन्ते

वासोदाः सोम प्रतिरन्त आयुः ॥'

( ऋ. सं. १० मं. ६ अ. १०७ सू. )

॥ १४६ ॥

**नानाविभूत्यामिति** । नहुषचरितं भारतादौ प्रसिद्धम् । उत्पथं प्रवृत्तान् समृद्धान् प्रतीदमुच्यते, वस्तुतस्तु मनुष्यमात्रविषयमिदम् । अथे-दमपि पुनः प्राकृतिकम्—

'सृष्टोऽसौ मानुषः पिण्डो यद्देश्यैः शुक्रशोणितैः ।

तद्देशाहारवेषाद्यैः कलितः फलितः स्मृतः ॥

येनास्य पितरो याता येन याताः पितामहाः ।

तेन यायात्सतां मार्गमिति मन्वादिवागपि ॥'

वैपरीत्येतु—

'कल्पापदच्युतखगा इव नीचसंगात्

पूर्वोत्तमार्गमपहाय चरन्ति वक्रम् ।

चेदित्यहो ! पृथुलबिम्बविलोकनं किं
सर्वोऽपि रूपमखिलं विपदस्य पश्येत् ॥' इति ।

अहो ! लौकिकी पारलौकिकी वा सकलैव प्रवृत्तिनिवृत्तिकथानिका मनोनिबन्धनैव लक्ष्यते, मनो हि प्रकृत्यैव चपलम् । अस्य निग्रहोपायावभ्यासवैराग्ये अपि बहुपायाद् दुर्ग्रहे इति प्रेक्षावते पाराशर्योपदिष्टं भैषज्ययोगायितमेतत्—

"नाक्षैर्दीव्ये,न्नाददीतान्यवित्तं, न वा योनी यस्य वित्तं प्रगृह्णात् ।
क्रुद्धो न चैव प्रहरेत धीमाँ,स्तथास्य स्यात्पाणिपादं सुगुप्तम् ॥'
'नाक्रोशमिच्छे,न्न मृषा वदेच्च, न पैशुनं जनवादं च कुर्यात् ।
सत्यव्रतो मितभाषोऽप्रमत्त,स्तथास्य स्याद्वाग्द्वारमथो सुगुप्तम् ॥'
'नानाशनः स्या,न्न महाशनः स्या,दलोलुपः साधुभिरागतः स्यात् ।
यात्रार्थमाहारमिहाददीत, तथास्य स्याज्जाठरी द्वारगुप्तिः ॥'
'न वीरपत्नीं विहरेत नारीं, न चापि नारीमनृतावाह्वयीत ।
भार्याव्रतं चात्मनि धारयीत, तथास्योपस्थद्वारगुप्तिर्भवेत् ॥'
'योऽघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥'' इति ।

(म. भा. शां. प. मो. ध. २९९ अ.)

इति गृहस्थाश्रमीया वेददृष्टिः ।

## अथ वानप्रस्थदिक् ।

निवृत्ततर्षः सुतदारवित्ते
प्ररूढहर्षः परमैकतत्त्वे ।
निरस्तभोगो मुनिवन्यवृत्तिः
प्रमोदते कोऽपि विविक्तसेवी ॥ १५१ ॥

निवृत्तिशास्त्राण्यभयंकराणि
कर्माणि वीतस्पृहसंगतानि ।
आसक्तिवर्जं कलयन्विवेकी
वैराग्यसौभाग्यसुखानि विन्देत् ॥ १५२ ॥

अभ्यस्यमानोपनिषद्विमर्ष-
पीयूषवर्षार्पितशान्तितृप्तः ।
ओंकारतद्वाच्यनिविष्टचेता
मैत्र्यादिवृत्तिप्रणयी सुखी स्यात् ॥ १५३ ॥

इदानीं दशभिर्वानप्रस्थाश्रमं निरूपयति—**निवृत्ततर्ष इति।** इहेदं प्रागाकलनीयम्—

"महर्षिपितृदेवानां गत्वाऽऽनृण्यं यथाविधि ।
पुत्रे सर्वं समासज्य वसेन्माध्यस्थ्यमाश्रितः ॥
एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः ।
एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति ॥"

(मनु. ४ । २५७–२५८)

'दशलक्षणकं धर्ममनुतिष्ठन् समाहितः ।
वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥
संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन् ।
नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ॥' (मनु. ६ । ९४–९५)

इत्यादिना गृहेषु निवसत एकः संन्यासप्रकारो लभ्यते । तदनु—

'एवं गृहाश्रमे स्थित्वा विधिवत् स्नातको द्विजः ।
वने वसेत्तु नियतो यथावद् विजितेन्द्रियः ॥' ( मनु. ६ । १ )

इत्यादिना वनेषु निवसतो द्वितीयः प्रकारः । दशलक्षणको धर्मोऽग्रे । ततो गृहेषु वनेषु वा निवसन् यथाशासनं वानप्रस्थाश्रमी भवति । वनमिव प्रस्थो वनस्य वा प्रस्थः प्रवेशः, तत्र भवो वानप्रस्थ इति । 'वनेषु च विहृत्यैव तृतीयं भागमायुषः' ( मनु. ६ । ३३ ) इति कथनादस्य समयस्तृतीया विंशतिका तृतीया पञ्चविंशतिका वा कल्प्यते । अथ—

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' ( म. २ । ९४ )

इति बहुत्र पठितं पर्यालोचयता महापुरुषेणाश्रमपरिपन्थिन्यपि समयेऽस्मिन्नामरणान्तं योनिकीटेनैव नो भवितव्यम्, इन्द्रियाश्वानां सद्भावेष्वेव विरक्तेनापि भवितव्यमेव । अत्र केवलमेकं विवेकमेव शरण्यं मन्यन्ते मन्यामहे ब्रुवते ब्रूमहे च । इदानीमस्माकमन्यदपि कर्तव्यशेषमवशिष्यत इत्युपकारदृष्ट्या समयाकर्तव्य एव । तथाच पठन्ति—

'गार्हस्थ्यगर्हां संत्यज्य देशोद्धाराय दीक्ष्यताम् ।
देशोद्धारे प्रवृत्तस्य स्वोद्धारः सहजो मतः ॥'

इत्यादि ॥ २५१ ॥

**निवृत्तिशास्त्राणीति** । निवृत्तिशास्त्राणि पुराणेतिहासप्रभवाणि सूतसंहिताभगवद्गीतासजातीयानि । वीतस्पृहसंगतानि यत्नतोऽन्वेषणीयानि ॥ २५२ ॥

**अभ्यस्यमानेति** । अभ्यस्यमानानामुपनिषदां बृहदारण्यकच्छान्दोग्यप्रभृतीनां यो विमर्शो मीमांसनं स एवान्तःकरणाप्यायकत्वात् पीयूषवर्षाः ताभिरर्पिता संपादिता या शान्तिः तया तृप्तः । 'आवृत्ति-

रसकृदुपदेशात्' (वे. द. ४ । १ । १) इति स्मरणात् । ओंकारो वाचकः प्रणवः, तस्य वाच्यः सर्वदेवतोपसंहारः परमेश्वरः, तत्र निविष्टं परिचितं चेतो यस्य सः । मैत्री आदिर्यासां ताः करुणामुदितोपेक्षा वृत्तयः तत्र प्रणयी प्रीतिमान् सुखी स्यात् । अयमर्थः प्राग् व्याकृत एव । विशेषस्तूच्यते—अकारोकारमकाराणां कर्मधारये ओमिति मनुस्मृत्यादितो लभ्यते । 'अकारं चाप्युकारं च मकारं च प्रजापतिः ।' (२ । ७६) इति **मनुः** । अवतीति ओमिति तु सुप्रसिद्धतरम् । 'ओमित्येकाक्षरं ब्रह्म' (८ । १३) इति **गीता**स्मृतिः । उभयथापि पदत्वम् । तथा अकाराद्यवयवशक्त्या वाक्यत्वमपि । तदिदम्—

"त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत् तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः,
समस्तं व्यस्तं त्वां शरणद ! गृणात्योमिति पदम् ॥"

इति महिम्नाख्यपद्येनापि व्याख्यायते । विस्तरस्तु माण्डूक्योपनिषदादिश्रुत्युपबृंहकेभ्यो निबन्धेभ्योऽवसेयः । ओंकारस्य तत्सतीर्थ्यस्य ह्रींकारस्यापरेऽप्यवयवा आगमेषूपदिश्यन्ते—

'अकारश्चाप्युकारश्च मकारो बिन्दुरेव च ।
नादः शक्तिश्च शान्तश्च तारभेदा प्रकीर्तिताः ॥
हकारो रेफ ईकारो बिन्दुनादौ तथैव च ।
शक्तिशान्तौ च संप्रोक्ताः शक्तेर्भेदास्तु सप्तधा ॥'

एवमत्र प्रथमः=अकारोकारमकारैर्जाग्रत्स्वप्नसुषुप्तिसाक्षिणीं, बिन्दुनादशक्तिशान्तैश्च तुरीयतुरीयातीतशक्तिशान्तात्मिकां संविदं प्रतिपादयन्निष्प्रपञ्चसंविदि पर्यवस्यति । इत्थं द्वितीयोऽपि=हकाररेफेकारबिन्दुनादशक्तिशान्तलक्षणैः सप्तभिरिति दिक् ॥ १५३ ॥

**विश्रान्तिलब्ध्यै परिणामवाद-**

दृष्ट्वा महेशप्रतिमादिलिङ्गे ।
आर्यां सपर्यां विदधत्प्रगाढ-
श्रद्धोद्भवद्भक्तिभरो हि सिध्येत् ॥ १५४ ॥
अमूर्तभावेऽपि दिशस्तदीय-
मूर्तौ यथा कार्यमुदाहरन्ति ।
तथा जगद्व्यापकविश्वनाथ-
पूजाप्रयोगः प्रतिमानुषङ्गी ॥ १५५ ॥
अरूपयोगस्तु सरूपताया-
मलौकिकं रूपमुदाजहार ।
अतो हि शास्त्रे पुरुषोत्तमादि-
शब्दा यथार्थाक्षरयोगिनः स्युः ॥ १५६ ॥
क्रिया विरुध्येत यदैकदेश्या
नन्वीशमुद्दिश्य विधीयमाना ।
तदा तु शाब्दस्तुतिपूर्विकासौ
कथं क्रियेत प्रणतिः परस्मै ॥ १५७ ॥

विश्रान्तिलब्ध्या इति । विश्रान्तिस्तु—

"शान्तिमेति न विकल्पविप्लव,-
श्चिच्चमत्कृतिरसो न वर्धते ।
लुप्यते न घनवासनावनं
क्वापि तृप्तिरसमा न जायते ॥
मन्यते न कृतकृत्यतां जनो
द्वैतमेघतिमिरं न भिद्यते ।
यत्र दोषशतसंकुलं मनो
न प्रसीदति, किमेतदर्चनम् ॥"

इत्येवंप्रकारैः सूक्तैरुन्नेया । इतरथा तु—

"बालिकारचितवस्त्रपुत्रिका-
क्रीडनेन सदृशं तदर्चनम् ।
यत्र शाम्यति मनो न निर्मलं
स्फीतचिज्जलधिमध्यमाश्रितम् ॥"

इत्येवमादि तावत्प्रतिदेवतायतनं प्रथितोपक्रमम् । परिणामवाद-दृष्टिस्तु—

"त्वमर्क,स्त्वं सोम,स्त्वमसि पवन,स्त्वं हुतवह,-
स्त्वमाप, स्त्वं व्योम, त्वमु धरणि, रात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं,
न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसि ॥"

इति **पुष्पदन्ताचार्योक्त्या**, तथा—

"मनस्त्वं, व्योम त्वं, मरुदसि, मरुत्सारथिरसि,
त्वमाप,स्त्वं भूमिस्त्वयि परिणतायां नहि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवमहिषि भावेन बिभृषे ॥"

इति **शंकराचार्योक्त्या** समवधेया । अत्र युष्मच्छब्दार्थे पुंस्त्री-विवक्षा ह्यौपासनिकी ततो जगत्कारणस्य परिणामः परिणमति । तत एव भगवता **शेषेण** परमार्थसारे—

"सर्वाकारो भगवा,नुपास्यते येन भावेन ।
तं तं भावं भूत्वा चिन्तामणिवत् समभ्येति ॥ ६६ ॥"

इति साधारण्यादुपसंहृतम् । **ज्ञानसंबोधेऽपि**—

'स्वभावादेकरूपापि नानात्वं प्रतिपद्यते ।
ज्ञानस्य शक्तिः संकल्पैर्लक्ष्मीश्चिन्तामणेरिव ॥'

इति । वस्तुतस्तु जगत्कारणवस्तु असदिव व्याक्रियया सदिति । एतदुक्तमन्यत्र—

"वस्तुनो भावशून्यस्य, ह्यभावस्य निराकृतेः।
कल्पनामात्रमेवैतद् यत् किंचिद् व्यपदेशनम्॥
नेत्थं विभोर्विवर्तोऽस्ति, परिणामश्च न क्वचित्।
अथवा द्वयमप्यस्तु, तथाप्यस्य न खण्डना॥"

इति। **संवित्प्रकाशे**ऽपि—

"इति निर्मलबोधैकरूपे देहपरिग्रहः।
विवर्तपरिणामाभ्यां द्वाभ्यामप्युपपद्यते॥
विवर्तेऽप्यतथारूपस्तथा भासि त्वमुच्यते।
परिणामे स एव त्वं सुवर्णमिव कुण्डले॥" इति।

**महेशप्रतिमादिलिङ्ग** इति। महेशः परमेश्वरः तस्य गुणानुषङ्गेण या प्रतिमा। प्रतिमीयतेऽनया। भूगोलस्य दृष्टान्तगोल इव, रूपान्तराचिख्यासया आलेख्यपट इव, कारणाभिधित्सया पुरुषविशेष इव। आदिशब्दाद् हृदयादि। तस्य श्रौते स्मार्ते च लिङ्गे, न स्वैच्छिके। इच्छायाः स्वातन्त्र्यात्। अत्र श्रुतयः—

'यथैव बिम्बं मृदयोपलिप्तं
तेजोमयं भ्राजते तत् सुधान्तम्।
तद्वदात्मतत्त्वं प्रसमीक्ष्य देही
एकः कृतार्थो भवते वीतशोकः॥' (श्वेताश्वतर, २।१४)

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये संनिविष्टः।' (श्वेताश्वतर. ३।१३)

'स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्।' (श्वेताश्वतर. ३।१४)

इह प्रथमया श्रुत्या सच्चिदानन्दरूपस्य आत्मतत्त्वस्य दृष्टान्तमर्यादया प्रदर्शनम्। द्वितीयया अङ्गुष्ठनिर्देशेन प्रमितत्त्वप्रतिपादनम्, तृतीयया व्यापकत्वेऽपीयत्तया व्यवस्थापनमित्येवमादिप्रपञ्चनं ब्रह्मणो मूर्तं लिङ्गमप्यवगमयति। यत्तु—

"नैनमूर्ध्वं, न तिर्यञ्चं, न मध्ये परिजग्रभत् ।

न तस्य प्रतिमा अस्ति, यस्य नाम महद्यशः ॥"(श्वेताश्व.४।१६)

इत्येवंजातीयया प्रतिमास्कन्दनं श्रूयते तदपि कार्यकोटिप्रविष्टस्य भूगोलादेरिव ग्रहणसंभावनया, आकाशादेरिवावच्छेदककल्पनया परिमाणं मा प्रसाङ्क्षीदित्येतदर्थम् । व्यापकत्वसाम्येऽपि न पारमेश्वरी व्यापकता ह्याकाशादिव्यापकतया समेति । अनन्तादिपदार्थवत् । अत एव हि—

"अणोरणीयान्, महतो महीयान्

आत्मा गुहायां निहितोऽस्य जन्तोः ॥"( श्वेताश्व. ३।२० ) इति ।

**आर्यां सपर्यां विदधादिति ।** आर्या श्रुतिस्मृतिसंमता, सपर्या पूजा । सेयं द्विविधा बहिरन्तर्वृत्तित्वात् । तत्राद्या पञ्चाद्युपचारचणा । द्वितीया—

"महीं मूलाधारे, कमपि मणिपूरे, हुतवहं

स्थितं स्वाधिष्ठाने, हृदि मरुत, माकाशमुपरि ।

मनोऽपि भ्रूमध्ये, सकलमपि भित्वा कुलपथं

सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥"

"सुधाधारासारैश्चरणयुगलान्तर्विगलितैः

प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा ।

अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं

स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥"

इति **शंकराचार्यानु**शिष्टा, तथा—

"ये देवयानपितृयानविहारमेकी ( कं )-

कृत्वा मनः करणमण्डलसार्वभौमम् ।

याने निवेश्य तव कारणपञ्चकस्य

पर्वाणि पार्वति ! नयन्ति निजासनत्वम् ॥"

इति **लघ्वाचार्यानु**शिष्टा चान्वेष्टव्या । एवं ब्रह्मोपासनां कुर्वाण-

उपासकधौरेयः, प्रगाढा या श्रद्धा गुरुवेदान्तवाक्येषु विश्वासः तया उद्भवन् उन्मिषन् भक्तेः परानुरक्तेः भरः प्राग्भारो यस्य तादृशो हि सिध्येत् कृतकृत्यतां प्रतिपद्येत ॥ १५४ ॥

**अमूर्तभावेऽपीति** । यथा दिशो व्यापकरूपाया अमूर्तकत्वेऽपि सूर्येन्दुतारोदयादिलिङ्गात् तदीयमूर्तौ पूर्वादिलक्षणायां कार्यं पूर्वादिदिगाश्रितम् उदाहरन्ति निर्णयन्ति । तथा जगद्व्यापकस्य विश्वंभरस्य प्रतिमानुपङ्गी पूजाप्रयोगोऽपि परमार्थावगाही द्रष्टव्यः । दिग् हि बिन्दुरूपा, बिन्दुश्च शास्त्रेण गणितगोलसिद्धान्तेन अमूर्तः, एवं च यदि सूर्योदयाद्युपाधिर्न स्यात्तदा पूर्वादिदिक्परिचयोऽसंभवी । तथा विश्वंभरोऽपि प्रतिमादिलिङ्गवशेन परिचीयत इत्याद्युन्नेयम् ॥ १५५ ॥

**अरूपयोग इति** । अलौकिकं रूपं दहराकाशादिलक्षणम् । नृसिंह-राम-गोपालतापनीषु वर्णितं वापि । पुरुषोत्तमादिशब्दा अपि । लोकविलक्षणमेवार्थमभिदधते । अत्र मन्त्रलिङ्गान्यपि—

'स पर्यगाच्छुक्रमकायमव्रण-
मस्नाविरꣳशुद्धमपापविद्धम् ।' (शु. य. सं. ४० । ८)॥ १५६ ॥

**क्रियेति** । यदि सर्वदेशिन एकदेशिनी पूजा विरुध्यते, तदा एकदेशिना पठ्यमाना नमआदिघटिता वेदमन्त्रा अपि विरुध्येरन् । यर्हि पूजा न विरुध्यते, तर्हि आभिमुख्यवृत्तयो मन्त्रा अपि न विरुध्येरन्, समाधिसाम्यात् ॥ १५७ ॥

**गुणावतारोऽभ्युदयाय लोका-**
**दृष्टेन सृष्टो निगमप्रदिष्टः ।**
**किं चात्मरूपप्रतिपत्तिकर्म-**
**ण्याजानदेवप्रमुखा अपीशाः ॥ १५८ ॥**
**योग्या ! यदैश्वर्यबलेन योगी**
**नानाविधाकारकृतौ कृतीन्द्रः ।**

पातञ्जलाद्विप्रथितप्रकर्षः
कथं प्रबाध्येत स दिव्ययोगः ॥ १५९ ॥
नारुध्यते येन मतिः प्रकामं
संदिह्यतां नाम तदङ्ग ! मुग्धैः ।
न हीयता लुप्यति शास्त्रतत्त्वं
सर्वो हि सर्वं न विवेक्तुमीष्टे ॥ १६० ॥

इति वानप्रस्थादिक् ।

**गुणावतार इति।** अभ्युदयाय—लोकानां कल्याणाय, लोकादृष्टेन सृष्टः, सकललोकपुण्यपरीपाकारब्ध इति भावः । निगमप्रदिष्टः=वेदपुराणवर्णितः, गुणावतारः अलौकिकैर्गुणैः पारमेश्वर्या विभूतेर्मत्स्यादिपरिणामेन अवतारः प्रादुर्भाव इति भावः । अत्र गमकम्—

'यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानम्' (श्वेताश्वतर. ४ । १२)

'यो योनिं योनिमधितिष्ठत्येको
विश्वानि रूपाणि योनीश्च सर्वाः ।
ऋषिं प्रसूतं कपिलं यस्तमग्रे' (श्वेताश्वतर. ५ । २)

किं च, आत्मनो रूपाणां प्रतिपत्तिकर्मणि आजानदेवप्रमुखा अपि ईशाः समर्थाः, किमुत मायी, देवानां देव इति । प्रमुखपदेन कर्मदेवा योगिनश्च विवक्षिताः । अत्र लिङ्गम्—

'अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥'
(शु. य. सं. ३१ । १७)

'ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः' इति (बृहदारण्य. ४ । ३ । ३३) । वेदेष्ववतारसद्भावः । तत्र—

**मत्स्यः**–शतपथब्राह्मणे हविर्यज्ञनामके प्रथमे काण्डे–"मनवो ह वै प्रातः । अवनेग्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावने निजानस्य मत्स्यः पाणी आपेदे–" इत्यादिभिरष्टमाध्यायकण्डिकाभिः श्रूयते ।

**वराहः**–शतपथब्राह्मणे उपनिषन्नामके चतुर्दशे काण्डे प्रथमाध्याये–"अथ वराहविहितम् । इयत्यग्र आसी, दितीयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्रीं, ता मे भूष इति वराह उज्जघान–"इति । तैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमाध्याये तृतीयानुवाके–"स वराहो रूपं कृत्वोपन्यमज्जत । स पृथिवीमध आर्च्छत्–" इति ।

**वामनः**–शतपथब्राह्मणे प्रथमकाण्डे द्वितीयाध्याये–"ते होचुः । अनु नोऽस्यां पृथिव्यामाभजतास्त्वेव नोऽप्यस्यां भाग इति ते हासुरा असूयन्त इहोचुर्यावदेवैष विष्णुरभिशीते तावद्वो दद्म इति । वामनो ह विष्णुरास–" इत्येवमग्निहोत्रवेदिप्रसङ्गापतिता वामनावतारकथानिकानुसंधेया । सोऽयं कथाकाय **ऋक्संहितातो**ऽप्युन्नीयते––

'विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥'
(१ मं. २१ अ. १५४ सू.) इत्येवमादि ।

**परशुरामः**–सोऽयमैतरेये, अन्योऽन्यत्रेति पुरोभागिताश्रयणादप्यायुष्मद्भिराम्नाया विलोडितव्याः स्युरित्यलम् ।

मन्वादिरिव मत्स्यादिरपि निरूपितादिर्नाम्यां न भगवति वेदपुरुषे पौरुषादिसंबन्धनिबन्धनप्रहारारोपाय समुदियात् । समाहितं चैवंजातीयशङ्काविलसितमाचार्यैः––

'न वैतच्छ्रु, तिसामान्यमात्रं नित्येऽपि संभवात् ।
यज्ञेऽध्वर्युरिव ह्यस्ति मनुर्मन्वन्तरे सदा ॥

प्रतिमन्वन्तरं चैव स्मृतिरन्या विधीयते ।
स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्दश ॥
तेन तद्वाक्यचेष्टानां सर्वदैवास्ति संभवः ।
तदुक्तिज्ञापनाद् वेदो नानित्योऽतो भविष्यति ॥
प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः ।
आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात् ॥"

( मीमांसातन्त्रवार्ति. १ । ३ । ७ ) इत्यादि ॥ १५८ ॥

**योग्या इति** । योग्याः सदसद्विवेकप्रणयिन इति संबुद्धया अभिमुखीकरणम् । योगीति प्राशस्त्यादाविन् । तथाच श्रूयते--

'पृथिव्यप्तेजोनिलखे समुत्थे
पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः
प्राप्तस्य योगाग्निमयं शरीरम् ॥' इति । (श्वेताश्वतर. २ । १२)

"आत्मनो वै शरीराणि बहूनि भरतर्षभ ! ।
योगी कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥
प्राप्नुयाद् विषयान् कैश्चित्, कैश्चिदुग्रं तपश्चरेत् ।
संक्षिपेच्च पुनस्तानि, सूर्यो रश्मिगणानिव॥" (शारीरकभा. १ । ३।२७)

अत्र पातञ्जलदर्शनस्य विभूतिपादोऽपि न विस्मर्तव्यः । यत्र संमतः कपिल आह-'योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलनीयाः' ( सां. द. ४ । १२६ ) इति । आदिपदान्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्व विलोक्यम्, यत्र भगवतः पाराशर्यस्य विश्वविस्मापक ऐश्वरो योगमहिमा ( ३२ अध्या. ) ॥ १५९ ॥

**नारुह्यत इति** । इदं संदिग्धचेतानां वा दुर्विदग्धानां वा समुपेक्षणार्थम् ॥ १६० ॥

इति वानप्रस्थीया वेददृष्टिः ।

## अथ भिक्षुदिक्।

ये नैष्ठिका वा तदनुव्रता वा
संन्यासिनो वा तदनुप्लवा वा।
संसारचक्रं परिहर्तुकामा-
स्तेऽपि त्रयीशासनतो न बाह्याः ॥१६१॥

इदानीं तत्त्वैरिव षट्त्रिंशता श्लोकैर्भिक्षूनभ्यर्थयते, येऽत्र साधुपदेन संकेत्यन्ते, तेषां संकलनार्थमाह—**ये नैष्ठिका वेति**। ये तावद् वेदनिर्दिष्टेषु नैष्ठिकब्रह्मचारिष्वात्मानं प्रख्यापयन्ति, परं स्वस्वाचार्योद्भावितदीक्षामर्यादया तत्र च नह्यन्तर्भवन्ति तेऽनुव्रता इति, ये पुनरित्थंभूतलक्षणाः संन्यासिषु तेऽनुप्लवा इति च व्यवहरणीयाः। अपिना ब्राह्मणादिवानप्रस्थान्ताः सप्त स्त्रियश्च द्रष्टव्या। चतुष्टयी संदृब्धं त्रयीशासनं श्रोत्रमावेदनीयम्—त्रयः कर्मोपासनाज्ञानलक्षणाः प्रतिपाद्या अवयवा यस्याः सा त्रयी, वेदचतुष्टयीति यावत्, वेदानां कर्मादीन्येव प्रतिपाद्यादीनीति तदङ्गोपाङ्गप्रवृत्तिभिः प्रत्येतव्यम्। बहुशाखप्रशाखत्वेऽपि ऋगादिवेदानां चातुर्विध्यमेव होत्रादिचतुष्टयप्राधान्याभिधित्सया प्रतिपत्तव्यम्। वेदानां परस्परं शाखाभेदसद्भावेऽप्यग्निहोत्रदर्शपौर्णमासादिकं कर्म न भिद्यते। यथा खलु दहरवैश्वानरशाण्डिल्यादिकमुपासनम्। तदिदं पूर्वोत्तरमीमांसयोः—'नामरूपधर्मविशेष—' (२। ४। ८-३२) इत्यादिभिः सूत्रैः, 'सर्ववेदान्तप्रत्ययं—' (३। ३। १—४) इत्यादिभिश्च चिन्तितम्। इहैतन्निष्पन्ने अधिकरणे—

"शाखाभेदात् कर्मभेदो न वा, कर्मात्र भिद्यते।
दृष्टं काठकनामादि बहुभेदस्य कारणम् ॥"
ग्रन्थद्वारादिना ह्येते युज्यन्ते भेद हेतवः।

रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥" इति ।

( जैमिनीयन्या. मा. विस्त. )

"सर्ववेदेष्वनेकत्वमुपास्तेरथवैकता ।

अनेकत्वं कौथुमादिनामधर्मविभेदतः ॥"

विधिरूपफलैकत्वादेकत्वं, नाम न श्रुतम् ।

शिरोव्रतादिधर्मस्तु स्वाध्याये स्यान्न वेदने ॥" इति च ।

( वैयासिकन्या. मा. )

अथ वेदशब्दः स्वाध्याये द्विधा ह्याम्नायते । एक उञ्छादिगणपठितोऽन्तोदात्तः ( पा. सू. ६ । १ । १६० ) अन्यो वृषादिगणपठित आद्युदात्तः ( पा. सू. ६ । १ । २०३ ) वेदशब्दस्य घञन्तत्वात्—'ञ्नित्यादेर्नित्यम्' ( पा. सू. ६ । १ । १९७ ) इत्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थं पाठः । तत्र पूर्वो योगिकः, परो योगिकरूढः । उभयत्र विद्यावद् विद्प्रकृतिः । विदन्ति जानन्ति सर्वमनेन, वेद्यते ज्ञाप्यते सर्वमनेन वा वेद इति बाहुलकात् करणे घञ् । भावघञन्तो वा । ऋगादिना होत्रादिना वा समस्यमानः कर्मोपासनाज्ञानरूपो वेदः ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति, होतृवेदोऽध्वर्युवेद उद्गातृवेदो ब्रह्मवेद इति चान्वर्थामभिज्ञामापेदे । अत्र प्रमाणान्युदाहृतानि प्रागुदाहार्याण्यपि । ऋग्यजुःसाम्नां प्रतिपादकानां कर्मोपासनाज्ञानानां प्रतिपाद्यानां चास्पदमेकधाप्यसौ वेदो यज्ञार्थं मन्त्रब्राह्मणभेदेन द्विधा रचनाभेदेन त्रिधा ऋत्विग्भेदेन चतुर्धा संहत्या अनन्तश्च जज्ञे । मन्त्रस्य याज्ञिकसमाख्यानमेव निर्दुष्टं लक्षणम् । मन्त्रतोऽन्यद् ब्राह्मणम् । द्रष्टव्ये चेह माधवीये मन्त्रब्राह्मणनिर्वचनाधिकरणे ( मी. द. २ । १ । ३२-३३ ) मन्त्राणां संहतिः संहिता । यथा-ऋग्वेदसंहिता, यजुर्वेदसंहिता; इत्येवमादिः । अथ ब्राह्मणयोनयोऽपि मन्त्रा अवगन्तव्याः । मन्त्रसंश्लिष्टानि च ब्राह्मणानि । संहितालक्षणं तु—'पदप्रकृतिः संहिता' ( ऋ. प्रातिशा. २ । १ ) 'वर्णानामेकप्राणसंयोगः

संहिता' ( शु. य. प्रातिशा. १ । १५८ ) संहितानां पदक्रमपाठावत्यर्थमुपयुक्तौ । तत्र पदं, विशिष्य अर्थाववोधने । पद्यते=गम्यते ज्ञायतेऽनेनेति व्युत्पादनात् । तथाच सूत्रितं शुक्लयजुःप्रातिशाख्ये– 'अर्थः पदम्' ( ३ । २ ) । क्रमस्तु स्मृत्यादिप्रयोजनः । संहिताविषयं पदविषयं चायं दृढस्मरणं करोति । द्वयोर्द्वयोः पदयोः वर्णसंहिता उदात्तादिस्वरसंहिता च क्रमं मुक्त्वा नान्येन ज्ञायते । प्रातिशाख्येऽपि–'क्रमः स्मृतिप्रयोजनः' तथा जटादिविकृतयोऽपि क्रमपूर्वाः स्मर्यन्ते ।

'जटामालादण्डरेखारथध्वजशिखाघनाः ।
क्रममाश्रित्य निर्वृत्ता विकारा अष्ट विश्रुताः ॥'

इत्यादि । 'क्रमादिभ्यो वुन्' ( ४ । २ । ६१ ) इति सूत्रयन् **पाणिनिरपि**—क्रममधीते क्रमकः पदमधीते पदकः, इति दर्शितवान् । एवं मन्त्रब्राह्मणरूपस्य वेदस्याधीतिः कण्ठपाठेनैव संरक्षिता बभूव भवितुमर्हा च । तत एवात्र पुरा मात्रादिमात्रस्यापि विपर्ययो नाभूत् । इह प्रशसाप्रशंसादिशब्दविवेचनमपि गमकम् ( मी. द. ६ । ४ । २३–२४ ) । वेदनं तु सांप्रतिकपठनपाठनपरीक्षाप्रक्रियाभिर्वेदपुरुषस्य वेदनाया उद्भाति । किमियता, वेदकेदारेपूत्पथं व्याख्यानलाङ्गलं चालयता स्वरवैरूप्यं प्रथयतार्थक्षयोऽपि नापेक्ष्यते । इहायं प्रवर्तमानानां वेदशाखानां संकलनाक्रमः—

''यज्ञो, ब्रह्म च, वेदेषु द्वावर्थौ काण्डयोर्द्वयोः ।
अध्वर्युमुख्यैर्ऋत्विग्भिश्चतुर्भिर्यज्ञसंपदः ॥
निर्मिमीते क्रियासंघैरध्वर्युर्यज्ञियं वपुः ।
तदलंकुर्वते होता ब्रह्मोद्गातेत्यमी त्रयः ॥
शस्त्रयाज्यानुवाक्याभिर्होतालंकुरुतेऽध्वरम् ।
आज्यपृष्ठादिभिः स्तोत्रैरुद्गातालंकरोत्यमुम् ॥
त्रयाणामपराद्धं तु ब्रह्मा परिहरेत् सदा ॥

ऋचां त्व (८।२।२४) इति मन्त्रेऽस्मिन्नर्थः सवाऽभिधीयते ॥'' इति ।

"जाते देहे भवत्यस्य कटकादि विभूषणम् ।

आश्रितं मणिमुक्तादि कटकादौ यथा, तथा ॥

यजुर्जाते यज्ञदेहे स्यादग्निस्तद्विभूषणम् ।

समाख्या मणिमुक्ताद्या ऋक्षु तासु समाश्रिताः ॥'' इति च ।

( सामवेदसंहिताभाष्ये श्रीसायनाचार्यचरणा )

अनेकशाखेषु वेदेषु कासांचित्तैत्तिरीयादिसंज्ञितानां शाखानां कृष्णयजुष्ट्वेन, कासांचन पुनः काण्वादिसंज्ञितानां शुक्लयजुष्ट्वेन च व्यवहारः प्रावर्तत । तत्र चरकविशेषेषु तैत्तिरीयाः, वारतन्तवीयाः, काठकाः मैत्रायणीयाश्च; एवं तैत्तिरीयेषु खाण्डकीया औखीयाश्चः खाण्डकीयेषु पुनः आपस्तम्बिनः, बौधायनिनः, सत्याषाढिनः, हिरण्यकेशिनः, शाट्यायनिनश्च परिगण्यन्ते । इह तैत्तिरीय–वारतन्तवीय–खाण्डिकीयौखीयानां व्युत्पादनार्थम्–'तित्तिरिवरतन्तुखाण्डिकोखाच्छण्' (४ । ३ । १०२ ) इति पाणिनिसूत्रं प्रवतृते । 'तेन प्रोक्तम्' ( ४ । ३ । १०१) इति संबध्यते । तित्तिरिणा प्रोक्तमधीयत इति तैत्तिरीयाः । प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतम् 'कृते ग्रन्थे' (४ । ३ । ११६ ) इत्यनेन गतत्वात् । 'शौनकादिभ्यश्छन्दसि' (४ । ३ । १०६) इत्यत्रास्यानुवृत्तेश्छन्दोऽधिकारविहितानां च तद्विषयतेष्यते । आपस्तम्बिन इत्यादौ वैशम्पायनान्तेवासित्वात् णिनिः ( ४ । ३ । १०४ ) इति मन्दम् । वस्तुतस्तु इनिः ( ५ । २ । ११५ ) आपस्तम्बादिशब्दास्तत्कृतेषु ग्रन्थेषु लाक्षणिकाः ।

कृष्णयजुर्वेदः ।

( १ ) तत्र तैत्तिरीयाणां संहिता, ब्राह्मणम्, आरण्यकम्, इति बहुधा प्रतिष्ठाप्यमानं तावन्न खिलीकर्तुं शक्यं शाखासंहारमिच्छद्भिरायुष्मद्भिः । इह तैत्तिरीयारण्यकभाष्ये श्रीसायनाचार्याः—

"व्याख्याता सुखबोधार्थं तैत्तिरीयकसंहिता ।

तद्ब्राह्मणं च व्याख्यातं शिष्टमारण्यकं ततः ॥

अरण्याध्ययनादेतदारण्यकमितीर्यते ।
अरण्ये तदधीयेत,त्येवं वाक्यं प्रचक्षते ॥
काण्डमारण्यकं सर्वं व्याख्यातव्यं प्रयत्नतः ।
आरण्यकविशेषास्तु पूर्वाचार्यैरुदीरिताः ॥
होतृन्, प्रवर्ग्यकाण्डं च, याश्चोपनिषदो विदुः ।
अरुणीयविधिश्चै, ष काठके परिकीर्तितः ॥
रुद्रो,नारायणश्चैव, मेधो यश्चैव पित्रियः ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥
कठेन मुनिना दृष्टं काठकं परिकीर्त्यते ।
सावित्रो, नाचिकेतश्च, चातुर्होत्रस्तृतीयकः ॥
तुर्यो वैश्वसृजस्तद्वद् वह्निरारुणकेतुकः ।
स्वाध्यायब्राह्मणं चेति सर्वं काठकमीरितम् ॥
नारण्याधीतिनियमः सावित्रादिचतुष्टये ।
अतस्तद्ब्राह्मणग्रन्थे श्रुतं व्याख्यातमप्यदः ॥
वह्निरारुणकेताख्यः काठके पञ्चमश्रुतः ।
आरण्यकादावाम्नातस्तद्व्याख्याय प्रतन्यते ॥" इति ।

( २ ) चरकशाखीयं काठकम् ।

यत्र पुरोडाशं नाम प्रथमं स्थानकम्, अध्वरं द्वितीयम्, ज्योतिरिकं तृतीयम्, ग्रहस्थानकं चतुर्थम्, यजमानं पञ्चमम्, अग्निहोत्रब्राह्मणं षष्ठम्, आलोभी सप्तमम्, दिशस्थानकमष्टम्, उत्सीदनं नवमम्, आग्नावैष्णवं दशमम्, मारुतमेकादशम्, पयस्थानकं द्वादशम्, पशुबन्धं त्रयोदशम्, वाजपेयं चतुर्दशम्, राजसूयं पञ्चदशम्, अग्निवीशिका षोडशम्, ध्रुवक्षितिः सप्तदशम्, क्षमा अष्टादशम् ॥

सावित्रा एकोनविंशस्थानकम्, अपेतवीतं विंशम्, पञ्चचूडमेकविंशम्, स्वर्गं द्वाविंशम्, दीक्षितं त्रयोविंशम्, साक्षीति चतुर्विंशम्, इषुस्थानकं

पञ्चविंशम्, धिष्ण्यं षड्विंशम्, वाचस्पतिस्थानकं सप्तविंशम्, आयुष्य-मष्टाविंशम्, दीर्घजिह्वी एकोनत्रिंशम्, पात्नीवतं त्रिंशम् ॥

पुरोडाशब्राह्मणमेकत्रिंशस्थानकम्, यजमानब्राह्मणं द्वात्रिंशम्, सत्राणि त्रयस्त्रिंशम्, एकादशिनी चतुस्त्रिंशम्, प्रायश्चित्तं पञ्चत्रिंशम्, चातुर्मास्यानि षट्त्रिंशम्, सवाः सप्तत्रिंशम्, सौत्रामणी अष्टात्रिंशम्, यदक्रन्द एकोनचत्वारिंशम्, हिरण्यगर्भ चत्वारिंशम् ॥

अश्वमेधग्रन्थः ॥

( ३ ) मैत्रायणीयसंहिता ।

यत्र दर्शपूर्णमासौ प्रथमः प्रपाठकः, अध्वरो द्वितीयः, ग्रहास्तृतीयः, यजमानब्राह्मणं चतुर्थः, अग्न्युपस्थानं पञ्चमः, आधानं षष्ठः, पुनराधानं सप्तमः, अग्निहोत्रब्राह्मणमष्टमः, चातुर्होतृको नवमः, चातुर्मास्यानि दशमः, वाजपेय एकादशः । इति प्रथमकाण्डम् ॥

काम्या इष्टयः प्रथमः प्रपाठकः, काम्या इष्टयो द्वितीयः, काम्या इष्टयस्तृतीयः, काम्या इष्टयश्चतुर्थः, काम्याः पशवः पञ्चमः, राजसूयः षष्ठः, अग्निचितिः सप्तमः, अग्निचितिरष्टमः, अग्निचितिर्नवमः, अग्निचितिर्दशमः, अग्निचितिरेकादशः, अग्निचितिर्द्वादशः, अग्निचितिस्त्रयोदशः । इति मध्यमकाण्डम् ॥

जुहूमयीयः प्रथमः प्रपाठकः, इशानो द्वितीयः, स्तोमभागस्तृतीयः, वसोर्धारीयश्चतुर्थः, ( अग्निचितिब्राह्मणम् ) पञ्चमः, अग्नावैष्णवं षष्ठः, सप्तमः, असुराणामष्टमः, नवमः, पात्नीवन्ता दशमः, ( अध्वरादीनां त्रयाणां विधिः ) सौत्रामणीय-एकादशः, द्वादशः, त्रयोदशः, चतुर्दशः, पञ्चदशः, षोडशः प्रपाठकः, ( अश्वमेधः ) इत्युपरिकाण्डम् ॥

खिलकाण्डम् ॥

शुक्लयजुर्वेदः ।

( ४-५ ) वाजसनेयिनां संहिता, शतपथब्राह्मणम्, इति सुप्रसिद्ध-

तरम्। वाजसनेयेन प्रोक्तं छन्दोऽधीयत इति वाजसनेयिनः। शौनकादित्वात् णिनिः (४।३।१०६)। 'वाजस्य अन्नस्य सनिर्दानं यस्य स वाजसनिः, तदपत्यं वाजसनेयो याज्ञवल्क्यः' इति तद्भाष्यम्। भगवतो याज्ञवल्क्यस्य शिष्याः कण्वमध्यंदिनप्रभृतय आसन्। यत्संबन्धादद्यावधि वयं काण्वाश्च, माध्यंदिनाश्च वाजसनेयिनो यथाशाखं व्यपदिष्टाः। संहिताब्राह्मणे अपि काण्वशाखीये माध्यंदिनशाखीये च व्यपदिष्टे। काण्वशाखीयं संहिताभाष्यं नागदेवभट्टात्मजेन **अनन्ताचार्येण**, माध्यंदिनशाखीयमुव्वटाचार्येण चाभाषि। इह शतपथब्राह्मणभाष्ये सायनाचार्योक्तिः—

'ऋग्यजुः सामशाखानामेकैका व्याकृता त्वया।
तावता तत्समानार्था ज्ञातुं शक्यास्ततः पराः॥
वासना विशदा यत्र मन्त्रार्थानामशेषतः।
प्रायेणाध्वर्यवं कर्म पूर्णं शाखान्तरैर्विना॥
करामलकवद् यत्र परं तत्त्वं प्रकाशितम्।
या काचित्तादृशी शाखा त्वया व्याख्यायतामिति॥
सर्वतः सायनाचार्यो विमृश्योदीरितान् गुणान्।
माध्यंदिने शतपथे ब्राह्मणे व्याकरोति तत्॥' इति।

ऋग्वेदः।

बह्वृचानां शाकलीया दाशतयी संहिता, ऐतरेय ब्राह्मणम्, ऐतरेयारण्यकम्, इति सुप्रसिद्धतरम्। पठ्यते हि शौनकीये प्रातिशाख्ये—

"ऋचां समूह ऋग्वेद,स्तमभ्यस्य प्रयत्नतः।
पठितः शाकलेनादौ, चतुर्भिस्तदनन्तरम्॥
शाङ्खाश्वलायनौ चैव माण्डूक्यो बाष्कलस्तथा।
बह्वृचा ऋषयः सर्वे पञ्चैत एकवेदिनः॥" इति।

विकृतिकौमुद्यां तु--

'शाकलस्य शतं शिष्या नैष्ठिकब्रह्मचारिणः ।
पञ्च तेषां गृहस्थास्ते धर्मिष्ठाश्च कुटुम्बिनः ॥
शिशिरो बाष्कलः शाङ्खो वात्स्यश्चैवाश्वलायनः ।
पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्तकाः ॥'

इति विशेषः । दश मण्डलानि अवयवा अस्या इति दाशतयी । संख्याया अवयवे तयप् । ङीप् । तत्तदृषिदृष्टानां बहूनां सूक्तानामेकर्षिकर्तृकः संग्रहो मण्डलमिति सांप्रदायिकाः । 'संपूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।' इति बृहद्देवता । ऋग्वेदः । वैदिकं महावाक्यं सूक्तमिति तत्त्वम् ॥

सामवेदः ।

छन्दोगानां कौथुमीया संहिता । यत्र हि-( १ ) छन्दः, ( २ ) आरण्यकः, ( ३ ) महानाम्नः, ( ४ ) उत्तर इति चत्वार आर्चिकग्रन्थाः । ( ५ ) गेयम्, ( ६ ) आरण्यकम्, ( ७ ) ऊहम्, ( ८ ) ऊह्यम् इति चत्वारो गानग्रन्थाः । एषामेव चतुर्णां परिशिष्टभूताः-( ९ ) महानाम्नम्, ( १० ) भारुण्डम्, ( ११ ) तवश्यावीयम्, ( १२ ) गायत्रम् इति चत्वारोऽन्ये गानग्रन्था । ( १३ ) स्तोभग्रन्थ एक इति संहत्य त्रयोदश संहिताभागाः ।

यद् गीतिषु सामाख्येति सूत्रितं तत्र मीमांसादर्शने सप्तमाध्यायस्य द्वितीयपादे ऋक्तीषु अध्ययनतो वामदेव्ये साम्नि प्राप्ते रथंतरं सामातिदिष्टं द्रष्टव्यम् । इदमेव वामदेवेन दृष्टं सामपाणिनिना व्युत्पादितम् (पा. सू. ४ । २ । ९ ) इह 'हाइ' कारः प्रसिद्धः । रथंतरे साम्नि तु 'हाउ' कारः । पुनश्च नवमाध्यायस्य द्वितीयपादे प्रथमाधिकरणस्य प्रथमवर्णके सामशब्दस्य गानमात्रवाचित्वं स्मारितम् । तत्र सप्तमेऽधिकरणे-'अर्थैकत्वाद् विकल्पः स्यात्' ( मी. द. ९ । २ । २९ ) इति

सूत्रभाष्ये शबरस्वामी—"सामवेदे सहस्रं गीत्युपायाः । आह, के इमे गीत्युपाया नाम ? उच्यते—गीतिर्नामक्रिया । सा आभ्यन्तरप्रयत्नजनितस्वरविशेषाणामभिव्यञ्जिका । सा सामशब्दाभिलप्या । सा नियतपरिमाणे ऋचि च गीयते । तत्संपादनार्थं ऋक्षु अक्षरविकारः, विश्लेषः, विकर्षणः, अभ्याशः, विरामः, स्तोभ इत्येवमादयः सर्वे समधिगताः समाम्नायन्ते ॥" इति बभाषे । इत्येवमादि यथायथं श्रीगुरुमुखादेवाधिगन्तव्यम् । ब्राह्मणं तु ताण्ड्यादि । तथाच पठ्यते—

"व्याख्यातावृग्यजुर्वेदौ, सामवेदेऽपि संहिता ।
व्याख्याता, ब्राह्मणव्याख्यां करोम्यौद्गात्रवृद्धये ॥
पञ्चविंशतिरध्याया महति ब्राह्मणे स्थिताः ।
आद्येऽध्याये स्मृता मन्त्रा उद्गातुर्यजुरात्मकाः ॥
ये तु मन्त्राः स्तोत्ररूपा उत्तरासु तृचेषु ते ।
योनिवद् गानमूहित्वा पठ्यन्ते तद्विधेर्वशात् ॥
यद् योन्यां गानमाम्नातं तदेवोत्तरयोर्ऋचोः ।
गायेदिति स्तोत्रक्लृप्तो साम्नामूहो विधीयते ॥
आवृत्तियुक्तं तत्साम स्तोभ इत्यभिधीयते ।
द्वयोरध्याययोः स्तोमप्रकारा बहुधा श्रुताः ॥
चतुर्थाध्यायमारभ्य गवामयनिकादयः ।
क्रतूनां विधयः प्रोक्ता एषोऽस्मिन् ब्राह्मणे क्रमः ॥"

इत्यादि ताण्ड्यमहाब्राह्मणभाष्यभूमिका । तथैव—

"अष्टौ हि ब्राह्मणग्रन्था, प्रौढं ब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात्, ततः सामविधिर्भवेत् ॥
आर्षेयं, देवताध्यायं, मन्त्रं वोपनिषत्ततः ।
संहितोपनिषद्, वंशो, ग्रन्थावष्टावितीरिताः ॥"

इति सामविधानब्राह्मणभाष्यभूमिका ॥

अथर्ववेदः ।

आथर्वणिकानां शौनकीया संहिता, गोपथब्राह्मणम् इति सुप्रसिद्धम् । पैप्पलादीया संहितापि । आथर्वणिका अधीयते—

"ब्रह्मा देवानां प्रथमः संबभूव
विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-
मथर्वाय ज्येष्ठपुत्राय प्राह ॥
अथर्वणे यां प्रवदेत ब्रह्मा-
ऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवाहाय प्राह,
भारद्वाजोऽङ्गिरसे परावराम् ॥" इति ।

(अथर्ववेदीय.मुण्डकोपनि. १ । १)

अथ ब्रह्मोपनिषदः ।

'ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ॥'

इत्येवमादयः शाखानामाद्यङ्किताः संहिताब्राह्मणारण्यकसंगता उपनिषदः प्रसिद्धाः । ताभ्यः शब्दतो वा अर्थतो वा भिन्नजातीयास्तूपेक्ष्याः । न हि या क्वापि भगवतो वेदपुरुषस्य प्रलीनशाखाशिरसि निक्षिप्ता कृतकृत्या भवितुमर्हा ।

स्वाध्यायभेदात् सूत्रभेदाद्वा शाखाभेदेन भूतम् । तत्र स्वाध्यायभेदाच्छाखाभेदः शाकलबाष्कलयोः, ऐतरेयि-कौषीतकिनोर्वा बह्वृचयोः । आद्ययोः संहिताप्रयुक्तो भेदः, द्वितीययोर्ब्राह्मणप्रयुक्तः । एवम्—कण्वमाध्यंदिनयोः शुक्लयाजुषयोः संहिताब्राह्मणप्रयुक्तो भेदः । आचार्यस्वामिभिः कण्वशाखीयमेव बृहदारण्यकं व्याख्यातम् । यदत्र—'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (४ । ३ । १०५) इति सूत्रे काशिकादौ— "पुराणप्रोक्तेष्विति किम्,

याज्ञवल्क्यानि ब्राह्मणानि" इति प्रत्युदाहृतं तन्न संगतम्, भाष्ये-'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्' इत्यादिना 'याज्ञवल्क्यस्य पुराणत्वावधारणात्। ब्राह्मणकल्पयोः प्रोक्तत्वसूत्रणमपि नैकाभिप्रायकम्, मीमांसकैर्मन्त्रवद् ब्राह्मणस्यापौरुषेयत्वनिरूपणात् स्मृतिवत् कल्पस्य पौरुषेयत्वनिरूपणाच्च इतरथा तैत्तिरीयादिमन्त्रभागस्यापि पौरुषेयतापत्तिप्रसङ्गाच्च। अथ सूत्रभेदाच्छाखाभेदस्तु बौधायनापस्तम्बाहिरण्यकेशिसत्याषाढिप्रभृतीनाम्। एषां संहिताब्राह्मणारण्यकानि तैत्तिरीयाण्येव। अथ प्रघट्टके प्रसिद्धनामापि काचन शाखा न दृश्यते। यथा—उपनिषदुपज्ञाता कृष्णयजुर्वेदीया श्वेताश्वतरशाखा, सामवेदीया तलवकारशाखा, पाणिन्युपज्ञाता कालापकीति। वैदिकविज्ञानार्थं श्री (६) **सायनाचार्याणां** तत्तद्वेदभाष्यभूमिका यत्नतोऽवलोकनीयाः। आपस्तम्बशाखायां भट्टभास्करभाष्यं रावणभाष्यं च दृश्यते। भवति चात्रोपसंहारः—

'संहितावद् ब्राह्मणेऽपि कथांशा वेदनाशयाः।
सुब्रह्मण्यानिगदवद् गृध्रगोमायुवाक्यवत्॥
तदेव वेदव्याख्यानं यदङ्गोपाङ्गमूलकम्।
न चोत्प्रेक्षितव्याख्यार्था कापि विज्ञानशृङ्खला॥' ॥१६१॥

**स्वर्गोऽथवा स्याद्पवर्ग एष**
**यदर्थमेते यतयो भवन्ति।**
**स शास्त्रिकस्तद्विधयैव गम्यो**
**विधान्तरं तत्र मुधाङ्गखङ्गि॥ १६२॥**

**यन्नेक्ष्यते नाप्यनुमीयते चे-**
**त्तच्छ्रूयते लभ्यतया तदास्य।**
**लाभोऽपि शास्त्रोदितवर्त्मनैव**
**स्वेच्छा हि पाखण्डगुणान्वृणीते॥ १६३॥**

**वेदे स विश्वेश्वर एक एव**
**गुणक्रियाभेदबलादिवान्यः ।**
**अतोऽत्र दिव्याकृतिरप्यनेका**
**प्रकल्प्यते मानसयोजनार्थं ॥ १६४ ॥**

स्वर्गापवर्गार्थं यतमानानां स्वातन्त्र्यं परिहरति–**स्वर्ग इति** ॥ १६२ ॥

शास्त्रिकत्वं द्रढयति––**यत्नेद्यत इति** । स्वेच्छा हि पाखण्ड-गुणान्वृणीत इत्यनेनागमिके वस्तुनि यथेष्टाचरणस्यानिष्टत्वं दर्शितम् । एतेन लोहकण्टकादिषु शयनं चतुरशीत्यग्निमध्यादिषूप्रवेशनमन्यच्च यत्कि-मपि कपोलकल्पितं तपोवर्त्म व्याख्यातम् ॥ १६३ ॥

परमेश्वरस्यैकत्वं प्रदर्शयति––**वेद इति** । 'एको देवः सर्वभूतेषु गूढः––' (श्वेता. उ. ६ । ११) इत्यद्वितीयत्वेन श्रवणात् । 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (६ । १५) इत्य-द्वितीयेनैवाश्रयणीयात् ।

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥' (६ । २०)

इत्यद्वितीयेनैवासंभविदृष्टान्ताश्रयणात् । गुणानां रजआदीनां याः क्रिया उत्पादनादयः तासां भेदाः पार्थक्यादाकलनाः तद्बलाद् उद्रेकात्= गुणक्रियाभेदबलात् अन्य इतर इव प्रतीयते । नहि वणिग् वस्तूनि विस्तारयन्, व्यवहरन्, संहरँश्च भिद्यत इति । योऽभ्येति मायीव स साधु मृग्यतामिति तात्पर्यम् । तदिदं जन्माद्यस्य यतः' इति द्वितीय-स्माद् ब्रह्मसूत्रादप्यधिगन्तव्यम् । दिव्याकृतिः श्रौती स्मार्ती च ॥ १६४ ॥

**स्मरन्ति सामान्यविशेषरूपं**
**धर्मं यथा शर्मविकासनाय ।**
**तथाधिकारानुगुणेन धन्या**
**ज्ञानं तथा कर्म च धर्ममाहुः ॥ १६५ ॥**

**नाध्यासते ज्ञानकुटीरकोणा-**
**न्प्रायो विसंवादविधाभुजंगाः ।**
**हन्तामृते कृष्णचिकित्सितेऽपि**
**मूर्छन्त्यमी कर्मशरीरबन्धाः ॥ १६६ ॥**

ज्ञेयस्य ज्ञानार्थं दृष्टान्तयन्नाह—**स्मरन्तीति** । सामान्यो विशेष इति धर्मद्वयं प्रागपि निरूपितम् । तत्र विशेषो यथाकल्पं भिद्यते । सामान्यस्तु—

'चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥' (मनु. ६ । ९१-९२)

( १ ) तत्र **धृति**र्नाम आपत्कालेऽपि धर्मस्यापरित्यागः । तथाचाह-

''नाप्राप्यमभिवाञ्छन्ति, नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति, नराः पण्डितबुद्धयः ॥''
( म. भ. उद्यो. प. ३३ अ. २३ श्लो. )

विषमावस्थिते दैवे, पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं, सत्त्वोपाश्रयिणो नराः ॥'' इति ।

इयं हि सकलस्य धर्मस्य निदानम् । यस्याश्चाश्रयणेन हरिश्चन्द्र-राममद्रयुधिष्ठिरप्रभृतयः परमामप्यापदं प्राप्ता धर्मं न विजहुः । उक्तं हि—

'चलन्ति गिरयः कामं युगान्तपवनाहताः ।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥' इति ।

( २ ) **क्षमा** नाम सर्वभूतवशीकारफलिका सापराधेऽपि पारुष्यादि-प्रयोगविधुरा । तथाचाह—

''क्षमा वशीकृतिर्लोके, क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥''
( म. भा. उद्यो. प. ३३ अ. ५० श्लो. )

'द्वाविमौ पुरुषौ राजन्! स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥'
(म. भ. उद्यो. प. ३३ अ. ५८ श्लो.)

(३) **दमो** नाम विकारहेतुविषयसंनिधानेऽपि मनसोऽविक्रियभावः । उक्तं च—

'दमं निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥'
(म. भा. शां. प. आप. १६० अ. ७ श्लो.)

''आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥
क्षमा, धृति,रहिंसा, च समता, सत्य,मार्जवम् ।
इन्द्रियाभिजयो, दाक्ष्यं, मार्दवं, ह्री, रचापलम् ॥
अकार्पण्य, मसंरम्भः, संतोषः, प्रियवादिता ।
अविहिंसा,ऽनसूया चा,प्येषां (१७) समुदयो दमः ॥
गुरुपूजां, च कौरव्य! दयां भूतेषु, पैशुनम् ।
जनवादं, मृषावादं, स्तुतिनिन्दाविवर्जनम् ॥
कामं, क्रोधं, च लोभं, च दर्पं, स्तम्भं, विकत्थनम् ।
रोष,मीर्ष्या,भिमानं, च (१६) नैव दान्तो निषेवते ॥''
(म. भा. शान्ति प. आप. १६० अ. १४-१८ श्लो.)

(४) **अस्तेयं** नामान्यायेन परधनग्रहणाभावरूपम् । स्तेयं हि महापातकेषु परिगण्यते । उक्तं च **मनुयाज्ञवल्क्याभ्याम्**—

'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥' (मनु. ११।५४)

'ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः ।
एते महापातकिनो यश्च तैः सह संवसेत् ॥' (याज्ञ. ३।२२७)

(५) **शौचं** नामोचितमृज्जलादिभिः शरीरशोधनरूपम्, स्वस्व-

वर्णाश्रमादिषु नित्यतया च विहितानां संध्योपासनादीनामाचरणरूपं च।
तथा चोक्तम्–

'युधिष्ठिर ! यमौ ! भीम ! मनसा कुरुतार्जवम् ।
मनसा कृतशौचा वै शुद्धास्तीर्थानि यास्यथ ॥'

( म. भा. वन. प. ९३ अ. २० श्लो. )

'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यद्यद्धि कुरुते कर्म न तस्य फलभाग्भवेत् ॥'
'यस्य हस्तौ च पादौ च मनश्चैव सुसंयुतम् ।
विद्या यशश्च कीर्तिश्च स तीर्थफलमश्नुते ॥'

( म. भा. वन. प. ८२ अ. ९ श्लो. )

नियमोल्लङ्घने तु–"कीकटेन समा काशी, गङ्गाप्यङ्गारवाहिनी ।"
इत्यादिना तीर्थोपसर्पणस्य वैफल्यं व्यञ्जितमेव । एवमिदमप्यनुसंधेयम्—

"आत्मा नदी संयमपुण्यतीर्था,
सत्योदका, शीलतटा, दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र !
न वारिणा शुध्यति चान्तरात्मा ॥"

( ६ ) **इन्द्रियनिग्रहो** नाम विषयेष्वलोलुपत्वम् । तथाच
निदर्शनम्—

"कुरङ्गमातङ्गपतङ्गभृङ्ग-
मीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी, स कथं न हन्यते,
यः सेवते पञ्चभिरेव पञ्च ॥" इति ।

'पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥'

( म. भा. उद्यो. प. ३३ अ. ७७ श्लो. )

'अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः ॥'
(म. भा. उद्यो. प. ३४ अ. ६३ श्लो.)

भूपतिना **ययातिना** हि पुत्रस्य **पुरो**र्यौवनं गृहीत्वा चिरं विषय-सुखान्यनुभूयाप्यतृप्तेन पुनस्तस्माज्जरा जगृहे । निर्विण्णेन गीतं च--

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥
पृथिवी रत्नसंपूर्णा हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥
यदा न कुरुते पापं सर्वभूतेषु कर्हिचित् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति नद्वेष्टि ब्रह्म संपद्यते तदा ॥
इत्यवेक्ष्य महाप्राज्ञः कामानां फल्गुतां नृप !
समाधाय मनो बुद्ध्या प्रत्यगृह्णाज्जरां सुतात् ॥' इति ।
(म. भा. आदि. प. ७५ अ. ५०-५४ श्लो.)

निन्दन्ति च--

'या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥'

प्रशंसन्ति च--

'वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥'
(म. भा. उद्यो. प. ३४ अ. ५८ श्लो.)

'रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।

तैरप्रमत्तः कुशली सदश्वै-
 दान्तैः सुखं याति रथीव धीरः ॥'
(म. भा. उद्यो. प. ३४ अ. ६१ श्लो.) इति ।

पुंसामिव स्त्रीणामप्ययमिन्द्रियनिग्रह आवश्यकः। अतएव **दमयन्तीं** प्रति **नलस्य** वाक्यम्—

"वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो, जितः स्वर्गो न संशयः ॥
रहिता भर्तृभिश्चापि न क्रुध्यन्ति कदाचन ।
प्राणाँश्चारित्रकवचान् धारयन्ति वरस्त्रियः ॥" इति ।
(म. भा. वन. प. ७४ अ. २५–२६श्लो.)

तत्रासां नियमाः सुमताशाण्डिनीसंवादे संक्षिप्य दर्शिताः ।

(७) **धीर्नाम** शास्त्रादितत्त्वज्ञानम् । यदर्थमाह **मनुः**—

'सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥' (२ । ८)

(८) **विद्या**नामात्मज्ञानम् । 'विद्ययाऽमृतमश्नुते' (ई. उ. ११ मं.) (मनु. १२ । १०४) इति ।

(९) **सत्यं** नाम यथार्थाभिधानरूपम् । यदाहुः—

'तुलामारोपितो धर्मः सत्यं चैवेति न श्रुतम् ।
समकक्षां तुलयतो यतः सत्यं ततोऽधिकम् ॥'
(म. भा. शां. प. मो. १६६ अध्या. ६६ श्लो.)

'सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥' (मनु. ४ । १३८)

(१०) **अक्रोधो** नाम क्षमारूपोऽपि निरपराधेऽपि वृत्तिविशेषानुत्पादनलक्षणः प्रशस्यः । क्रोधेनैव वाग्दण्डपारुष्ययोः संभवात् । यथा-चाह—

'सर्वोपायात्तु कामस्य क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥
नित्यं क्रोधात्तपो रक्षेच्छ्रियो रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं च प्रमादतः ॥' इति ।

अतएव द्रौपदीं प्रति धर्मराजवाक्यम्—

'क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः ।
इति विद्धि महाप्राज्ञे ! क्रोधमूलौ भवाभवौ ॥' इत्यादि ।
(म. भा. वनप. २९ अ. १ श्लो.)

अथ ज्ञानकर्मणी पृथक् समुच्चिते वेति कथा तु सुप्रथितैव तावत् । यदाहुर्**विज्ञानामृते** मोक्षधर्मे—

'ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां वदन्त्यन्ये यतयः सूक्ष्मदर्शिनः ॥
प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा पञ्चशिखेन मे ।
तेनाहं सांख्यमुख्येन स्वदृष्टार्थेन तत्त्वतः ।
आवितस्त्रिविधं मोक्षं न च राज्याद्विचालितः ॥' इति ।
'आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंश्रयात् ।
कृच्छ्रक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥' इति च

सोऽयं ज्ञानकर्मणोः समुच्चयपक्षो यथाप्रसङ्गं जनकवासुदेवादिमहापुरुषाणां वचनेषु सुव्यक्त एव । तावता तयोः पार्थक्यपक्षो न निरस्यते, पूर्वोत्तरमीमांसयोः पृथक्तया प्रारम्भणात् ज्ञानकर्मपदार्थयोर्विशकलनाच्च । **कपिलो**ऽपि सूत्रितवान्—'ज्ञानान्मुक्तिः । बन्धो विपर्ययात् । नियतकारणत्वान्न समुच्चयविकल्पौ ।' (सां. द. ३ । २३-२५) इति । 'ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः' (सां. का. ४४) इती**श्वरकृष्णो**ऽपि । अतएवाधिकारानुगुण्येन पञ्चशिखो जनकं तथोपदिदेशेति द्रष्टव्यम् ।

इतरथोपजीव्यविरोधः स्यात् । ज्ञानकर्मणी दशलक्षणकाद् धर्मशरीरान्नातिरिच्येते । अतएव—'ज्ञानं तथा कर्म च धर्ममाहुः' इति निरूपितम् ॥ १६५ ॥

उक्तमेव प्रपञ्चयति—**नाध्यासत इति** । ज्ञानं विद्यैव विविक्तविषयत्वात् कुटीरः, तस्य कोणान् । प्रायो भूम्ना, तैर्थिकानां विसंवादाः अन्योन्यमतभेदाः, तेषां विधाः प्रकारा एव कुटिलगतित्वाद् भुजङ्गाः । नाध्यासते नाधितिष्ठन्ति । क्वचिद् विद्यमानेऽप्यासनावकाशे बहुलक्ष्ये अमृताख्ये वेदसर्वस्वे भगवता कृष्णेन, पाराशर्येण वासुदेवेन च चिकित्सितेऽपि ब्रह्मसूत्र-गीतोपदेशाभ्यां शोधितेऽपि, अमी वादवाचस्पतीनां व्याख्यासंरम्भगोचराः कर्मशरीरबन्धाः मूर्च्छन्ति हन्त ! ।

अथात्मदर्शनम् ।

यदाह भगवानादिशेषः—

"आत्माम्बुराशौ निखिलोऽपि लोको (देही)
मग्नोऽपि नाचामति नेक्षते च ।
आश्चर्यमेत,न्मृगतृष्णिकाभे
भवाम्बुराशौ रमते मृषैव ॥'
'मायामयोप्यचेता गुणकरणगणः करोति कर्माणि ।
तदधिष्ठाता देही, स चेतनोऽपि न करोति किंचिदपि ॥'
'यद्वदचेतनमपि सन्निकटस्थे भ्रामके भ्रमति लोहम् ।
तद्वत्करणसमूहश्चेष्टति चिदधिष्ठिते देहे ॥'
'यद्वत् सवितर्युदिते करोति कर्माणि जीवलोकोऽयम् ।
न च तानि करोति रविर्न कारयति, तद्वदात्मापि ॥'
'मनसोऽहंकारविमूर्च्छितस्य चैतन्यबोधितस्येह ।
पुरुषाभिमानसुखदुःखभावना भवति मूढस्य ॥'
'नानाविधवर्णानां रूपं धत्ते यथामलः स्फटिकः ।

तद्वदुपाधिगुणभावितस्य रूपं विभुर्धत्ते ॥'

'गच्छति, गच्छति सलिले दिनकरबिम्बं, स्थिते स्थितिं याति ।
अन्तःकरणे गच्छति, गच्छत्यात्मापि तद्वदिह ॥'

'राहुरदृश्योऽपि यथा शशिबिम्बस्थः प्रकाशते जगति ।
सर्वगतोऽपि तथात्मा बुद्धिस्थो दृश्यतामेति ॥'

'बुद्धिमनोऽहंकारास्तन्मात्रेन्द्रियगणाश्च भूतगणः ।
संसारसर्गपरिरक्षणक्षमाः प्राकृता ह्येयाः ॥'

'यद्वद् दिनकर एको विभाति सलिलाशयेषु सर्वेषु ।
तद्वत् सकलोपाधिष्ववस्थितो भाति परमात्मा ॥'

'खमिव घटादिष्वन्तर्बहिः स्थितं ब्रह्म सर्वपिण्डेषु ।
देहेऽहमित्यनात्मनि बुद्धिः संसारबन्धाय ॥'

'रसफाणितशर्करिकागुडखण्डा विकृतयो यथैवेक्षोः ।
तद्वदवस्थाभेदाः परमात्मन्येव बहुरूपाः ॥'

विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः ।
व्यवहारास्तस्या (त्रा) त्मन्येतेऽवस्थाविशेषाः स्युः ॥'

'रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन
तद्वद् द्वैतविकल्पभ्रान्तिरविद्या, न सत्यमिदम् ॥'

'एतत्तदन्धकारं यदनात्मन्यात्मभावनभ्रान्त्या ।
न विदन्ति वासुदेवं सर्वात्मानं नरा मूढाः ॥'

'प्राणाद्यनन्तभेदैरात्मानं संवितत्य जालमिव ।
संहरति वासुदेवः स्वविभूत्या क्रीडमान इव ॥'

'त्रिभिरेव विश्वतैजसप्राज्ञैस्तैरादिमध्यनिधनाख्यैः ।
जाग्रत्स्वप्नसुषुप्तैर्भ्रमभूतैरच्छादितं तुर्यम् (वस्तु) ॥'

'मोहयतीवात्मानं स्वमायया द्वैतरूपया देवः ।
उपलभते स्वयमेवं गुहागतं पुरुषमात्मानम् ॥'

'ज्वलनाद् धूमोद्गतिभिर्विविधाकृतिरम्बरे यथा भाति ।
तद्वद् विष्णौ सृष्टिः स्वमायया द्वैतविस्तरा भाति ॥'
'शान्त इव मनसि शान्ते, हृष्टे हृष्ट इव, मूढ इव मूढे ।
व्यवहारस्थो न पुनः परमार्थत ईश्वरो भवति ॥'
'जलधरधूमरजोभिर्मलिनी क्रियते यथा न गगनतलम् ।
तद्वत् प्रकृतिविकारैरपरामृष्टः परः पुरुषः ॥
'एकस्मिन्घटगगने धूमादिमलावृते, शेषाः ।
न भवन्ति मलोपेता, द्वन्द्वैर्जीवोऽपि तद्वदिह ॥'
'यद्वदिषीकातूलं पवनधुतं क्वापि दशदिशो याति ।
ब्रह्मणि तत्त्वज्ञानात्तथैव कर्माणि तत्त्वविदः ॥'
'क्षीरादुद्धृतमाज्यं क्षिप्तं यद्वन्न पूर्ववत्तस्मिन् ।
प्रकृतिगुणेभ्यस्तद्वत् पृथक्कृतश्चेतनोऽप्यात्मा ॥'
'गुणमयमायागहनं निर्धूय यथा तमः सहस्रांशुः ।
बाह्याभ्यन्तरचारी सैन्धवघनवद् भवेत् पुरुषः ॥'
'एकस्मात् क्षेत्रज्ञाद् बहवः क्षेत्रज्ञजातयो जाताः ।
लोहगतादिव दहनात् समन्ततो विस्फुलिङ्गकणाः ॥'
'ते गुणसंगमदोषाद् बद्धा इव धान्यजातयः स्वतुषैः ।
जन्म लभन्ते तावद् यावन्न ज्ञानवह्निना दग्धाः ॥'
'मातृपितृपुत्रबान्धवधनभोगविभागदुःखसंमूढः ।
जन्मजरामरणामये चक्र इव भ्राम्यते जन्तुः ॥'
'लोकव्यवहारकृतां य इहाविद्यामुपासते मूढाः ।
ते जननमरणधर्माणोऽन्धं तम एत्य खिद्यन्ते ॥'
'हिमफेनबुद्बुदा इव जलस्य, धूमोद्गमो यथा वह्नेः ।
तद्वत् स्वभावभूता मायैषा कीर्तिता विष्णोः ॥'
'एवं द्वैतविकल्पां भ्रमस्वरूपां विमोहिनीं मायाम् ।

उत्सृज्य सकलनिष्कलमद्वैतं भावयेद् ब्रह्म ॥'

'यद्वत् सलिले सलिलं, क्षीरे क्षीरं, समीरणे वायुः ।
तद्वद् ब्रह्मणि विमले भावनया तन्मयत्वमुपयाति ॥'

'आत्मज्ञस्तरति शुचं, यस्माद् विद्वान्न बिभेति कुतश्चित् ।
मृत्योरपि मरणभयं न भवत्यन्यत् कुतस्तस्य ॥'

'भिन्नेऽज्ञानग्रन्थौ छिन्ने संशयगणे शुभाशुभे क्षीणे ।
दग्धे च जन्मबीजे परमात्मानं हरिं याति ॥'

'मोक्षस्य नैव किंचिद् धामास्ति न चापि गमनमन्यत्र ।
अज्ञानमयग्रन्थेर्भेदो यस्तं विदुर्मोक्षम् ॥' इति ।

आत्मा स्वभावतः शुद्ध इत्यधिकरणसिद्धान्तः । यदाहुः—

'आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ।
नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥'

'यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥' इति ।

अतएव विवृण्वते **त्रोटकाचार्याः**—

"मनसा पुरुषः पुरुषेण मनो,
नभसा मुसलं मुसलेन नभः ।
नहि योगवियोगमुपैति, कुतो-
ऽवयवत्वनिराकरणादमुतः ॥

दिनकृत्प्रभया सदृशेन सदा
जनचित्तगतं सकलं स्वचिता ।
विदितं भवताऽविकृतेन सदा,
यत एवमतोऽसि तदेव सदा ॥

उपरागमपेक्ष्य मतिर्विषये-
विषयावधृतिं कुरुते तु यतः ।

अतएव मतेर्विदिताविदिता
विपर्यास्तु, ततः परिणामवती ॥
मतिवृत्तय आत्मचिता विदिताः
सततं हि यतोऽविकृतस्तु ततः ।
यदि चात्मचितिः परिणामवती,
मतयो विदिताविदिताः स्युरिमाः ॥
चरितं तु धियः सकलं सततं
विदितं भवता परिशुद्धचिता ।
मतिभेदगुणो नहि तेऽस्ति ततो,
यत एवमतोऽसदृशस्तु धिया ॥
उपलभ्यमहंकरणं न भवेत्
पुरुषेण गुणो, यदि तस्य भवेत् ।
न गुणो गुणिनि स्थितवान् गुणिना
विषयीक्रियते न च तस्य गुणैः ॥
न परस्परमग्निगुणोऽग्निगतो
विषयत्वमुपैति कदाचिदपि ।
न हि वह्निरपि स्वगुणं स्वगतं
विषयीकुरुते स्वगुणेन भुवि ॥" इति ।

ज्ञानं मोक्षस्य साधनमिति सर्वतन्त्रसिद्धान्तः । कर्मापि चित्तशुद्धिद्वारेणेति विशेषः । उक्तं च—'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति । तदिदं यज्ञलक्षणमुपासनालक्षणं च । उभयमपि निष्काममेवानुष्ठीयमानं चित्तशोधकं भवति । सकामं तु कामनाघटकम् । एवं प्रवृत्तिलक्षणमपि कर्म निवृत्तिलक्षणतया फलति । इत्थंजातीयक एव हि नैतिककर्मयोग इति मनोहत्यावधारणीयम् । भक्तिरपि न स्वतन्त्रा, तस्या ज्ञानकर्मणोरन्तःपातित्वात् । न भक्तिमन्तरेण ज्ञानकर्मणी लब्ध-

प्रतिष्ठे। अतएव भगवद्गीतासु सांख्ययोगाभ्यामतिरिक्ता तृतीया भक्तिनिष्ठा न परिभाविता। ईश्वरपरानुरक्तिरूपा भक्तिस्तु संदब्धैव। **गीतानिष्यन्दे**ऽप्युक्तम्—

'न पादपतनं भक्तिर्व्यापिनः परमात्मनः।
भक्तिर्भावस्वभावानां तदेकीभावभावनम्॥' इति।

अथ कामनाघटकं कर्म तु श्रुत्यैवमपोद्यते—

'प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढाः
जरामृत्युं पुनरेवापि यन्ति॥' (मुं. १।२)

'अविद्याया अन्तरे वर्तमानाः
स्वयं धीराः पण्डितं मन्यमानाः।
जङ्घन्यमानाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः॥'
(मुं. १।२॥क. १।२।५)

एवंजातीयकमेव कर्म लक्ष्यीकृत्य **भगवद्गीतासु** गीयते—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
कर्मवादरताः पार्थ! नान्यदस्तीति वादिनः॥
कामात्मानः स्वर्गपरा, जन्मकर्मफलप्रदाम्।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम्।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन!।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥ (२।४२-४५)

एतेन भगवद्गीतासु कर्मनिन्देति ब्रुवाणानां झञ्झातालमृदङ्गवादानिरतानां मुखारविन्देषु मिहिकापातो व्यक्त एव। **भगवद्गीतासु** चरमे—

"यज्ञदानतपःकर्म न त्याज्यं, कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥" ( १८ । ५–६ )

इति निर्णयात् । अथोपासनाप्रकारः **श्वेताश्वतराणां** मन्त्रोपनिषदि–

"त्रिरुन्नतं स्थाप्य समं शरीरं
हृदीन्द्रियाणि मनसा संनिवेश्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान्
स्रोतांसि सर्वाणि भयावहानि ॥
प्राणान् प्रपीड्येह संयुक्तचेष्टः,
क्षीणे प्राणे नासिकयोच्छ्वसीत ।
दुष्टाश्वयुक्तमिव वाहमेनं
विद्वान् मनो धारयेताप्रमत्तः ॥
समे शुचौ शर्करावह्निवालुका-
विवर्जिते शब्दजलाश्रयादिभिः ।
मनोऽनुकूले न तु चक्षुपीडने
गुहानिवाताश्रयणे प्रयोजयेत् ॥
नीहारधूमार्कानिलानलानां
खद्योतविद्युत्स्फटिकशशीनाम् ।
एतानि रूपाणि पुरःसराणि
ब्रह्मण्यभिव्यक्तिकराणि योगे ॥
पृथ्व्यप्तेजोनिलखे समुत्थिते
पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः
प्राप्तस्य योगाग्निमयं शरीरम् ॥

लघुत्वमारोग्यमलोलुपत्वं
वर्णप्रासदं स्वरसौष्ठवं च ।
गन्धः शुभो मूत्रपुरीषमल्पं
योगप्रवृत्तिं प्रथमां वदन्ति ॥
यथैव विम्बं मृदयोपलिप्तं
तेजोमयं भ्राजते तत्सुधान्तम् ।
तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही
एकः कृतार्थो भवते वीतशोकः ॥
यदात्मतत्त्वेन तु ब्रह्मतत्त्वं
दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥" इति । ( २ । ८-१५ )

अत्र त्रिरुन्नतमिति द्वाभ्यां प्राणायामः, सम इत्येकेन आसनवन्धयोग्य-प्रदेशः, नीहारेत्येकेन योगप्रवृत्तस्य प्रत्ययाः, पृथ्वीति द्वाभ्यां साधारणसि-द्धयस्तल्लिङ्गान्तराणि च, यथैवेति द्वाभ्यां निःश्रेयसलक्षणा प्रधानसिद्धिश्चो-पदिश्यते । सोऽयं योगो भगवता **पतञ्जलिना** स्वदर्शने सूत्रितः । भगवता **वासुदेवेन** च गीतासु—

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्, योगमात्मविशुद्धये ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥" (६ । ११–१५)

इत्यादिना निरूपितः । अत्रास्मच्छब्दार्थ आत्मा । उपासनावतरणे हि सर्वगतोऽप्ययमात्मा अङ्गुष्ठादिप्रमित इव देहे हृदयाकाशे नैकविधया युक्त्या भगवत्या श्रुत्या ग्राह्यते । तथाहि—

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये संनिविष्टः ।
हृदा मन्वीशो मनसाऽभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥
पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ॥
नवद्वारे पुरे देही हꣳसो लेलायते बहिः ।
वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥' (श्वेता. ३ । १३-१८)

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥
अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥'
(कठ. २ । ४ । १२–१३)

'आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।

आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥' (मनु. १२ । ११९)

'प्रशासितारं सर्वेषामणीयांसमणोरपि ।

रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।

इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥'(मनु. १२ । १२२-१२३)

'ध्यानयोगेन संपश्येत् सूक्ष्म आत्माऽऽत्मनि स्थितः ।'

( याज्ञ. ३ । ६४ )

'द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ।

हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् ॥

*मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ।*

स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ॥'(याज्ञ. ३ । १०८-१०९)

'उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।

परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥' (भ. गी. १३ । २२)

"शतं चैका च हृदयस्य नाड्य-

स्तासां मूर्धानमभिनिःसृतैका ।

तयोर्ध्वमायन्नमृतत्वमेति

विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥" ( कठो. २ । ६ । १६ )

"हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनां, तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः, प्रतिशाखा नाडीसहस्राणि भवन्त्यासु व्यानश्चरति ।" इत्या. ( प्रश्नो. ३ । ६ ) ।

अथेदमपि प्रतिपत्तव्यम्—प्रस्तूयमान उपासनाप्रकार आगमेषु बहुधा श्रूयते । तत्रेयमभिव्यक्तिः—

'चत्वारि वाक् परिमिता पदानि

तानि विदुर्ब्राह्मणा ये मनीषिणः ।

गुहा त्रीणि निहिता नेङ्गयन्ति

तुरीयं वाचो मनुष्या वदन्ति ॥'

(ऋ. सं. १ मं. २२ अ. १६४ सू.)

"या सा मित्रावरुणसदनादुच्चरन्ती, त्रिषष्टिं

वर्णानत्र प्रकटकरणैः प्राणसङ्गात्प्रसूतान् ।

तां पश्यन्तीं प्रथममुदितां, मध्यमां बुद्धिसंस्थां,

वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥" (साम्बपञ्चा. ४)

"हरिरप्याह—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।

अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥

इति । तत्र श्रोत्रविषया वैखरी । मध्यमा हृदयदेशस्था पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम् । पश्यन्ती तु लोकव्यवहारातीता, योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति । परायां तु नेति त्रय्या इत्युक्तम् ।

'स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।

तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥'

इत्युक्तेः । अनेकतीर्थभेदाया नामाख्यातादिवीणावेणुमृदङ्गशब्दादिरूपानेकभेदायाः" इति भाष्यप्रदीपे पस्पशाह्निके प्रकृतव्याख्यायां कय्यटोपाध्यायाः ।

मूलाधाराद् ब्रह्मरन्ध्रान्तं यावद् ब्रह्मनाडीसंबन्धेन कानिचिच्चक्रपदाभिधेयानि ध्येयपदानि स्मर्यन्ते तत्रेमानि चत्वार्यपि । देशबन्ध इति सूत्रे (३ । १) पातञ्जलयोगभाष्ये व्यासदेवेनाप्यभाषि— "नाभिचक्रे, हृदयपुण्डरीके, मूर्ध्नि ज्योतिषि—" इत्यादि । अत्रेमानि लक्ष्याणि—

'ओमित्यन्तर्नदति नियतं यः प्रतिप्राणि शब्दो

वाणी यस्मात् प्रसरति परा शब्दतन्मात्रगर्भा ।

प्राणापानौ वहति च समौ यो मिथो ग्राससक्तौ

देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥' (साम्बपञ्चा. २)

'ब्रह्मरन्ध्रसरसीरुहोदरे
नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीकनककाण्डमण्डितं
द्वादशान्तसरसीरुहं भजे ॥' ( पादुकापञ्च. )

' यत् षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् ।
तस्मिन्नन्तः स्तनभरनतां कुण्डलीतः प्रवृत्तां
श्यामाकारां सकलजननीं संततं भावयामि ॥'(लघ्वाचार्य.)

इत्येवमादि ॥ १६५-१६६ ॥

**श्रौतेन गृह्येण च शासनेन**
**नियन्त्र्यते ह्याश्रमधर्म एषः ।**
**उपासनायां गुणभेदकेऽपि**
**नालम्बते क्वापि विरुद्धकोटिम् ॥ १६७ ॥**

ज्ञानकर्मसमुच्चयोऽपि न दुष्यतीति निर्दिशति--**श्रौतेनेति** । ज्ञानकर्मलक्षणोऽप्येष आश्रमधर्मः श्रुतिस्मृतिशासनेन नियम्यमानः क्वापि विप्रतिपत्तिकोटिमाश्रयितुं नार्हति ॥ १६७ ॥

**यत्स्वेच्छयोच्चैरवतारकर्म-**
**वृत्तानि संचार्य जनान्प्रतार्य ।**
**उदीयते कैरपि कामपूर्त्यै**
**दोषः स किं कृष्णमुनेर्न तेषाम् ॥ १६८ ॥**

पुराणेतिहासपरिभाषाविप्रलब्धान् स्मारयति--**यत्स्वेच्छयेति** । अवतारकर्मवृत्तानि रासलीलादिषु वर्णितानि । स दोषः किं ? कृष्णमुनेः= भगवतः पाराशर्यस्य वासुदेवस्य च । न तेषाम्, अपि तु तेषामेव मन्दप्रतिभानाम् । अत्राहुस्तत्त्वविदः--

' गोपीपदवाच्याभिर्मायाभिः सार्धमान्तरे निलये ।

नानाविलाससुभगं नन्दाम्यात्मानमात्मना कृष्णम् ॥'
गाः पान्तीति गोप्यः । गौरादित्वात्—ङीष् ॥ १६८ ॥

**विशुद्धवाच्योऽपि स संप्रदाय-**
**शब्दोऽद्य वैमत्यविषप्रयोगैः ।**
**अवाच्यवादाश्रयतां प्रपन्नो**
**मथ्नाति चेतांसि विवेचकानाम् ॥ १६९ ॥**

उपासकानां मतिकर्दममुपन्यस्यति—**विशुद्धवाच्य इति** । विशुद्धः=श्रुतिस्मृतिप्रमाणत्वाद् आदर्शभूतो वाच्यः अभिधेयो यस्य तादृगपि, स संप्रदायशब्दः । संप्रोपसृष्टाद् ददातेर्भावे घञ् । विमतीनां भावो वैमत्यम्, तदेव अनिष्टजनकत्वाद् विषं तस्य प्रयोगैः अनुष्ठानैः, अवाच्यो=वाचा वहिरनुद्ग्राह्यो यो वादः अन्योन्याक्षेपरूपः तदाश्रयतां प्रपन्नः सन् अद्य विवेचकानां स्वर्गादिसाध्यतत्साधनमार्मिकाणां चेतांसि मथ्नाति विलोडयति ।

तदिदं प्राक् चतुःप्रस्थानान् वैष्णवान् प्रत्यावेदितमेव, संप्रति चतुः प्रस्थानान् साधून् प्रत्यावेदनम् । तत्र मतप्रवर्तकानां साधूनां सत्ताकाला-र्निर्दिष्टानां वैक्रमाब्दानामभ्यन्तरे—

श्रीरामानन्दमहाभागस्य ( १४५७–१५२७ )
श्रीकवीरमहाभागस्य ( १४१७–१५७५ )
श्रीनानकमहाभागस्य ( १५२६–१५९५ )
श्रीदादूमहाभागस्य ( १६०१–१६६० )

॥ १६९ ॥

**उपास्तिसिद्ध्यै न च भेदलब्ध्यै**
**स्मृतः स ऐशो गुणमुख्यभावः ।**
**चेदन्यथा तर्क्यत एष वस्तु-**
**न्युत्पत्तिसंपत्तिविपत्तिदोषाः ॥ १७० ॥**

विष्णुः शिवः शक्तिगणेशसूर्या
ये ब्रह्मदृष्ट्या समुपासनीयाः ।
तेष्वेकतैवार्हति योगशैल्या-
प्यनेकता तु याति शक्तिषट्कम् ॥ १७१ ॥

विष्णुशिवशक्तिप्रतिपादकपुराणेतिहासागममार्गानुसारेणोपासनमेवस्मार-यति—**उपास्तिसिद्ध्या इति** । चेदन्यथा तर्क्यत एष पारमेश्वरो लीलाविग्रहवैभवः, तदानीं वस्तुनि=पृथिव्यादिलक्षणे, एकस्माद् ब्रह्मणः श्रुतिस्मृतिप्रतिज्ञातमुत्पत्तिस्थितिभङ्गं विरुध्यत इति तत्त्वम् ।

इहेदं विचारणीयम्—संप्रदायप्रवर्तकाः श्रीरामानुजादयो ब्रह्मसूत्रभाष्य-कारा नैकार्थपरायणा इति पूर्वं यथायथं दर्शितमेव । इतः श्रीकबीरादयो ज्ञानवीरा भूत्वा वर्णाश्रमशृङ्खलावहेलनतया पूर्वतो विलक्षणा इत्यपि भारतीयानां न प्रदर्शनापेक्षि । एवं लैङ्गायताः पाशुपताश्च । प्रव्रज्यायाम्—

"ब्रह्मचर्यं परिसमाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत् । यदिवेतरथा—ब्रह्मचर्यादेव प्रव्रजेद्, गृहाद्वा, वनाद्वा । अथ पुन-रव्रती वा, व्रती वा, स्नातको वा, अस्नातको वा, उत्सन्नाग्निको वा: यदहरेव विरजेत् तदहरेव प्रव्रजेत् ।" ( ४ खं. )

इति जाबालोपनिषदादि शासनम् । यद्यपि सर्वे ह्याश्रमाः श्रान्ता इव विश्रान्तिभाजोऽत्र दृश्यन्ते तथापि विशेषतो नैष्ठिकब्रह्मचर्यमिति, ततः पारिव्राज्यमिति वा । अहो उपस्थद्वारगुप्तिदुरवगाहता । अथात्र **मनुयाज्ञ-वल्क्यौ**—

'वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥
आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्धते ॥
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।

अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥' (मनु.६।३३-३५) इति।
'प्राजापत्यां निरूप्येष्टिं सार्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत् गृहात्॥'(मनु.६।३८)इति।
"वनाद् गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्।
प्राजापत्यां, तदन्ते तानग्नीनारोप्य चात्मनि ॥
अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यान्न चान्यथा॥" (याज्ञ.३।५६-५७)
इति च।

उपनयने—'अष्टवर्षं ब्राह्मणमुपनयेत्—' इत्यादिषु श्रूयमाणो ब्राह्मणादिपदार्थ इव, भैक्षमूलिकायां प्रव्रज्यायां कृतोपनयन एवाधिकारी। 'अयज्ञोपवीती कथं ब्राह्मण इति' (जाबालोप. ५ खं.) इत्येवमादिश्रवणात्। एतेन त्रैवर्णिकोऽधिकारीति। सूक्ष्मेक्षिकया तु आचार्यक इव संन्यासेऽपि ब्राह्मण एवेति वेदपुरुषमन्वाद्याशयः। उपनयने पित्रादीच्छा प्रयोजिका, प्रव्रज्यायां तु स्वेच्छेति विशेषः। 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रवणात्। एतेन बुद्धिपूर्वकत्वात्संन्यासस्य ये तदर्थं शिशून् गृह्णन्ति ये वा ग्राहयन्ति त उभेऽपराधिन इति स्पष्टम्। अतश्चाग्रे—

'चेत्स्वेच्छया हन्त! न दीक्षिता भो-
न भोगवैरस्यविशेषिता वा।
तदागमादिष्टविधिप्रयोगै-
रात्मानमुद्धृत्य शिवं श्रयन्ताम्॥ (११३ श्लो.)

इत्युक्तम्। ये ह्युपनयनाभावान्नैष्ठिकब्रह्मचर्ये नाधिक्रियन्तेऽथ तदनुव्रताः संजाताः, ये पुनरुपनयनाभावाद् इच्छाविरहाद्वा प्रव्रज्यायां नाधिक्रियन्तेऽथ तदनुसत्राः संजाताः, इत्थंभूतलक्षणाः स्त्रियश्च, सर्वेऽप्येते मुमुक्षवः पुराणादिवर्त्मना ज्ञानयोगिनो भवितुमर्हन्ति। उपसंहृतं चासकृद् वासिष्ठे रामचरिते—'जनश्च शूद्रोऽपि च मुक्तिमीयात्' इति।

अथ श्रीरामानुजादय इव श्रीरामानन्दादयोऽपि स्वस्वमतप्रकाशनैर्यतिगृहस्थसंस्थानविभक्तान् स्वस्ववर्गान् रचयांचक्रुः । एवं च स्तनंधयानां भविष्यद्दीक्षादानोपक्रमैरग्रिमसंस्कारमान्थर्यम्, युवकानां दैवतसेवनभजनोपदेशनैः संध्योपासनादिवैधुर्यम्, प्रौढानां मन्दिरोत्सवादिकर्तव्यैः पञ्चयज्ञादिवैमुख्यम्, वृद्धानां चतुर्थे किं करिष्यतीत्याभाणकेन तादवस्थ्यं किं वा सर्वस्ववितरणं च सुखं पर्यवसन्नम् । यद्येते सर्वे महात्मानो भगवद्वासुदेववच्चातुर्वर्ण्यं चातुराश्रम्यं च स्वमार्गं मन्यमानाः प्रावर्तिष्यन्त तदा नैतादृग् वर्णाश्रमधर्मोपप्लवोऽजनिष्यत् । भगवद्गीतासु तावद् वर्णाश्रमानुरोधेन विश्वजनीनः स्वर्गापवर्गयोः पन्था दर्शित एव । परं न जाने किंजानानैर्भारतदुरदृष्टैर्वा भगवद्गीता अपि स्वस्वमार्गे नीयमाना एव व्याक्रियन्ते । तथा अर्जुनवेदनानिरासानुरूपा ज्ञाननिष्ठापूर्वा कर्मनिष्ठापि स्वस्वोन्मीलितज्ञानकर्मप्रतानैः खिलीक्रियते । लाघवादपि—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥'

इत्यपि संदर्भतात्पर्यनिर्णायकवर्त्मापश्यद्भिर्गैतिकं श्लोकं तदर्धं पादं वा यथालक्ष्यमुपन्यस्यद्भिरसंस्कृता जनताऽपरथोपनीयते । इहोपसंहारादिकं—

''यत्र श्रौतं, न वा स्मार्तं प्रमाणमनुरुध्यते ।
तत्र लिङ्गोपसंहाराद् यतिता नैव हीयते ॥'
'ज्ञानं न भिद्यते क्वापि नैव कर्मापि शाश्विकम् ।
ऐच्छिकस्योपसंहारे का व्यथा त्यागिनां भवेत् ॥'
'चेद् वर्गकरणाभावाल्लाभमार्गावरोधनम् ।
तर्हि पूर्वकुलत्यागे का श्लाघेति विचार्यताम् ॥'
'बिन्दुसृष्टिविनाशेऽपि, नादसृष्टिर्न नश्यति ।
इति वित्तैषणाक्रान्तः किं मठो ह्यजरामरः ॥'

'एवं च गुर्वाम्नायस्य लाभार्थं लोभभूभृतः ।
लोकैषणां भो मा काङ्क्षीर्नित्याम्नायं निभालयन् ॥"

ब्रह्मणो नामानि तदैक्यं च निरूपयति—**विष्णुः शिवः शक्तीति ।** योगशैल्यापि तेषु विष्णुशिवशक्तिगणेशसूर्येषु एकतैव अर्हति=संगच्छते न च द्विता । एतदुक्तं भवति—वेवेष्टि, विष्लृ व्याप्तौ । शिवयति, 'तत्करोति—' इति णिजन्तात्पचाद्यच् । शक्नोतेः कर्तरि क्तिच्, भावादौ क्तिन् वा । गणानामीशः । सुवति कर्मणि प्रेरयति, षू प्रेरणे । 'राजसूयसूर्य—' (३ । १ । ११४) इति निपात्यते । एवं यस्य कस्यापि विशेष्यताभिधित्सायां परेषां विशेषणयोगिता प्रधानोपसर्जनभावेन पञ्चायतनीप्रकारवत् फलति । अनेकता तु शक्तीनां सर्वज्ञतादीनां षट्कं द्यति=खण्डयति । यथोक्तं योगवाचस्पत्ये वायुपुराणे—

'सर्वज्ञता, तृप्तिरनादिबोधः,
स्वतन्त्रता, नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः
षडाहुरङ्गानि महेश्वरस्य ॥' (वायुपु.१खं. १२ अध्या.३१श्लो.)

अथ वेदेषु पुराणागमसरणिसखी विष्ण्वादिदेवताश्रुतिरपि निगम्यते—

( १ ) 'तत्केशवाय विद्महे नारायणाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥' ( मैत्रायणीयसंहि. अग्निचि० )

'नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥' ( तैत्तिरीयारण्य. १० प्रपा. १ अनु. )

( २ ) ''देवानां च ऋषीणां चासुराणां च पूर्वजम् ।
महादेवꣳ सहस्राक्षꣳ शिवमावाहयाम्यहम् ॥'

'तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥' ( मैत्राय. अग्नि. )

( ३ )'कात्याय ( न्यै ) नाय विद्महे कन्यकुमा ( रीं ) रि धीमहि ।
तन्नो दु ( र्गा ) र्गिः प्रचोदयात् ॥' ( तैत्ति. आर. १० प्र. १ अ. )

( ४ )'तत्कराटाय विद्महे हस्तिमुखाय धीमहि ।
तन्नो दन्ती प्रचोदयात् ॥' ( मैत्रा. अग्नि. )
'तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ।
तन्नो दन्तिः प्रचोदयात् ॥' ( तैत्ति. आर. १० प्र. १ अ. )

( ५ )'तद्भास्कराय विद्महे प्रभाकराय धीमहि ।
तन्नो भानुः प्रचोदयात् ॥' ( मैत्रा. अग्नि. )
'भास्कराय विद्महे महाद्युतिकराय धीमहि ।
तन्नो आदित्यः प्रचोदयात् ॥' ( तैत्ति. आर. १० प्र. १ अ. )

कोऽपि तादृक् शब्दो नास्त्येव, यो जगदन्तरेण तदाधारमभिदध्यात् । एवं सोऽवाच्य एवेति युक्तम् । यत्तु—

'चत्वारिवाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥'
( ऋ. सं. १ मं. २२ अ. १६४ सू. )

इति परादित्रिकं तदपि प्रकृते निरुपयुक्तम् तथापि विष्णवादिनाम रूपानुल्लेखितया यथायोगं विशेष्यं वा विशेषणं वा भवितुमुचितम्, नैतादृक् केशवादि । एवं शिवादि नतु नीलग्रीवादि । शक्त्यादि, नतु हैमवत्यादि । एतानि नामान्यपि श्रौतानीत्यन्यदेतत् ॥ १७०-१७१ ॥

**नानेकधा देव इवेश्वरोयं**
**न वा क्रियाशक्तिनियन्त्रणास्य ।**
**न चापि शक्यः स हि शब्दशक्ति-**
**योगोऽन्यथा नेतुमुदेतु सत्यम् ॥ १७२ ॥**

तत्त्वं हि सम्यक् तपसावधार्य
प्रसार्य चान्तःकरणेषु शान्तिम् ।
उद्दामदुर्वादमलापहार-
स्फुरत्प्रसादोदयदीपिताः स्युः ॥ १७३ ॥
संसारदावानलतापभीत्या
वान्तं विषं वैषयिकं सुखं यत् ।
तस्यैव युक्त्या पुनराश्रयेण
वान्ताशिदोषावसरो न किं स्यात् ॥ १७४ ॥
न निर्वहत्युद्भटकालदोषा-
द्धर्मोऽधुना यद्यपि माननीयाः ! ।
तथाप्यधर्मः परिहार्य एव
नोपेक्षया यच्छति कर्म सिद्धिम् ॥ १७५ ॥

ऐक्यमेव निरूपयति—**नानेकधा देव इति** । ईश्वरस्यैकत्वमिव देवानामनेकत्वं निरुक्ते मीमांसयोः पुराणेतिहासयोश्च व्यक्तम् । तथास्य व्यापकस्यापि क्रियाशक्तिनियन्त्रणा कथंकारमुपपद्येत । 'परास्य शक्ति-र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्येवमादिदर्शनात् । न च स हि शब्दशक्तियोगोऽपि अन्यथा नेतुं शक्यः । अन्यथा शक्ति-ग्राहकशासनावहेलनायां भुव आकाशत्वे सर्वमधरोत्तरं स्यात् । इदं पूर्वमपि व्याख्यातम् । इत्थमविद्यापगमे विद्यैव प्रतिष्ठिता सत्यं वहति ॥

सत्योदयस्य फलमाह—**तत्त्वं हीति** । तपसा=निर्व्याजमनो-वाक्कायव्यापाररूपेण । अन्तःकरणेषु=अहंकारमनोबुद्धिचित्तेषु अहंकार-मनोवैषम्यपरिहारेण शान्तिवितानिकां प्रसार्य च । उद्दामा=निरर्गलो यो दुर्वादः, स एव लौकिकपारलौकिकज्ञानदूषकतया मलः किट्टः, तस्य अपहारेण मार्जनेन स्फुरन् यः प्रसादस्य प्रसन्नतायाः उदय उद्गमः, तेन दीपिता घनधूमरजोपगमे पुष्पवन्तकिरणा इव स्युः ॥

पुनरप्यावेदयति—**संसारदावानलेति** । वान्तं छर्दितम् । सुखं विषमिति व्यस्तरूपकम् । तस्यैव=वैषयिकसुखस्य युक्त्या=लोकापवाद-भयात् प्रकारान्तरप्रपञ्चनेन, पुनर्दीक्षाग्रहणोत्तरमपि आश्रयेण आलम्ब-नेन ग्रहणेन । शेषं स्पष्टम् ॥

अनिष्टाद् वारयति—**न निर्वहतीति** । यत्ने क्रियमाणेऽपीति पूरणीयम् । उपेक्षया क्रियमाणं कर्मापि सिद्धिं न यच्छतीति व्यक्तम् । अत्रेदं ध्येयम्—

'उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥'
(कठो. १ । ३ । १४)

'तीव्रवेगानामासन्नः । मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ।'
(यो. द. १ । २१-२२)

'धनुर्गृहीत्वोपनिषदं महास्त्रं
शरं ह्युपासा निशितं संधयीत ।
आयम्य तद्भावगतेन चेतसा
लक्ष्यं तदेवाक्षरं सौम्य ! विद्धि ॥' (मुण्डको. २ । २ । ३)

'वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥' (मुण्डको. ३ । २ । ६)

वेदान्ता ईशादिसधर्माण उपनिषदः । संन्यासः प्रैषोच्चारणपूर्वकः । उपासा दहरादिलक्षणा । क्षुरस्य धारेत्यात्मनो दुर्गमत्वख्यापनार्थम् ॥ ॥ १७२-१७५ ॥

**ज्ञानप्रतानानि वितत्य केचिद्**
**यथेप्सिताचारपथाधिरूढाः ।**

बोधामयाञ्शिष्यपरम्परासु
प्रवर्धयन्तो मुदिता भ्रमन्ति ॥ १७६ ॥
एके पुनर्ज्ञानरसप्रवाहै-
र्जनाञ्श्वपाकावधिकान्विशोध्य ।
उच्छृङ्खलां पद्धतिमादिशन्तो-
ऽप्यात्मानमुद्धारकमामनन्ति ॥ १७७ ॥
परे विदग्धास्तु पदार्थशक्ती-
र्व्यत्यास्य वेदान्खलु शिक्षयन्तः ।
चण्डालयोनीनपि विप्रयन्तो
वेदाशयान्किं न पवित्रयन्ति ॥ १७८ ॥
अन्ये महेच्छाः खलु वैदिकाँश्च
पौराणिकाँश्चागमिकाँश्च मन्त्रान् ।
अपास्य भाषामनुनैव कर्ण-
रन्ध्रं समृद्ध्यै परिपूर्णयन्ति ॥ १७९ ॥
अनूदितो मन्त्रतया हि मन्त्रो
न गृह्यते क्वापि विवेचनासु ।
पदार्थसत्त्वेऽपि परार्थतस्त-
त्पतत्प्रकर्षः प्रणवानुवादः ॥ १८० ॥

अनुमतानननुमताँश्च निर्दिशति–ज्ञानप्रतानानीति । केचिन्महेच्छाः–

"एवं तत्त्वाभ्यासान्नास्मि, नमे, नाह,मित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥" (सां. का. ६४)

इत्यादिविधां दूरादेवापसारयन्तः, निर्गुणमयैर्वचनैर्गानैः कीर्तनैश्च जगति ज्ञानप्रतानानि यथासंभवं वितत्य वर्णाश्रमधर्मोपमर्दनपूर्वकं यथेप्सिताचारपथाधिरूढाः सन्तः, शिष्यपरम्परासु बोधामयान् प्रवर्धयन्तः, तत एव मुदिता आच आमेरिकामण्डलाद् भ्रमन्ति ॥

पुनराह—**एके इति** । एके महेच्छाः पुनः ज्ञानरसप्रवाहैः श्वपाकावधिकान् जनान् । श्वानं पचतीति श्वपाकः, कर्तरिसंज्ञायां घञ् । विशोध्य—

'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥' (गी. ४।३७)

इत्येवमादि ताण्डवितबाहु वदन्तः संशोध्य। उच्छृङ्खलामनियन्त्रितामपि पद्धतिं वर्त्म आदिशन्त आत्मानमुद्धारकमामनन्ति ।.प्रमाणयन्ति च—

"किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ, चण्डालवाटीपयः-
पूरे वाऽन्तरमस्ति, काञ्चनघटीमृत्कुम्भयोर्वाम्बरे ।
प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ
विप्रोऽयं श्वपचोऽयमित्यपि महान् कोऽयं विभेदभ्रमः ॥"

इत्यादि ॥

पुनश्चाह—**परे इति** । परे विदग्धास्तु श्रुतिस्मृतिवाक्यानां यथासंभवं पदार्थशक्तीर्व्यत्यास्य अतदर्हाणि वाक्यानि प्रक्षेपादिकलङ्केन संगमय्य वेदान् बहु शिक्षयन्तः, चण्डालो योनिर्येषां तानपि विप्रयन्तो विप्रान् कुर्वाणाः किं वेदाशयान्न पवित्रयन्तीति विपरीतलक्षणा । इदानीमित्थंकर्माण आर्यधर्माङ्काः कतिपये सनातनधर्माङ्काश्च लभ्यन्ते ॥

पुनरप्याह—**अन्ये इति** । अन्ये खलु महेच्छाः देववाणी विमुखाः वैदिकादिमन्त्रानपास्य दैशिकभाषामन्त्रेणैव लाभार्थं शिष्यकर्णरन्ध्रं परिपूर्णयन्ति । शिष्यान् दीक्षयन्तीत्यर्थः । तत्र स्त्रीणां दीक्षणं स्त्रीद्वारकं शोभनं मन्यामहे । इतरथा बहुत्र बहुधा व्याकोपः प्रसजतीति दूरेक्षिकया निभालनीयम् ॥

मन्त्रार्थमाह—**अनूदित इति** । तस्य वाचकः प्रणव इति नीत्या मन्त्रः परमेश्वरनाम । तस्य प्रतिनिधिर्न हि शस्यते । लोकेऽपि देवदत्तो गीर्वाणवितीर्ण इति नाभिलप्यते । अतएव 'तुल्येऽर्थे क्षरभेदे ह्यमन्त्रके

क्षा विशेषोक्तिः' इति चिराय रूढम् । प्रणवस्तु परमेश्वर इव स्वप्रातिनिध्यं नापेक्षते । 'ओमित्येकाक्षरं ब्रह्म' इत्यादि दर्शनात् । उक्तं च छान्दोग्यभाष्ये—"ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठम् । तस्मिन् हि प्रयुज्यमाने स प्रसीदति, प्रियनामग्रहण इव लोकः ॥" इति । तथेदमपि स्मर्तव्यम्—

"त्रिप्रकारं जपं कुर्यान्नादोर्ध्वध्वनिबोधितम् ।
मन्त्राक्षराणि मणिवच्छक्तौ प्रोतानि भावयेत् ॥
तामेव च परे व्योम्नि परमामृतबृंहिताम् ।
दर्शयत्यात्मसद्भावमेवं मन्त्रो विमर्शनात् ॥"

इत्येवमादि ॥ १७९–१८० ॥

वैधानि कर्माणि यथेष्टमावा-
पोद्वापनीत्याहह ! कल्पयित्वा ।
प्रायेण संप्रत्यपरे वरेण्या
विश्वम्भरार्चा परिपीडयन्ति ॥ १८१ ॥

विधीयते यत्र न वेदपाठो
न वा पुराणागमसंगतानि ।
उद्योतितातोद्यविधानभङ्ग्या
किं सा सपर्या परमार्थकोटिः ॥ १८२ ॥

श्रद्धाथ भक्तिर्विहिता यदर्थं
सा मूर्तिपूजा क्रमशोऽपयाति ।
यत्राद्भुता वैषयिकाः प्रवाहाः
सा भूरिभावं भजते समन्तात् ॥ १८३ ॥

चापल्यदोषाद् गहनः स संप्र-
ज्ञाताख्ययोगोऽप्यपरस्तु दूरे ।

इत्येकदृष्ट्या परमेश्वरस्य
रूपामृतास्वादपरायणः स्यात् ॥ १८४ ॥
न क्वापि वर्णाश्रमशृङ्खलेयं
भक्त्याख्ययज्ञस्य विरोधिनीति ।
किमर्थमुद्दामविधादरेण
महर्षिमार्गात्स्खलना विधेया ॥ १८५ ॥

अनुव्रतेषु वानुव्रतेषु वा केचन कर्मठा दीव्यन्ति ते प्रस्तूयन्ते-- **वैधानीति** । संप्रति अपरे वरेण्याः=महाभागाः । विधिभ्य आगतानि वैधानि कर्माणि तथाच **श्रीमद्भागवते**-

'यात्राबलिविधानं च सर्ववार्षिकपर्वसु ।
वैदिकीतान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥'
( ११ स्कं. ११ अध्या. ३७ श्लो. ) इति ।

'वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥'
(११ स्कं. २७ अध्या. ७ श्लो. ) इति च ।

**पद्मपुराणे**ऽपि
'वैदिकस्तान्त्रिको मिश्रः श्रीविष्णोस्त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना हरिमर्चयेत् ॥'
( ४ पातालखं. ६५ अध्या. ७० श्लो. ) इति ।

आवापोद्वापनीत्या=हानोपादानभङ्ग्या, यथेष्टं कल्पयित्वा संघट्य्य प्रायेण बाहुल्येन विश्वंभरस्य अर्चां वरिवस्यां पीडयन्ति . दूषयन्ति अहह । अहहेत्यद्भुते खेदे । इदानीं देवमन्दिरेषूत्सवादिनेषु यात्रिकाणां दर्शकानां च हृदयावर्जकानि संभारवस्तु योजनानि सुप्रसिद्धानि ॥

एतदेव दर्शयति--**विधीयत इति** । पुराणानि, पुराणोपपुराण-

पाठः विष्णुसहस्रनामादिपाठश्च । आगमानि, गौतमीतन्त्रादीनि गोपा-लसहस्रनामादिपठनानि च । वेदस्याङ्गानीचोपाङ्गान्यपि मन्तव्यानि । तत्रान्तर्भावितसांख्ययोगौ मीमांसान्यायविस्तरौ तावन्न प्रक्षेपकलुषितौ, धर्मशास्त्रपुराणे तु बहुत्र प्रक्षेपकलुषिते । इदानीं धर्मशास्त्रपुराणयोः सारूप्येऽपि पुराणाद् धर्मशास्त्रं प्रबलम् । यथा खलु—'अर्थशास्त्रात्तु बलवद् धर्मशास्त्रमिति स्थितिः ।' ( याज्ञ. २ । २१ ) इति । धर्मशास्त्र-नाममात्रश्रवणात्सर्वं शेषशेषिभावापन्नमिव समानप्रमेयमिति न भ्रमित-व्यम् ; प्रक्षेपतोऽप्यतुष्यद्भिर्बहूनामार्षनामगन्धानामाप्रारम्भावसानं प्रणीत-त्वात् । स्मृताविव पुराणे पुराण इवोपपुराणे प्रमेयादित आर्षत्वे निश्चिते पुराणोपपुराणादिवाग्वादोऽनावश्यकः ।

'यस्मात् पुराह्यभूच्चैतत्पुराणं तेन तत् स्मृतम् ।'

इति ब्रह्माण्डे पूर्वभागे प्रक्रियापादे प्रथमाध्याये १७३ श्लोके पुराण-पदनिरुक्तिः । एवं पाणिनिरपि ( ४ । ३ । २३ ) ।

अथ पुराणम्—

'पुराणमेकमेवासीत्तदा कल्पान्तरेऽनघ ।'

( मात्स्य. ५२ अ. ४ श्लो. ) इति ।

'आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ।
पुराणसंहितां चक्रे पुराणार्थविशारदः ॥
प्रख्यातो व्यासशिष्योऽभूत् सूतो वै रोमहर्षणः ।
पुराणसंहितां तस्मै ददौ व्यासो महामतिः ॥'

( विष्णु. ३ अं. ६ अ. १५–१६ श्लो. ) इति च ।

अथ पुराणोपबृंहणम्—

( १ )'ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं त्रिदशसाहस्रं पुराणं परिकीर्त्यते ॥'=१३००० ।

( २ )'एतदेव यदा पद्ममभूद् हैरण्मयं जगत् ।

तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः ॥'=५५००० ।

( ३ )'वाराहकल्पवृत्तान्तमधिकृत्य पराशरः ।
यत् प्राह धर्मानखिलाँस्तद्युक्तं वैष्णवं विदुः ॥'=२३००० ।

( ४ )'श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
यत्र तद् वायवीयं स्याद् रुद्रमाहात्म्यसंयुतम् ॥'=२४००० ।

( ५ )'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद् भागवतमुच्यते ॥'=१८००० ।

( ६ )'यत्राह नारदो धर्मान् बृहत्कल्पाश्रयाणि च ।
पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ॥'=२५००० ।

( ७ )'यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणा ।
व्याख्याता वा मुनिप्रश्ने मुनिभिर्धर्मचारिभिः ॥
मार्कण्डेयेन कथितं तत्सर्वं विस्तरेण तु ।
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ॥'=९००० ।

( ८ )'यत्तदीशानकं कल्पं वृत्तान्तमधिकृत्य च ।
वसिष्ठायाग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते ॥'=१६००० ।

( ९ )'यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्स्थितिम् ॥
मनवे कथयामास भूतग्रामस्य लक्षणम् ।
भविष्यचरितप्रायं भविष्यं तदिहोच्यते ॥'=१४५०० ।

(१०)'रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
सावर्णिना नारदाय कृष्णमाहात्म्यमुत्तमम् ॥
यत्र ब्रह्मवराहस्य चोदन्तं वर्णितं मुहुः ।
तदष्टादशसाहस्रं ब्रह्मवैवर्तमुच्यते ॥'=१८००० ।

(११)'यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः ।

धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ॥
कल्पान्ते लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ।'=११००० ।
(१२)'महावराहस्य पुनर्माहात्म्यमधिकृत्य च ।
विष्णुनाभिहितं क्षोण्यै तद् वाराहमिहोच्यते ॥'=२४००० ।
(१३)'यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः ।
कल्पे तत्पुरुषं वृत्तं चरितैरुपबृंहितम् ॥
स्कान्दं नाम पुराणं च ह्येकाशीति निगद्यते ।'=८११०० ।
(१४)'त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गमभ्यधात्तच्च वामनं परिकीर्तितम् ॥'=१०००० ।
(१५)'यत्र धर्मार्थकामानां मोक्षस्य च रसातले ।
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥=१८००० ।
इन्द्रद्युम्नप्रसङ्गेन ऋषिभ्यः शक्रसंनिधौ ।'
(१६)'श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ।
मत्स्यरूपेण मनवे नरसिंहोपवर्णनम् ॥
अधिकृत्याब्रवीत्सप्तकल्पवृत्तं मुनीश्वराः ।
तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ॥'=१४००० ।
(१७)'यदा च गारुडे कल्पे विश्वाण्डाद् गरुडोद्भवम् ।
अधिकृत्याब्रवीत्कृष्णो गारुडं तदिहोच्यते ॥'=१८००० ।
(१८)'ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥'=१२२०० ।

इति मात्स्ये पुराणानुक्रमणिकाभिधाने ५३ अध्याये । अन्यत्रापि च ।
अत्र सर्वत्र पुराणश्लोकसंख्यासु विसंवादः ।

अथ पुराणलक्षणम्—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।

वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥'

इति ( मात्स्य. २३ अ. ६४ श्लो. )-(देवीभा. १ स्कं. २ अ. १८ श्लो.)-(भविष्य. १ ब्राह्मपर्व १ अ.५ श्लो.) (ब्रह्माण्ड.१ प्रक्रियापा.१ अ. ३७ श्लो.)।

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ॥'
( विष्णु. ३ अंश. ६ अ. २४ श्लो. )

इत्येवमादि ।

अथ पुराणलक्षणश्लोकस्य व्युत्पादनं **देवीभागवते**—

'सृष्ट्यर्थं च समाख्यातः सर्गः शास्त्रविशारदैः ।
हरिद्रुहिणरुद्राणां समुत्पत्तिस्ततः स्मृता ॥
पालनोत्पत्तिनाशार्थं प्रतिसर्गः स्मृतो हि सः ।
सोमसूर्योद्भवानां च राज्ञां वंशप्रकीर्तनम् ॥
हिरण्यकशिप्वादीनां वंशास्ते परिकीर्तिताः ।
स्वायंभुवमुखानां च मनूनां परिवर्णनम् ॥
कालसंख्या तथा तेषां तत्तन्मन्वन्तराणि च ।
तेषां वंशानुकथनं वंशानुचरितं स्मृतम् ॥'
( १ स्कं. २ अ. २१–२४ श्लो. )

एवं च दीर्घदीर्घतरव्यापारः सर्गादिपदार्थः, प्रपञ्चवाची च पञ्चशब्दः । तत एवोपपुराणानि स्मर्यन्ते । सूतसंहितादावष्टादश पुराणान्युद्दिश्ये-मान्युपपुराणान्युद्दिष्टान्यष्टादश—

"अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु ।
आद्यं सनत्कुमारेण प्रोक्तं, वेदविदां वराः ॥
द्वितीयं नारसिंहाख्यं, तृतीयं नान्दमेव च ।
चतुर्थं शिवधर्माख्यं, दौर्वासं पञ्चमं विदुः ॥
षष्ठं तु नारदीयाख्यं, कापिलं सप्तमं विदुः ।
अष्टमं मानवं प्रोक्तं, ततश्चोशनसेरितम् ॥

ततो ब्रह्माण्डसंज्ञं तु, वारुणाख्यं ततः परम्।
ततः कालीपुराणाख्यं विशिष्टं मुनिपुङ्गवाः॥
ततो वासिष्ठलैङ्गाख्यं प्रोक्तं माहेश्वरं परम्।
ततः साम्बपुराणाख्यं, ततः सौरं महाद्भुतम्॥
पाराशरं ततः प्रोक्तं, मारीचाख्यं ततः परम्।
भार्गवाख्यं ततः प्रोक्तं, सर्वधर्मार्थसाधकम्॥" इति।

(सूतसंहितानिर्दिष्टस्य लक्षश्लोकात्मकस्य पञ्चाशत्खण्डमण्डितस्य स्कन्द-पुराणस्य सनत्कुमारसूतशंकरवैष्णवब्राह्मसौरसंज्ञितासु षट्सु संहितासु द्वितीयायां सूतसंहितायां शिवमाहात्म्यखण्डे प्रथमाध्याये १३-१८ श्लो.)

इहैतत्सारम्—वेदेषु श्रूयमाणानां दहरोपासनादीनां वैशद्यार्थमेव पुराणेषु सर्वसाधारणावगतये विष्णुशिवशक्तीनां वेदपुरुषलक्षितानां लीलाविग्रहविभूतयो यथाप्रसङ्गमसकृदवतारिताः। अन्तराऽन्तरा चावतारा अतिक्रान्तपूरुषपौरुषसीमानो दर्शिताः। तत्रापि लक्ष्यभूता रामकृष्णमहिमान उन्मीलिताः। विष्णुर्हि—'विष्णुमुखा वै देवाः—' इति 'ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्' इति (तैत्ति. आर. १० प्रपा. १ अनु.) 'तत्केशवाय विद्महे नारायणाय धीमहि। तन्नो विष्णुः प्रचोदयात्॥' इति (मैत्रायणीय-सं. अग्निचि.) 'तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि। तन्नो गरुडः प्रचोदयात्॥' (तै. आ. १० प्र. १ अ.) इत्येवमादिश्रुतिभिः श्रूयमाण एव वैष्णव-भागवत-गारुडादिषु पुराणेषु विशिष्यते। पौराणिकाः पठन्ति हि—

'नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम्।
अण्डस्यान्तरिमे लोकाः सप्तद्वीपा च मेदिनी॥'

'मत्स्यः कूर्मोऽथ वाराहो नारसिंहोऽथ वामनः' इत्यवतारा हि—
'.........मत्स्यः पाणी आपेदे.........' इति (शतपथ. १ कां. ८ अध्या.)
'.........अन्तरतः कूर्मं भूतꣳ सर्पन्तम्, तमब्रवीत्, मम वै त्वङ्मा‌ꣳसा, समभूत्.........' इति (तैत्ति. आर. १ प्रपा. २३ अनु.) 'आपो वा इदम्

मग्रे सलिलमासीत्, तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत्,.......' इति (तैत्ति. संहि. ७ कां. १ प्रपा. ५ अनु.) 'वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि। तन्नो नारसिंᳪ हः प्रचोदयात्॥' इति (तैत्ति. आ. १० प्र. १ अ.) '........वामनो ह विष्णुरास.......' इति (शत. १ कां. २ प्रपा. २ अ. ५ ब्रा.) एवमादिश्रुतिभिः श्रूयमाणा एव मात्स्यकौर्मवाराहनारसिंह-वामनादिषु वर्ण्यन्ते। शिवो हि--'ईशानः सर्वविद्यानामीश्वरः सर्व-भूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम्॥' इति (तैत्ति. आर. १० प्र. ४७ अ.) 'नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः॥' इति (तै. आ. १० प्र. १८ अ.) एवमादिश्रुतिभिः श्रूयमाण एव शैववाय-वीयलैङ्गस्कान्दादिषु विशिष्यते। शक्तिर्हि--

'तामग्निवर्णां तपसा ज्वलन्तीं
वैरोचनीं कर्मफलेषु जुष्टाम्।
दुर्गां देवीᳪ शरणमहं प्रपद्ये
सुतरसि तरसे नमः॥' (तै. आ. १० प्र. १ अ.)

इति, गीताभङ्ग्या--'अहं रुद्रेभिर्वसुभिः--' (ऋ. सं. १० मं. १० अ. १२५ सू.) इति, आविर्भावशैल्या--'ब्रह्म ह देवेभ्यो विजग्ये--' (साम. तलवका. उप. ३ खं. १-१२) इत्येवं श्रूयमाणैव देवीभागवता-दिषु वर्ण्यते। एवं गणेशसूर्यावपि श्रावणीयौ। किमियता, ब्रह्मापि पुंलिङ्गीभवन् ब्राह्मब्रह्माण्डपाद्मेषु विजृम्भते। विश्वविश्रमनिदानं रामोऽपि रामायणादिषु तथा कृष्णोऽपि विवर्तभावेन ब्रह्मवैवर्तादिषु चेति दिक्। अतएव कृष्णद्वैपायनः सस्मार--

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति॥' (ब्रह्माण्ड. पू. भा. १ प्रक्रिया. १ अ. १७१ श्लोक.। म. भा. आदि. १ अध्या. २६७ श्लोक.।)

अहो ! कालवशात् पुराणमूर्तिः स्खलन्त्यपि वैदिकस्वभावं न परित्यजतीति । आतोद्यम् । उक्तं च-"ततं वीणादिकं वाद्य,मानद्धं मुरजादिकम्। वंशादिकं तु सुषिरं, कांस्यतालादिकं घनम् ॥" इति चतुर्विधं वादित्रम् । यद्वा 'उदात्ततौर्यत्रिकदेशनाभिः' इति पठनीयम् । याज्ञवल्क्यादिदर्शितं वाद्यं तु ( याज्ञ. ३ । ११३-११६ ) भिन्नतात्पर्यकम् ॥

पुनश्चाह-**श्रद्धेति** । भक्तिः । उक्तं च—

"अथ भक्तिं प्रवक्ष्यामि त्रिविधां पापनाशिनीम् ।
त्रिविधा भक्तिरुद्दिष्टा मनोवाक्कायसंभवा ॥
लौकिकी, वैदिकी चापि, भवेदाध्यात्मिकी तथा ।
ध्यानधारणया बुद्ध्या देवानां स्मरणं हि यत् ॥
विष्णुप्रीतिकरी चैषा मानसी भक्तिरुच्यते ।
मन्त्रवेदसमुच्चारैरविश्रान्तविचिन्तनैः ॥
जाप्यैश्चारण्यकैश्चैव वाचिकी भक्तिरुच्यते ।
व्रतोपवासनियमैस्तथेन्द्रियनिरोधनैः ॥
कायिकी सा तु निर्दिष्टा भक्तिः सर्वार्थसाधिका ।
भूषणैर्हेमरत्नाढ्यैश्चित्राभिर्वाग्भिरेव च ॥
वासःप्रतिसरैः सूत्रैः पवनैर्व्यजनोत्थितैः ।
नृत्यवादित्रगीतैश्च सर्ववल्युपहारकैः ॥
भक्ष्यभोज्यान्नपानैश्च या पूजा क्रियते नरैः ।
नारायणं समुद्दिश्य भक्तिः सा लौकिकी मता ॥
ऋग्यजुःसामजाप्यानि संहिताध्ययनानि च ।
क्रियन्ते विष्णुमुद्दिश्य भक्तिः सा वैदिकी मता ॥
दर्शे च पौर्णमास्यां च कर्तव्यं चाग्निहोत्रकम् ।
प्राशनं दक्षिणादानं पुरोडाशं चरुक्रिया ॥
इष्टिर्वृत्तिः सोमपानं याज्ञकं कर्म सर्वशः ।

अग्निभूम्यनिलाकाशजलशंकरभास्करम् ॥
यमुद्दिश्य कृतं कर्म तत्सर्वं विष्णुदैवतम् ।
आध्यात्मिकीयं विविधा ब्रह्मभक्तिः स्थिता नृप ॥" इति ।
( पद्मपुराण ५ पातालखं० ८४ अ. ४-१४ श्लो. )

इदानीं यत्र क्वापि देवतायतने लौकिकी भक्तिरप्युत्पथं नीयमाना नयनपथमवतरति । बहुत्र देवतार्पितभक्ष्यभोज्यान्नानि विक्रीयन्ते हन्त, नृत्यवादित्रगीताधिकरणानि च भुज्यन्ते भोः, यदर्थम्—'यत्राद्भुता वैषयिकाः प्रवाहाः—' इत्यावेदितम् ॥

मूर्तिपूजोद्देश्यं सूचयति—**चापल्यदोषादिति** । अपरः असंप्रज्ञातः । उत्तरार्धेन संप्रज्ञातस्य विषयो दर्शितः । उक्तं च—

"मूर्तं भगवतो रूपं सर्वोपाश्रयनिस्पृहम् ।
एषा वै धारणा ज्ञेया, यच्चित्तं तत्र धार्यते ॥
तच्च मूर्तं हरे रूपं यद् विचिन्त्यं नराधिप ! ।
तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥
प्रसन्नवदनं चारुपद्मपत्त्रनिभेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥
समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
वलीविभङ्गिना मग्ननाभिना चोदरेण च ।
प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥
समस्थितोरुजङ्घं च स्वस्तिकाङ्घ्रिकराम्बुजम् ।
चिन्तयेद् ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥
किरीटचारुकेयूरकटकादिविभूषितम् ।
शार्ङ्गचक्रगदाखड्गशङ्खाक्षवलयान्वितम् ॥
चिन्तयेत्तन्मयो योगी समाधायात्ममानसम् ।

तावद् यावद् दृढीभूता तत्रैव नृप ! धारणा ॥
एतदातिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ।
नापयाति यदा चित्तं सिद्धां मन्येत तां तदा ॥" इति ।
"ततः शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः ।
चिन्तयेद् भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥
यदा च धारणा तस्मिन्नवस्थानवती ततः ।
किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥
तदेकावयवं देवं सोऽहं चेति पुनर्बुधः ।
कुर्यात्ततो ह्यहमिति प्रणिधानपरो भवेत् ॥" इति च ।

(विष्णुपु. ६ अं. ७ अ. ७८-९० )

व्युत्पादितोऽयमर्थः—'देशबन्धः—' (यो. द. ३।१,६) इत्येतद्भाष्य-वाचस्पत्योः ॥

भक्तिं चिन्तयति—**न क्वापीति** । न क्वापि वेदैस्तदुपश्लिष्टाभिरुपनिषद्भिर्वा इयं वर्णाश्रमशृङ्खला भक्तिरेवान्तरबाह्ययजनोपयोगितया यज्ञः तस्य विरोधिनीति मन्तव्यम्, किंतु सहायिनीति । उत्तरार्धेन पूर्वमान्यानेकहेलया विस्मारयतोऽनुव्रताननुष्ठवाँश्चाक्षिपति—**किमर्थमिति** । महर्षयो मन्त्रद्रष्टारो न तु ये केचिदिच्छयाभिलपिताः ॥ १८१-१८५ ॥

**य आश्रमः प्राक् सनकादिकल्पैः**
**शान्तोर्मिभिः साधुभिरिद्ध आसीत् ।**
**स सांप्रतं संकलितप्रकाम-**
**दुर्वासनालीढमनोभिरारात् ॥ १८६ ॥**
**यत्राश्रमेऽश्रावितरामुदार-**
**मुत्सारितांहः खलु सामगानम् ।**
**तत्राधुना वारवधूपगूढ-**
**तन्त्रीस्वनानन्दतरङ्गितानि ॥ १८७ ॥**

यत्राश्रमेऽश्रान्तसमेधमान-
ब्रह्मप्रमेयोपनिपन्निनादाः ।
तत्राद्य लेख्यादिनिरूप्यमाण-
पदार्थमात्राघटनाप्रपञ्चाः ॥ १८८ ॥
य आश्रमः प्रागनिकेतनो वा
द्रुमाश्रयो वा तृणभूमिको वा ।
स सांप्रतं चित्रवितानरत्न-
गुच्छावलीभाजनभक्तिभागी ॥ १८९ ॥
यत्राशनं कन्दफलोञ्छलुब्धा
वासस्तु कृष्णाजिनवल्कलाद्याः ।
तत्राधुनाऽऽहारविजृम्भितानि
भूपोपभोग्याम्बरसौभगानि ॥ १९० ॥
( कुलकम् )

चतुर्थाश्रमस्य पूर्वापरामवस्थां निरूपयति—य आश्रम इति । एकस्मिन्नहन्येवोपनयनादिसमावर्तनान्तसंस्कारकरणाद् ब्रह्मचारी गृहस्थ इवाभूत्प्रायः सर्वत्र । किं वा ब्रह्मचर्यव्रताभावाद् गृहस्थ एवाभूत् स वराकः । गृहस्थोऽपि चतुष्पदतासंपादनमात्रादित्याश्चर्यम् । अथापि गृहस्थ इति भाक्तव्यवहारोऽस्तु । परं न वानप्रस्थो भिक्षुरिव, न वा भिक्षुर्वानप्रस्थ इव, किं वा स स इव, तदागत इव वा परीक्ष्यते । प्रत्युत गृहस्थ इव, आहोस्विद् गृहस्थ एव वा बहुधानुभूयते । अथवा मठस्थ इति प्रतिपद्यताम्, न क्वापि पुरुषविशेषः प्रत्याख्यातुं पार्यते । एवमपि वानप्रस्थभिक्षुभ्यां किं क्रियते कार्यते वेति पर्यनुयोगो न शाम्यति । साधुभूयिष्ठं हि जगद् भारतं वा । अत आक्रन्द्यते—'तदा मुधावेशविधाकलङ्कैरुन्मील्यते साधुकुलं किमार्याः !' इति । अतएवच संप्रति पुराणेतिहासधर्मशास्त्रेषु वानप्रस्थाभिक्षू संकोच्येते । उद्वेल्लत्यपि साधुसिन्धौ यथोत्तरमनेकधा व्युत्क्रमसंक्रमात्संकोचपथ एव घण्टापथो दरीदृश्यते । सनकादिकल्पैरिति प्राग्यथा—

"सत्त्वं ज्ञानं, तमोऽज्ञानं, रागद्वेषौ रजः स्मृतम् ।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः ॥
तत्र यत् प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत् ।
प्रशान्त इव शुद्धाभं सत्त्वं तदुपधारयेत् ॥
यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः ।
तद्रजोऽप्रतिघं विद्यात् सततं हारि देहिनाम् ॥
यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥'
'त्रयाणामपि चैतेषां गुणानां य फलोदयः ।
अग्रयो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः ॥
वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः ।
धर्मक्रियाऽऽत्मचिन्ता च सात्त्विकं गुणलक्षणम् ॥
आरम्भरुचिता धैर्यमसत्कारपरिग्रहः ।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥
लोभः स्वप्नो धृतिः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता ।
याचिष्णुता प्रमादश्च तामसं गुणलक्षणम् ॥"
(मनु॰ १२ । २६-३३)
'तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथोत्तरम् ॥'
(मनु. १२ । ३८) इति।

'गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥' (गी. १४ । २०)
'मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥' (गी. १४।२५ )इति च।

अर्वाक्तु—'संकलितप्रकामदुर्वासनालीढमनोभिः' इति, "निःस्वो वष्टि शतं, शती दशशतं, लक्षं सहस्राधिपः" इत्येवमादिभिर्व्यक्तम् ॥

**उत्सारितांहः खलु सामगान**मिति प्राग्यथा—

"बृहत्साम तथा साम्नां, गायत्री छन्दसामहम्" (गी. १०।३५)

साम्नां चतुर्दशाधिकाष्टसहस्रसंमितानां मध्ये ईश्वरस्तावकानि कानिचित् पावमान्यानि रथन्तरादीनि सन्ति तेषु बृहत्साम फटाक्षितम्।

**याज्ञवल्क्यो**ऽपि—

'यथाविधानेन पठन्सामगायमविच्युतम्।

सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति॥' (याज्ञ. ३।११२) इति।

एवं गायन्तं त्रायमाणा गायत्र्यपि द्रष्टव्या। या द्विजत्वसंपादिका ब्रह्मप्रतिपादिकापि सांप्रदायिकतैष्णवशैवैः परिहियमाणेव लक्ष्यत इदानीं दौर्भाग्यविजृम्भितैः।

अर्वाक्तु—'तन्त्रीस्वनानंन्दतरङ्गितानि' निदर्शनानि नापेक्षन्ते॥

**उपनिषन्निनादा** इति प्राग्यथा—

'विविधाश्चोपनिषदीरात्मसंसिद्धये श्रुतीः।' (मनु. ६।२९)

'ज्ञेयं चारण्यकमहं यदादित्यादवाप्तवान्।' (याज्ञ. ३।११०)

अर्वाक्तु—'मात्राघटनाप्रपञ्चा' इति सुप्रसिद्धम्॥

**य आश्रम** इति प्राग्यथा—

"आग्नीनात्मनि वैतानान्समारोप्य यथाविधि।

अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः॥

अप्रयत्नः सुखार्थेषु, ब्रह्मचारी, धराशयः।

शरणेष्वश्रमश्चैव, वृक्षमूलनिकेतनः॥" इति (मनु. ६।२५-२६)।

'अनग्निरनिकेतः स्याद् ग्राममन्नार्थमाश्रयेत्।

उपेक्षकोऽशङ्कुसुको मुनिर्भावसमाहितः॥' (मनु. ६।४३)

"अध्यात्मरतिरासीनो निरपेक्षो निरामिषः।

आत्मनैव सहायेन सुखार्थी विचरेदिह॥

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया।

नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥" (मनु. ६।४९-५०)
'क्लृप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान् ।
विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन् ॥' (मनु. ६।५२)
'अलाबुं दारुपात्रं च मृण्मयं वैदलं तथा ।
एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीत् ॥' इति (मनु. ६।५४)।
अर्वाक्तु—'चित्रवितानरत्नगुच्छावलीभाजनभक्तिभागी' दृश्यते ॥
**वल्कलाद्या** इति प्राग्यथा—
"न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ।
न ग्रामजातान्यार्तोऽपि मूलानि च फलानि च ॥
अग्निपक्वाशनो वा स्यात् कालपक्वभुगेव वा ॥
अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोऽपि वा ॥" (मनु. ६।१६-१७)
'पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा ।
कालपक्वैः स्वयंशीर्णैर्वैखानसमते स्थितः ॥' इति (मनु. ६।२१)।
"एककालं चरेद् भैक्षं, न प्रसज्जेत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसंपाते, भिक्षां नित्यं यतिश्चरेत् ॥
अलाभे न विषादी स्याल्लाभे नैव च हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥
अभिपूजितलाभाँस्तु जुगुप्सेतैव सर्वशः ।
अभिपूजितलाभैश्च यतिर्मुक्तोऽपि बध्यते ॥" इति (मनु. ६।५५-५८)
"वसीत चर्म चीरं वा, सायं स्नायात् प्रगे तथा ।
जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च ॥" इति (मनु. ६।६)
'कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥' इति (मनु. ६।४४)।

'आहारविजृम्भितानि भूपोपभोग्याम्बरसौभगानि'

इत्यर्वाङ् निरीक्षणीयम् ॥ १८६-१९० ॥

इत्याद्ययोग्यव्यवहारवृत्ती-
रुन्मूल्य संमील्य च भोगतृष्णाम् ।
अग्रे चतुर्थाश्रममोक्षदेवो
यथा न कुप्येत तथा यतध्वम् ॥ १९१ ॥

चेद् भुक्तितृष्णा न गतावसानं ।
न वाऽऽगता मुक्तिरसायनश्रीः ।
तदा सुधावेषविधाकलङ्कै-
रुन्मील्यते साधुकुलं किमार्याः ! ॥ १९२ ॥

चेत्स्वेच्छया हन्त न दीक्षिता भो !
न भोगवैरस्यविशेषिता वा ।
तदागमादिष्टविधिप्रयोगै-
रात्मानमुद्धृत्य शिवं श्रयन्ताम् ॥ १९३ ॥

न चेच्छया कर्मनिरादरेण
न वा यथेष्टाचरणेन भद्राः ! ।
अत्याश्रमित्वं सुशकं हि लब्धुं
किं वेषभङ्ग्या शुनको मृगेन्द्रः ॥ १९४ ॥

अयोग्यसंयोगवशेन शान्ता
यथोदिता संकरवर्णभाजः ।
तथा चतुर्थाश्रमभञ्जनेन
न साधवः क्वापि मताः श्रुता वा ॥ १९५ ॥

उपसंहरति—इत्यादीति । उन्मूलनसंमीलने अभ्यासवैराग्यसंस्कृतेन मनसैवोपपद्येते । 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।' इत्युक्तेः ॥

असामञ्जस्यमुपक्षिपति–**चेदिति** । तथाच स्मर्यते—

'यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिः ॥' ( शातातप. ६० )

'न शब्दशास्त्राभिरतस्य मोक्षो
न चापि लोकग्रहणे रतस्य ।
न भोजनाच्छादनतत्परस्य
न चापि रम्यावसथप्रियस्य ॥' ( वशिष्ठ.१०।१४ )

**मुक्तिरसायनश्रीरिति** । तथाच पठ्यते–

'सालोक्यं चापि सारूप्यं सार्ष्ट्यं सायुज्यमेव च ।
कैवल्यं चेति तां विद्धि मुक्तिं राघव ! पञ्चधा ॥' इति ।

'सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥' इति च ॥

व्यवस्थापयति–**चेत्स्वेच्छयेति** । भोः ! चेत् स्वेच्छया भवन्तो न दीक्षिताः हन्त, इतो न वा भोगवैरस्यविशेषिताः संजाताः । किं वा भ्रान्त्या बलाद्वा दीक्षिताः । तदा शास्त्रादिष्टप्रायश्चित्तानुष्ठानेनात्मानं शोधयित्वा कल्याणं लभन्ताम् । 'तदा हि शास्त्रोक्तविधानकेन स्वपूर्वसंस्थां द्रुतमाश्रयध्वम्' इति वोत्तरार्धम् ।

अथ प्रायश्चित्तम् । तच्च आस्तिकेन श्रद्धयाभ्यर्थ्यमानया परिषदाऽऽदेश्यते, अपरथा ह्यादिष्टं कुञ्जरशौचसब्रह्मचारि स्यात् । शास्त्रेऽधीती ह्यनधीती वा "आः कष्टम् एवमजनिष्ट, नह्येवं पुनः कुर्याम्" इत्येवं पश्चात्तापपरितप्त एवानुरूपेण प्रायश्चित्तेन संशुद्ध्यति, नान्यः । प्रतिषिद्धकर्मा हि–

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां, मानसैरन्त्यजातिताम् ॥" (मनु. १२ । ९)

'हन्त तं इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।

यथा च मरणं प्राप्य आत्मा भवति गौतम ! ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥' ( कठो० २।२।६-७ )

इत्येवं बोध्यते । पर्षत्तु—

"चत्वारो वेदधर्मज्ञाः पर्षत्, त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्या,देकोवाध्यात्मवित्तमः ॥" ( याज्ञ० ११६ )
"मानवास्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥
अनाम्नातेषु धर्मेषु कथं स्यादिति चेद् भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ १०८ ॥
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १०९ ॥
दशावरा वा परिषद्, यं धर्मं परिकल्पयेत् ।
त्र्यवरा वापि वृत्तस्था, तं धर्मं न विचालयेत् ॥ ११० ॥
त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा ॥ १११ ॥
ऋग्वेदविद् यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥ ११२ ॥
एकोऽपि वेदविद् धर्मं यं व्यवस्येद् द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥ ११३ ॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ११४ ॥
यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः ।
तत्पापं शतधा भूत्वा तद् वक्तृननुगच्छति ॥ ११५ ॥" (मनु० १२ अ०)

इत्येवंप्रकारावधेया । इदानीं तु प्रायो यत्र कुत्रापि प्रधानपुरुषः

स्वाभिमतैर्व्यक्तिविशेषैः परिषदं संचिनुते । तत्र विप्रतिपत्त्यां स प्रधानमात्मानमेवाध्यात्मवित्तमं मन्यते । अहो स्वार्थविजृम्भितम् ।

अथ प्रतिकूलायां दीक्षायां सत्यां दीक्षितो यथासंभवं विधिना झटिति तां परित्यज्य पूर्ववर्णं प्रविशेत् । सोऽयं प्रतिकूलदीक्षापरित्यागः आगमप्रसिद्धोऽरिमन्त्रत्याग इवोपपद्यते । काशिपुकाश्यां १९८१ अस्या धिंश्या वैक्रमशताब्द्याः आरम्भे न्यायतन्त्रे गदाधरभट्टाचार्य इव व्याकरणेऽभिनवपरिष्काराणां कर्ता काशीनाथशास्त्री पैत्र्यमपि माध्वसंप्रदायं परित्यज्य श्रौतस्मार्तपथं शिश्रिय इति विद्वत्सु विदितम् । अयमेव काशीनाथशास्त्री राजारामशास्त्रिणो यतीन्द्रस्य गुरुः, बालशास्त्रिणः सोमयाजिनः परमगुरुः, गङ्गाधरशास्त्रिशिवकुमारमिश्रदामोदरशास्त्रिप्रमुखाणां महामहोपाध्यायधुरंधराणां विद्वन्मूर्धन्यानां परमेष्ठिगुरुरिति तदीयविद्यावंशसूत्रणम् । बालशास्त्रिणो जीवितवृत्तान्ते—

'यच्छात्रैरधुनापि सर्वविषये विद्याः प्रतिष्ठापिताः'

इति सर्वतन्त्रस्वतन्त्रस्य गङ्गाधरशास्त्रिण उक्तिर्वस्तुतः श्रद्धेया ।

अथ वर्णबन्धूनामिदानीं हिन्दुपदेनापि व्यपदेष्टुमारभ्यमाणानां सति प्रायश्चित्तप्रसङ्गे मनुयाज्ञवल्क्यस्मृती अलम् । यत्तु कतिपये विविधाशाप्यायितमानसा लघु लघुतरं लघुतमं च प्रायश्चित्तविधानमाहिण्डमानाः—

"ज्ञानतोऽज्ञानतो वापि भक्त्याऽभक्त्यापि वा कृतम् ।
गङ्गास्नानं सर्वविधं सर्वपापप्रणाशनम् ॥ १ ॥'

'चान्द्रायणसहस्रैस्तु यश्चरेत् कायशोधनम् ।
पिबेद् यश्चापि गङ्गाम्भः, समौ स्यातां न वासमौ ॥ २ ॥'

'भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात् तद्वत् सर्वपापैः प्रमुच्यते ॥ ३ ॥'

'पुण्यक्षेत्राभिगमनं सर्वपापप्रणाशनम् ।'

'देवताभ्यर्चनं पुंसामशेषाघविनाशनम् ॥ ४ ॥'' (इति विष्णुपु.)

'स्नानमात्रेण गङ्गायाः पापं ब्रह्मवधोद्भवम् ।
दुराधर्षं कथं याति—चिन्तयेद् यो वदेदपि ॥ १ ॥
तस्याहं प्रवदे पापं ब्रह्मकोटिवधोद्भवम् ।'
स्तुतिवादमिमं मत्वा कुम्भीपाकेषु जायते ॥ २ ॥
आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः ।'' (इति भविष्यपुराणम्)

एवंप्रायं शुद्धिव्यवस्थालेखं प्रकाशयन्ते । तत्र बहुत्र संप्रत्यपि राज्ञः समाजस्य च शासनमपि प्रत्यवतिष्ठते, क्वापितु तादृक्नैव विपाकेन । वस्तुत एवंजातीयकं पौराणं वचनं हि—'अपि मां पावयेत् साध्वी स्नात्वेतीच्छति जाह्नवी' इत्यादिवद् गङ्गास्नानादिकस्य प्राशस्त्यमात्रतात्पर्यकम् । अन्यथा मन्वादिभिः स्मृतस्य पातकोपपातकप्रकरणस्थस्य प्रायश्चित्तजातस्य स्फुटं वैयर्थ्यम् । उक्तं च—

'अर्के (के) चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥' (श्लोकवा.र्ति.)

यदपि भविष्यवचनेनार्थवादवदनमात्रात्कुम्भीपाकादियातना स्मार्यते सापि तत्सतीर्थ्येन—

'यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ॥'

इत्यनेन वार्यत एव । वस्तुतस्तु वैदिकसमाचारसिद्धोऽर्थवादोऽप्यनवसरे न निरस्तो मन्तव्य इति व्यक्तं धर्माधर्मतत्त्वविदाम् ।

अथ युरोपेभ्य इममार्यावर्तं प्रत्यागतानां तत्र स्वधर्मेण कालं यापयतां शूद्राणां प्रायश्चित्तं नास्ति, सत्यां ग्लानौ गङ्गास्नानादिना शुद्धिः । क्षत्रियवैश्यानां तु लघु प्रायश्चित्तम् । ब्राह्मणानां तु गुरु । तच्च तत्तद्देशिकविद्वत्परिषदाऽवधारणीयम् । 'अगदंकारो हि गदिनं परीक्ष्यैव चिकित्सत' इति तात्पर्यम् । ये पुनः—

"यत्र पानमपेयस्य देशे,ऽभक्ष्यस्य भक्षणम् ।
अगम्यागामिता यत्र, तं देशं परिवर्जयेत् ॥"

इति शासनस्य मनसा वाचा कर्मणा देशे विदेशे वा प्रतिपालनं कुर्वते त एव प्रत्यवायप्रसङ्गे प्रायश्चित्ताधिकारिणो नह्यपरे प्राज्ञंमन्या इति श्रुतिस्मृतिचक्षुषी उन्मील्य परीक्षणीयम् ।

अपेयं हि—

"सुरा वै मलमन्नानां, पाप्मा च मलमश्नुते ।
तस्माद् ब्राह्मणराजन्यौ न वैश्यश्च सुरां पिबेत् ॥
गौडी, पैष्टी च, माध्वी च, विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥" इत्यादि ।
(मनु. ११।९३-९४)

मद्यस्य पानं तु दूरे तदाघ्राणमपि निषिद्धम् । एवं मांसमैथुने ॥

अन्यदाह—**न चेच्छ्रयेति** । नह्यलौकिकाचरणव्याजेन अलौकिको भवितुमर्हति । प्रत्युत—

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति, न सुखं, न परां गतिम् ॥" (भ. गी. १६।२३)

एवमाद्यनिष्टं प्रसजति । **किं वेषभङ्ग्या शुनको मृगेन्द्र** इति । उक्तं हि—

'आबद्धकृत्रिमसटाजटिलांसभित्ति-
रारोपितो मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुम्भतटपाटनलम्पटस्य,
नादं करिष्यति कथं हरिणाधिपस्य ॥' इति ॥

अन्यदाह—**अयोग्येति** । न ह्यनुलोमप्रतिलोमजातय इव साधुजातयः संगच्छन्त इति विवेक्तव्यम् । द्विजातिबन्धूनां शूद्राणां स्त्रीणां च वैदिकं पारिव्राज्यमाकरग्रन्थतो नोपलभ्यते । एतेषां हि वैराग्योन्मुख-

तायां संजातायां त्रिविक्रेषु तीर्थेषु जङ्गलेषु चानुकूलेषु यमनियमादितपोभिर्निःश्रेयसार्जनं तत्र तत्र पुराणेतिहासादिषु सुप्रसिद्धमेव। यथा खलु गान्धारीधृतराष्ट्रकुन्तीविदुरप्रभृतीनाम्। यत्र क्वापि स्त्रीषु ब्रह्मवादिनी वा योगिनी वा संन्यासिनी वा श्रूयते तत्र तु कारणान्तराणि द्रष्टव्यानि। जैनबौद्धादिषु तु स्त्रीणां परिव्रज्या सुप्रतीतैव। तत एव—'कुमारः श्रमणादिभिः' (२।१।७०) इति पाणिनिना सूत्रितम्। श्रमणा बुद्धभिक्षुकी। क्वचित्तु श्रमणीत्यपि।

आर्यावर्तेऽत्र नानाविधा लिङ्गिनो लिङ्गिन्यश्च दृश्यन्ते। पुराणे हि सर्गादिनिरूपणमुखेन वैदिक्युपासनैव विस्तारिता, तदनुकूले च ज्ञानकर्मणी। तत्र शिखासूत्रादिवत्किंचन मौलिकं लिङ्गमप्यपेक्ष्यते प्रवृत्तस्य निवृत्तस्य वा, धूमादिरिव धूमध्वजस्य। प्रवृत्तावपि निवृत्तिरिति विश्वजनीनः पन्था गीताकर्मयोग एव। एतल्लिङ्गं गीतान्तरेष्वपि दृश्यते। बहोः कालाद् दार्शनिककथकाभावादेष कर्मयोगः पुराणतोऽप्यवसातुमशक्यः। पुराणं तु वैदिकपदार्थोपबृंहणेन पञ्चमो वेदो भवदपि स्वपञ्चमलक्षणे वंश्यानुचरिते बहुधा विपर्यासं प्राप्नुवद् बहुत्र शिष्टलक्षणानि क्लिश्नाति। एवं मनुयाज्ञवल्क्यादिभिन्नाः स्मृतयोऽपि बहुत्र ऋषीणां स्मरणानि रुजन्ति। अत उपाङ्गेष्वङ्गद्वितयं विशीर्णमिव सीदति। पुराणस्मृतिगहने ह्युपास्तिप्रस्तावे ह्युपासकवर्गाणामन्योन्यममूलको यत्किंचिन्मूलको वा लिङ्गपरिच्छेदादिसमेधितः संघर्षो भारतभूहर्षकर्षको व्यजनिष्ट। ततो हि—

'पाञ्चरात्रं पाशुपतं कापालं वाममार्हतम्।
एवंविधानि चान्यानि मोहनार्थानि तानि तु॥' इति।
'पाञ्चरात्रं भागवतं तथा वैखानसाभिधम्।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान्॥' इति।
'अथांशुः सात्त्वतो नाम विष्णुभक्तः प्रतापवान्।

स नारदस्य वचनाद् वासुदेवार्चने रतः ॥
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ।
तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम् ॥' इति ।
'तेनोक्तं सात्त्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥' इति च ।

इत्थंजातीयकाः श्लोका यत्र तत्र दृश्यन्ते । इह कूर्मपुराणस्य २४ चतुर्विंशाध्यायांशः, पद्मपुराणस्योत्तरखण्डस्य च २३५-२३६ पञ्चत्रिंशता षट्त्रिंशता चाधिको द्विशततमोऽध्यायश्च मूलम् । एवमन्यत्रापि स्मृतिपुराणेष्वन्वेषणीयम् । तदिदं सर्वं चातुर्वर्ण्यस्य चातुराश्रम्यस्य परिरक्षणार्थं वेदविरोधाधिकरणन्यायेन यथायथं मीमांसित्वा संगमनीयम् । भवति चात्रोपसंहारः—

'इमानि शैवान्युत वैष्णवानि
वर्त्मानि हेवाकितयाऽऽश्रयध्वम् ।
न शोभते केवलमत्र यातैः
स वैदिकाचारविरोध एव ॥' ॥ १९१-१९५ ॥

**प्रक्रस्यतामागमसंश्रयेण**
**व्यासायितुं वा सनकायितुं वा ।**
**अलं बहूक्त्या सकलावतंसा !**
**एकः स ईशः शरणं जनानाम् ॥ १९६ ॥**

**इति भिक्षुदिक् ।**

पार्यन्तिकमाह—**प्रक्रस्यतामिति** । व्यासायितुमिति प्रवृत्तिलक्षणधर्मदृष्ट्या । सनकायितुमिति निवृत्तिलक्षणधर्मदृष्ट्या । इदमप्याकलनीयम्—

'अविद्वेषेण सर्वेषां कुर्वन् कर्म यथाकुलम् ।
सभाजयन् महेशानं विन्देन्निःश्रेयसं ध्रुवम् ॥' इति ।
'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।

कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥'(गी. १६।२१)इति च।

"यो देवेष्वधिदेव एक आसीत्,

कस्मै देवाय हविषा विधेम ॥" (ऋ. सं. १० मं. १० अ. १२१ सू.)

॥ १९६ ॥

इति भिक्ष्वाश्रमीया वेददृष्टिः।

( इति चातुराश्रम्यभागः )

इत्यादरेण बहुधा बहुधामगुक्ताः
स्वाराज्यशोधनरता नरतापमुक्ताः।
शिक्षा महागमरसामरसारमुक्ताः
केनापि लोकसुधियाऽसुधियासमुक्ताः॥१९७॥
प्रत्याशमाशु भवताद्भवतापहृत्सं-
सद्भारताभरणबन्धुरसंगतेन।
उद्भासिता च महता महतायनेन
सद्भारता भरणबन्धुरसं गतेन॥ १९८॥

शिक्षां समर्पयति—इत्यादरेणेति। 'बहुधामगुक्' इति क्रिया-विशेषणम्। लोकसुधियेति कर्तारमाक्षिपति। तथाच पठ्यते—

"व्याकरणं रामभजाद्
दर्शनहृदयानि तातचरणेभ्यः।
गणितं च बापुदेवा-
दधीत्य संचार्य लोकेषु॥ १॥
लब्ध्वा महामहोपा-
ध्यायपदं भारतेश्वराद् विबुधाद्।
दुर्गाप्रसादशर्मा
भजति महेशं द्विवेदाङ्कः॥ २॥" इति।

प्रत्याशमिति। संसदिति विशेष्यपदम्॥ १९७-१९८॥

कालिकी दशा—

विज्ञा! व्याकृतिताडनेन शतधा
वेदोऽर्थतः पात्यते
तरगोऽस्याः स्मृतयोऽवसन्नतनवोऽ-
ङ्गोपाङ्गमुद्भ्राम्यति।
काको हंसति हंस एति बकतां

वर्णोऽन्यवर्णायते
पीत्वा मोहमयीं प्रमादमदिरा-
मुन्मत्तभूतं जगत् ॥ १९९ ॥

विज्ञा इति । 'पीत्वा मोहमयीमिति चतुर्थः पादो भर्तृहरि-निरूपितः ॥ १९९ ॥

अथापीदमस्तु—

सन्तः सन्तु प्रसन्ना निजकृतिपू-
त्कर्षसीमानमाप्ता
वेदाङ्गोपाङ्गलक्ष्मीर्लुलतु मतिमता-
मास्यरङ्गान्तरेषु ।
निर्वैरो भक्तियोगः प्रसरतु कृतिना-
मैश्वरे ध्येयकाये
जीव्यात् सम्राट् पितेव प्रकृतिहितरतो
भारतं भातु भूयः ॥ २०० ॥

सन्त इति वृद्धब्राह्मणस्याशीर्वादः ॥

अथात्र सप्तपूरणी—

## ( १ ) तत्राग्निष्टोम-सोमयज्ञः—

# अथाग्निष्टोमालेख्यसूचीपत्रिका—

प्राचीनवंशमण्डपः ( का. श्रौ. सू. ७ अ. १ कं. २०-२२ सू. )
गार्हपत्यः ( का. श्रौ. सू. ४।७।८ )
आहवनीयः ( का. श्रौ. सू. ४।८।१६ )
प्राकृतीवेदिः ( का. श्रौ. सू. २।६।१-१० )–( शतपथब्रा. १ कां. २ अध्या. ३ ब्रा. )
दक्षिणाग्निः ( अन्वाहार्यपचनः )–( का. श्रौ. सू. ४।८।२० )
उत्करः ( का. श्रौ. सू. २।६।१२ )
महावेदिः ( का. श्रौ. सू. ८।३।८-११ )– (शतपथब्रा. ३ कां. ५ अ. १ ब्रा. )
उत्करः ( का. श्रौ. सू. २।६।१२ )
चात्वालः ( का. श्रौ. सू. ८।३।१४ )
उत्तरवेदिः ( का. श्रौ. सू. ५।३।३२-३६ )
यूपः ( का. श्रौ. सू. ६।१।६-३५ )–( शतपथब्रा. ३।६।४ )–( तै. सं. ६ कां. ३ प्र. ३ अनु. )
शामित्रः ( का. श्रौ. सू. ६।४।१४ )
हविर्द्धानमण्डपम् ( का. श्रौ. सू. ८।४।५-२४ )
हविर्द्धाने ( द्वे ) ( का. श्रौ. सू. ८।४।५ )
खरः ( का. श्रौ. सू. ८।५।२६ )
उपरवाः ( का. श्रौ. सू. ८।४।२८ )
आग्नीध्रम् ( का. श्रौ. सू. ८।६।१३ )
मार्जालीयम् ( का. श्रौ. सू. ८।६।२२ )

सदोमण्डपम् ( का. श्रौ. सू. ८।६।१-७ )
औदुम्बरी ( स्थूणा ) ( का. श्रौ. सू. ८।५।३१ )
धिष्ण्यानि ( का. श्रौ. सू. ८।६।१६-२२ )
पृष्ठ्यासूत्रम् ( का. श्रौ. सू. ८।४।२७ )
आसन्दी ( का. श्रौ. सू. ७।८।२७-३४ )
स्नानशाला ( परिवृतम् ) ( का. श्रौ. सू. ७।१।२५, ७।२।७ )
पत्नीशाला ( परिवृतम् ) ( का. श्रौ. सू. ७।१।२५, ७।२।२१ )
अतिरिक्तपदार्थास्तु श्रौतसूत्रभाष्यपद्धतिभ्योऽवसेयाः ॥

## अत्रेदमप्याकलनीयम्—

अस्य कालः—'वसन्तेऽग्निष्टोमः' (का. श्रौ. सू. ७।१।४) इति। अयमेकाहः अहीनः सत्रमिति भेदात् त्रिविधः। तत्र एकेन अह्ना साध्यसुत्याकर्मकः (सोमलताकण्डनम्) । एकाहः। द्वित्रैरहोभिरित्येवं द्वादशभिरहोभिः साध्यसुत्याकर्मकः (सोमलताकण्डनम्) अहीनः। पक्षं मासं संवत्सरं वेत्येवं सहस्रवर्षपर्यन्तं योऽनुष्ठीयते तत् सत्रम्। इह संवत्सरशब्दो दिनपरोऽपि (मी. द. ६ अ. ७ पा. १३ अ.धि. ३१-४० सू.)। सर्वेषां सोमसंस्थानां यज्ञानां प्रकृतिरेषोऽग्निष्टोमः। तथाच श्रुतिः—'अग्निष्टोममग्र आहरन्ति। अग्निमुखं वा अग्निष्टोमः। यज्ञमुखमेवाक्रम्य सर्वमाक्रमते।' (तै. सं. १ कां. ८ प्रपा.) इति। अग्निष्टोममन्त्राः शुक्लयजुःसंहितायां चतुर्थाध्यायमारभ्याष्टमाध्यायस्य द्वात्रिंशत्कण्डिकापर्यन्तमाम्नाताः। एतस्याङ्गमग्नीषोमीयपशुयागः। आलभनपदार्थः—(तै. सं. ६ कां.१ प्रपा. ११ अनु.)। आलम्भे विशेषः—(शु. य. सं. २३।१६)। 'अशुद्धमिति चेन्न, शब्दात्' (वेदा. द. ३।१।२५) इति ब्रह्मसूत्रभाष्यस्था रामानुजाचार्याणां निम्बार्काचार्यशिष्यश्रीनिवासाचार्याणां मध्वाचार्याणां लेखाश्च। सोमपात्राणि द्विविधानि, ग्रहाः स्थाल्यश्च। तत्र दारुमया ग्रहाः, मृन्मय्यः स्थाल्यः। अथर्त्विजः—'षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्ट्रग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतॄन् वृणीते' (का. श्रौ. सू. ७।१।६) इत्येवमादि॥

## अत्रैवं रूपकम्—

"पुरुषो वै यज्ञः पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुतऽएष वै तायमानो यावानेव पुरुषस्तावान् विधीयते तस्मात् पुरुषो यज्ञः॥ १॥ शिर एवास्य हविर्धानम्। वैष्णवं देवतयाथ, यदस्मिन्त्सोमो भवति हविर्वै देवानाꣳ सोमस्तस्माद्धविर्धानं नाम॥ २॥ मुखमेवास्याहवनीयः।

स यदाहवनीये जुहोति यथा मुखऽआसिञ्चेदेवं तत् ॥ ३ ॥ स्तुप एवास्य यूपः बाहूऽएवास्याग्नीध्रीयश्च मार्जालीयश्च ॥ ४ ॥ उदरमेवास्य सदः—" इत्यादि । ( शत. ब्रा. ३।४।३ ) ॥

अहो ! इदानीं कतिपये महेच्छा आधानादि संकोचयन्तोऽनग्नि यजमानमग्निष्टोमासन्नव्ययपरिक्लृप्त्या विष्णुरुद्रादिपौराणिकयज्ञप्रपञ्चेन प्रतारयन्तीत्याश्चर्यम् । एवं स्मार्तेन श्रौतेन वा आधानेनापि वराकेण नष्टम् । स्वेच्छया तु जितमिति किं क्रियताम् ॥

इत्यग्निष्टोम-सोमयज्ञादिक् ॥ १ ॥

# ( २ ) अथ गोत्रप्रवराः—

श्रौतस्मार्तविशुद्धीनां प्रतिष्ठानां च कारणम् ।
गोत्रप्रवरविज्ञानं दिङ्मात्रमिह दर्श्यते ॥ २ ॥

**गोत्राणि** । तत्र **भृगवः** सप्त—

( १ ) **वत्साः**—(मार्कण्डेयाः, माण्डूकेयाः, इत्यादयः शतद्वयाधिकाः ) ।

एषां प्रवराः—भार्गव, च्यावन, आप्नवान, और्व, जामदग्न्य, इति पञ्च । भार्गव, और्व, जामदग्न्य, इति यत्रो वा । भार्गव, च्यावन, आप्नवान, इति त्रयो वा ।

( २ ) **विदाः**—( शैलाः, अवटाः, इत्यादयो विंशत्यधिकाः ) ।

एषाम्—भार्गव, च्यावन, आप्नवान, और्व, वैद, इति पञ्च । भार्गव, और्व, जामदग्न्य, इति त्रयो वा । **एते जामदग्न्यभृगवः** ॥

( ३ ) **आर्ष्टिषेणाः**–( नैर्ऋतयः, याम्यायणाः, इत्यादयो विंशत्यधिकाः ) ।

एषाम्—भार्गव, च्यावन, आप्नवान, आर्ष्टिषेण, अनूप, इति पञ्च । भार्गव, आर्ष्टिषेण, अनूप, इति त्रयो वा ।

( ४ ) **यस्काः**–( मौनाः, मूकाः, इत्यादयस्त्रिपञ्चाशदधिकाः ) ।

एषाम्—भार्गव, वैतहव्य, सावेतस, इति त्रयः ।

( ५ ) **मित्त्रयुवः**–( रौक्ष्यायनाः, सापिण्डिनाः, इत्यादयस्त्रिंशदधिकाः ) ।

एषाम्—भार्गव, वाध्र्यश्व, दैवोदास, इति त्रयः । भार्गव, च्यावन, दैवोदास, इति त्रयो वा । वाध्र्यश्व इत्येको वा ।

( ६ ) **वैन्याः**-( पार्थाः, बाष्कलाः, श्वेताः ) ।

एषाम्-भार्गव, वैन्य, पार्थ, इति त्रयः ।

( ७ ) **शुनकाः**-(गार्त्समदाः, यज्ञपतयः, इत्यादयः सप्तदशाधिकाः) ।

एषाम्—शौनक, इत्येकः । गार्त्समद, इत्येको वा । भार्गव, गार्त्समद, इति द्वौ वा । भार्गव, शौनहोत्र, गार्त्समद, इति त्रयो वा । **एते केवलभृगवः ॥ इति भृगुगणाः ॥**

**आङ्गिरसः**—

( १ ) **आयास्याः**—( श्रोणिवेधाः, मूढरथाः, इत्यादयोऽष्टादशाधिकाः ) ।

एषाम्-आङ्गिरस, आयास्य, गौतम, इति त्रयः ।

( २ ) **शारद्वताः**-(अभिजिताः, रौहिण्याः, इत्यादयः सप्तत्यधिकाः) ।

एषाम्-आङ्गिरस, गौतम, शारद्वत, इति त्रयः ।

( ३ ) **कौमण्डाः**-(मामन्थरेषणाः, मासुराक्षाः, इत्यादयो दशाधिकाः) ।

एषाम्-आङ्गिरस, औतथ्य, काक्षीवत, गौतम, कौमण्ड, इति पञ्च । आङ्गिरस, औतथ्य, गौतम, औशिज, काक्षीवत, इति पञ्च वा । आङ्गिरस, आयास्य, औशिज, गौतम, काक्षीवत, इति पञ्च वा । आङ्गिरस, औशिज, काक्षीवत, इति त्रयो वा । आङ्गिरस, औतथ्य, काक्षीवत, इति त्रयो वा । औतथ्य, गौतम, कौमण्ड, इति त्रयो वा ।

( ४ ) **दीर्घतमसः**-( गौतमाः ) ।

एषाम्-आङ्गिरस, औतथ्य, काक्षीवत, गौतम, दैर्घतमस, इति पञ्च । आङ्गिरस, औतथ्य, दैर्घतमस, इति त्रयो वा ।

(५) **करेणुपालयः**–(वास्तव्याः, श्वेतीयाः, इत्यादयःसप्ताधिकाः)।
एषाम्–आङ्गिरस, गौतम, कारेणुपाल, इति त्रयः।

(६) **वामदेवाः**।
एषाम्–आङ्गिरस, वामदेव्य, गौतम, इति त्रयः। आङ्गिरस, वामदेव्य, बार्हदुक्थ, इति त्रयो वा।

(७) **औशनसाः**–(दिश्याः, प्रशस्ताः, इत्यादयो नवाधिकाः)।
एषाम्–आङ्गिरस, गौतम, औशनस, इति त्रयः।

(८) **रहूगणाः**।
एषाम्–आङ्गिरस, राहूगण, गौतम, इति त्रयः।

(९) **सोमराजकाः**।
एषाम्–आङ्गिरस, सौमराज्य, गौतम, इति त्रयः।

(१०) **बृहदुक्थाः**–
एषाम्–आङ्गिरस, बार्हदुक्थ, गौतम, इति त्रयः।

**इति गौतमाङ्गिरसाः॥**

(११) **भरद्वाजाः**–(क्षाम्यायणाः, देवाश्वाः इत्यादयः षष्ट्युत्तरशताधिकाः)।
एषाम्–आङ्गिरस, बार्हस्पत्य, भारद्वाज, इति त्रयः।

(१२) **गर्गाः**–(साम्भरायणाः, सखीनयः, इत्यादयः पञ्चाशदधिकाः)।
एषाम्–आङ्गिरस, बार्हस्पत्य, भारद्वाज, शैन्य, गार्ग्य, इति पञ्च। आङ्गिरस, शैन्य, गार्ग्य, इति त्रयो वा। अन्त्ययोर्व्यत्ययो वा। भारद्वाज, गार्ग्य, शैन्य, इति त्रयो वा।

(१३) **ऋक्षाः**–(रौक्षायणाः, कपिलाः, इत्यादयो नवाधिकाः)।
एषाम्–आङ्गिरस, बार्हस्पत्य, भारद्वाज, वान्दन, मातवचस,

इति पञ्च । आङ्गिरस, वान्दन, मातचवस, इति त्रयो वा ।

( १४ ) **कपयः**–( स्वस्तितरयः, दण्डिनः, इत्यादयः पञ्चविंश-
त्यधिकाः ) ।

एषाम्–आङ्गिरस, आमहय्य, औरक्षय्य, इति त्रयः ।

**इति भारद्वाजाङ्गिरसाः ॥**

( १५ ) **हरिताः**–( सौभगाः, नैय्यगवाः, इत्यादयो द्वात्रिंशद-
धिकाः ) ।

एषाम्–आङ्गिरस, आम्बरीष, यौवनाश्व, इति त्रयः । आद्यो
मान्धाता वा ।

( १६ ) **कुत्साः** ।

(एषाम्–आङ्गिरस, मान्धात्र, कौत्स, इति त्रयः) ।

( १७ ) **कण्वाः**–( औपमर्कटाः, वाष्कलायनाः, इत्यादय एक-
विंशत्यधिकाः ) ।

एषाम्–आङ्गिरस, आजमीढ, काण्व, इति त्रयः । आङ्गिरस,
घौर, काण्व, इति त्रयो वा ।

( १८ ) **रथीतराः**–( हस्तिदाः, नैतिरक्षयः, इत्यादयश्चतुर्द-
शाधिकाः ) ।

एषाम्—आङ्गिरस, वैरूप, रथीतर, इति त्रयः । आङ्गिरस,
वैरूप, पार्षदश्व, इति त्रयो वा । अष्टादंष्ट्र, वैरूप,
पार्षदश्व, इति त्रयो वा । अन्त्ययोर्व्यत्ययो वा ।

( १९ ) **विष्णुवृद्धाः**–( शठाः, मरणाः, इत्यादयः पञ्चविंश-
त्यधिकाः ) ।

एषाम्–आङ्गिरस, पौरुकुत्स्य, त्रासदस्यव, इति त्रयः ।

( २० ) **मुद्गलाः**–( सातमुग्रियः, हिरण्यस्तम्बयः, इत्यादयोऽष्टा-
दशाधिकाः ) ।

एषाम्—आङ्गिरस, भार्म्याश्व, मौद्गल्य, इति त्रयः । आद्य-
स्ताद्‌र्यो वा । आङ्गिरस, तार्क्ष्य, मौद्गल्य इति वा ।

**इति केवलाङ्गिरसाः ॥**

**अत्रयः—**

( १ ) **अत्रयः**–( भूरयः, छान्दयः, इत्यादयश्चतुर्नवत्यधिकाः ) ।
एषाम्—आत्रेय, आर्चनानस, श्यावाश्व, इति त्रयः ।

( २ ) **गविष्ठिराः**–( दक्षयः, भलन्दनाः, इत्यादयश्चतुर्विंशत्य-
धिकाः ) ।
एषाम्—आत्रेय, आर्चनानस, गविष्ठिर, इति त्रयः । आत्रेय,
गविष्ठिर, पौर्वातिथ, इति त्रयो वा ।

( ३ ) **वाद्भुतकाः** ।
एषाम्—आत्रेय, आर्चनानस, वाद्भुतक, इति त्रयः ।

( ४ ) **मुद्गलाः**–( शालिसन्धयः, अर्णवाः, इत्यादयो दशावराः ) ।
एषाम्—आत्रेय, आर्चनानस, पौर्वातिथ, इति त्रयः ।

**विश्वामित्राः—**

( १ ) **कुशिकाः**–(पर्णजङ्घाः,वारक्याः, इत्यादयः सप्तत्यधिकाः)।
एषाम्—वैश्वामित्र, देवरात, औदल, इति त्रयः ।

( २ ) **लोहिताः**–( कुडक्याः, चाक्रवर्णायनाः, इत्यादयः
पञ्चाधिकाः ) ।
एषाम्—वैश्वामित्र, आष्टक, लौहित, इति त्रयः । अन्त्ययो-
र्व्यत्ययो वा । वैश्वामित्र, माधुच्छन्दस, आष्टक, इति
त्रयो वा । वैश्वामित्र, आष्टक, इति द्वौ वा ।

( ३ ) **रौक्षकाः** ।
एषाम्—वैश्वामित्र, गाथिन, रैवण, इति त्रयः । वैश्वामित्र,
रौक्षक, रैवण, इति त्रयो वा ।

(४) **कामकायनाः**–(देवश्रवसः,देवतरसाः इत्यादयः पञ्चावराः)।

एषाम्–वैश्वामित्र, देवश्रवस, देवतरस, इति त्रयः।

(५) **अजाः**।

एषाम्–वैश्वामित्र, माधुच्छन्दस, आज, इति त्रयः।

(६) **कताः**–(औदुम्बरयः, शैशिरयः, इत्यादयो विंशत्यधिकाः)।

एषाम्–वैश्वामित्र, कात्य, आत्कील, इति त्रयः।

(७) **धनञ्जयाः**–( पार्थिवाः, बन्धुलाः, इत्यादयः सप्तावराः )।

एषाम्–वैश्वामित्र, माधुच्छन्दस, धानञ्जय, इति त्रयः। वैश्वामित्र, माधुच्छन्दस, आघमर्षण, इति त्रयो वा।

(८) **अघमर्षणाः**।

एषाम्–वैश्वामित्र, आघमर्षण, कौशिक, इति त्रयः।

(९) **पूरणाः**।

एषाम्–वैश्वामित्र, पूरण, इति द्वौ। वैश्वामित्र, देवरात, पौरण, इति त्रयो वा।

(१०) **इन्द्रकौशिकाः**।

एषाम्–वैश्वामित्र, कौशिक, इति द्वौ ॥

**कश्यपाः**–

(१) **कश्यपाः**।

एषाम्–काश्यप, वत्सार, असित, इति त्रयः।

(२) **निध्रुवाः**–(अष्टाङ्गिरस, इत्यादयश्चत्वारिंशदधिकशतावराः)।

एषाम्–काश्यप, वत्सार, नैध्रुव, इति त्रयः।

(३) **रेभाः**।

एषाम्–काश्यप, वत्सार, रैभ्य, इति त्रयः।

(४) **शण्डिलाः**–(कोहलाः, उदमेधाः, इत्यादयः पष्ठ्यवराः)।

एषाम्–काश्यप, वत्सार, शाण्डिल्य, इति त्रयः। अन्त्यस्थाने

देवलो वा । असितो वा । काश्यप, असित, देवल, इति त्रयो वा । अन्त्ययोर्व्यत्ययो वा । देवल, असित, इति द्वौ वा ॥

**वसिष्ठाः—**

(१) **वसिष्ठाः**—(वैतालकवयः, रकयः, इत्यादयः पष्ठ्यधिकाः)।

एषाम्—वासिष्ठ, इन्द्रप्रमद, आभरद्वसु, इति त्रयः । वासिष्ठ, इत्येको वा ।

( २ ) **कुण्डिनाः**—( लोहितायनाः, गुग्गुलयः, इत्यादयः पञ्चविंशत्यवराः ) ।

एषाम्—वासिष्ठ, मैत्रावरुण, कौण्डिन्य, इति त्रयः ।

( ३ ) **उपमन्यवः**—( औदलयः, माण्डलेखयः, इत्यादयः सप्तत्यवराः ) ।

एषाम्—वासिष्ठ, इन्द्रप्रमद, आभरद्वसु, इति त्रयः । आभरद्वसव्य, इति पाठान्तरम् । वासिष्ठ, आभरद्वसु, इन्द्रप्रमद, इति वा । आद्ययोर्व्यत्ययो वा ।

( ४ ) **पराशराः**—(काण्डशयाः, वाजयः, सप्तचत्वारिंशदवराः ) ।

एषाम्—वासिष्ठ, शाक्त्य, पाराशर्य्य, इति त्रयः ॥

**अगस्त्याः—**

( १ ) **इध्मवाहाः**—( विशालाद्याः, स्फालायनाः, इत्यादयः पञ्चाशदधिकाः ) ।

एषाम्—आगस्त्य, दार्ढ्यच्युत, इध्मवाह, इति त्रयः । आगस्त्य, इत्येको वा ।

( २ ) **साम्भवाहाः** ।

एषाम्—आगस्त्य, दार्ढ्यच्युत, साम्भवाह, इति त्रयः ।

( ३ ) **सोमवाहाः** ।

एषाम्—सोमवाहोऽन्त्यः, आद्यौ पूर्वोक्तावेव ।

(४) यज्ञवाहाः ।

एषाम्—यज्ञवाहोऽन्त्यः ।

(५) दर्भवाहाः ।

एषाम्—दर्भवाहोऽन्त्यः ।

(६) सारवाहाः ।

एषाम्—सारवाहोऽन्त्यः ।

(७) अगस्तयः ।

एषाम्—आगस्त्य, माहेन्द्र, मायोभव, इति त्रयः ।

(८) पूर्णमासाः ।

एषाम्—आगस्त्य, पूर्णमास, पारण, इति त्रयः ।

(९) हिमोदकाः ।

एषाम्—आगस्त्य, हैमवर्चि, हैमोदक, इति त्रयः ।

(१०) पाणिकाः ।

एषाम्—आगस्त्य, पैनायक, पाणिक, इति त्रयः ॥

**द्विगोत्राः—**

(१) शौंगशैशिरयः ।

एषाम्—आङ्गिरस, बार्हस्पत्य, भारद्वाज, शौङ्ग, शैशिर, इति पञ्च । आङ्गिरस, बार्हस्पत्य, भारद्वाज, कात्य, आत्कील, इति वा । आङ्गिरस, कात्य, आत्कील, इति त्रयो वा । आद्यो भारद्वाजो वा ।

(२) संस्कृतयः—(पूतिमाषाः, तण्डयः, इत्यादयोऽष्टाविंशत्यवराः) ।

एषाम्—आङ्गिरस, गौरवीति, सांकृत्य, इति त्रयः । शाक्त्य, गौरवीति, सांकृत्य, इति त्रयो वा । अन्त्ययोर्व्यत्ययो वा ।

( ३ ) लोगाक्षयः-( दार्भायणादयोऽष्टत्रिंशदधिकाः )।

एषाम्-काश्यप, वत्सार, वसिष्ठ, इति त्रयः । काश्यप, वत्सार, असित, इति त्रयो वा ।

अधिकं त्वाकरग्रन्थेभ्यो विज्ञेयम् । अत्र सर्वत्र संज्ञाविपर्यासे पारम्परिकं ज्ञानमेव आश्रयत्वेन शरण्यं प्रतीमः। अन्यथा पितृनामविस्मरणे पित्रन्तरप्रसञ्जनवन्मौढ्यमापतति। ततएव पारम्पर्यक्रमरक्षणं ज्ञेयो विदन्ति न्यायविदः ॥

इति गोत्रप्रवरदिक् ॥ २ ॥

## (३) अथ वैवाहिकम्-

सृष्टयै स्त्रीपुंसयोर्योगस्तत्र वैवाहिको विधिः ।
तत्र गोत्रादिविज्ञप्तिस्तत्रैते मेलनक्रमाः ॥ ३ ॥
( वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥ )




अत्र मूलपुरुषाद् विष्णोः सकाशात् सप्तमौ मृडाच्युतौ भवतः । तत्संतत्योरष्टमयो **रतिकामयो**र्विवाहो भवति । पितृद्वारेण सापिण्ड्यस्य विनिवर्तनात् ।




अत्र मूलपुरुषाद् विष्णोः पञ्चम्यौ श्यामारती भवतः। तत्संतत्योः षष्ठयोः **शिवगौर्योः** विवाहः। मातृद्वारेण सापिण्ड्यस्य विनिवर्तनात्।




अत्र तु मूलपुरुषाद् विष्णोः पञ्चम्यौ श्यामानर्मदे भवतः। तयोः पुत्रौ शिवकामौ। तत्संतत्योः सप्तमयो **रमाकव्यो**र्विवाहो न भवति।

मातृद्वारेण सापिण्ड्यस्य निवृत्तावपि पितृद्वारेण मण्डूकप्लुत्या सापिण्ड्यस्यानुवर्तनात् ।




अत्र तु मूलपुरुषाद् विष्णोः पञ्चमी श्यामा, तत्र मातृद्वारेण सापिण्ड्यस्य निवृत्तिः । तत एव पंचमः शिवः, तत्र पितृद्वारेण सापिण्ड्यमनुवर्तते । अतएव तत्संतत्योः षष्ठयोः **कान्तिहरयोर्न** विवाहः । एकतो मातृद्वारेण सापिण्ड्यस्य निवृत्तावप्यन्यतः पितृद्वारेणानुवर्तनात् ॥

वैवाहिके कर्मण्यपि गोत्रप्रवरविज्ञानं शास्त्रपरंपराप्रसिद्धमेव सांप्रतमपि कुमारिकाखण्डे तत्र तत्र प्रवर्तत एव न सर्वथोच्छिन्नमिति । मैथिलादिप्रसिद्धकन्याशुल्कवद् दाक्षिणात्यादिप्रसिद्धसापिण्ड्यसंकोचस्तु समयवैषम्याद् ग्रन्थभूयस्त्वाच्चोपेक्षित एव । जिज्ञासुभिः श्रुति-स्मृती पुरस्कृत्य आस्तिकदर्शनदृशा पूर्व-पूर्वतर-धर्मशास्त्रनिबन्धाः पर्यालोचनीयाः । अत्रत्य आधुनिकपरिष्कारस्तु विधवावेदिषु फुर्फुरायत एव किमनया चर्चया ॥

**इति वैवाहिकदिक् ॥ ३ ॥**

# ( ४ ) अथाशौचम्—

अहन्ताममतावेशसंश्लेषादशुचिर्भवेत् ।
तच्चाशौचं वेदमूलं कालक्लृप्त्या प्रदर्श्यते ॥ ४ ॥

इह—'तदाहुर्यदाहिताग्निः सूतकान्नं प्राश्नीयात् का तत्र प्रायश्चित्तिः'
( ऐतरेयब्राह्म० ) इत्येवमादि श्रौतलिङ्गम् ।

## गर्भस्रावाद्याशौचम्—

'रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुद्ध्यति ।
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥' ( मनु. ५।६६ )
'गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ॥' ( याज्ञ. ३।२० )
'जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥' ( मनु. ५।७१ )
( रात्रिशब्दोऽहोरात्रपरः ) ॥

## मरणाशौचम्—

'दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ।
अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते ॥' ( मनु. ५।५८ )
( अनुजाते=दन्तोत्पत्त्युत्तरम् )
'नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता ।
निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥' ( मनु. ५।६७ )
'आदन्तजन्मनः सद्य आ चूडान्नैशिकी स्मृता ।
त्रिरात्रमा व्रतादेशाद् दशरात्रमतः परम् ॥' ( याज्ञ. ३।२३ )
'दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव च ॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥' ( मनु.५।५९–६० )
'अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।' ( याज्ञ. ३।२४ )

'स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुद्ध्यन्ति बान्धवाः ।
यथोक्तेनैव कल्पेन शुद्ध्यन्ति तु सनाभयः ॥' ( मनु. ५।७२ )
( सनाभयः–पितृपक्षाः )
'अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।
निवासराजनि प्रेते तदहः शुद्धिकारणम् ॥' ( याज्ञ. ३।२५ )
'गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेतहारैः समं तत्र दशरात्रेण शुद्ध्यति ॥' ( मनु. ५।६५ )
'त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥
श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत् ।
मातुले पक्षिणीरात्रिं शिष्यर्त्विग्बान्धवेषु च ॥
प्रेते राजनि सज्योतिर्यस्य स्याद् विषये स्थितः ।
अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ ॥' ( मनु. ५।८०-८२ )
( पक्षिणी=आगामिवर्तमानाहयुक्ता निशा ॥ सज्योतिः=दिवामरणे रात्रौ, रात्रिमरणे दिवा च स्नानाच्छुद्धिः । )
'गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥' ( याज्ञ. ३।२४ )

## आशौचसंपातः—

'अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥' ( मनु. ५।७९ )
'अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति ।' ( याज्ञ. ३।२० )
( अत्र विशेषजिज्ञासायां मिताक्षरा द्रष्टव्या )

## अतिक्रान्ताशौचम्—

'विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥' ( मनु. ५।७५ )
'प्रोषिते कालशेषः स्यात् पूर्णे दत्त्वोदकं शुचिः ॥' (याज्ञ. ३।२१)
'अतिक्रान्ते दशाहे च त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति ॥

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥
बाले देशान्तरस्थे च पृथक् पिण्डे च संस्थिते ।
सवासा जलमाप्लुत्य सद्य एव विशुद्धयति ॥' ( मनु. ५।७६-७८ )
( ज्ञातिः=सपिण्डः ॥ पृथक्पिण्डे=समानोदके )

## वर्णाशौचम्—

'शुद्धयेद् विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्धयति ॥' ( मनु. ५।८३ )
'क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥' ( याज्ञ. ३।२२ )

## संक्रान्ताशौचम्—

'असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुद्धयति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुद्धयति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥
अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च ।
स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्धयति ॥'
( मनु. ५।१०१-१०३ )
'ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः ॥' (याज्ञ. ३।२६)
'नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुद्धयति ।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥' ( मनु. ५।८७ )
'दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्धयति ॥' ( मनु. ५।८५ )
( दिवाकीर्तिः=श्वपाकादिः )
'उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥' (याज्ञ. ३।३० )

सद्यः शौचम्—

'ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि हि कष्टायां सद्यः शौचं विधीयते ॥' (याज्ञ. ३।२८-२९)

अत्र मुण्डनम् । तथाचापस्तम्बः पठति—'अनुभाविनां च परिवापनम्' इति । अनु पश्चाद् भवन्ति जायन्त इत्यनुभाविनः पुत्रादयोऽल्पवयसः । शावं दुःखमनुभवन्तीति केचित् ॥

अत्र नित्यकर्मणोऽपरित्यागः । तथाच स्मर्यते—

'सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत् सूतके वापि त्यजन् गच्छत्यधो द्विजः ॥' इति ।
'श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ।' इति च ।

श्रुतिरपि—

'अहरहः संध्यामुपासीत' इत्येवमादि ॥

इह मन्वादिस्मृतयश्चातुर्वर्ण्यचातुराश्रम्योपदेशपरायणा एव । तत्र मन्वादिवचनानि पुराणादिसंवादसंवर्धितान्येव धर्मशास्त्रनिबन्धत्वेन परिणामितानि । तत्र गौड-दाक्षिणात्य-मैथिलनिबन्धग्रन्था उच्चावचाः प्रसिद्धा एव । तत्र देशकुलशिष्टाचारादिभेदात्, तथा—कालवैषम्येण लेखकाध्यापकाध्येतृदोषसंनिपातात्, तथा—संप्रदायसांकर्यात्, तथा चिरंतनतरतमानां मूलग्रन्थपुस्तकानां नष्टप्रायत्वाच्च बहुत्र बहुधा निबन्धकर्तृमतिकर्दमदुर्गमः प्रमेयसंचर इति नात्यन्तर्हितम् । इत्थं च सांप्रतिकानां कतिपये नूतना धर्मनिबन्धा याथातथ्येन प्रमाणवचनाङ्कविकला युक्तितदाभासविजृम्भिता वास्तववेदविज्ञानमुग्धानां नवयुवकानां मानसाभोगेषु भ्रमावर्तानुत्पादयन्तीत्यत्र कियच्चित्रं गड्डलिकाप्रवाहेण नानालेखविन्यासवैदग्धीकरम्बितमित्यपि नात्यर्थं दूरान्वेषणम् । अत्र निदर्शनानि प्रादुष्कृतानि प्रादुष्क्रियमाणानीति विरम्यते । एवं सत्यपि यत्किंचिदत्र प्रकरणसंगत्यैव निवेदितम् ॥

इत्याशौचदिक् ॥ ४ ॥

## ( ५ ) अथ दायविभागः—

प्रमीतप्रभृतेर्हन्त ! स्थावरं जङ्गमं वसु ।
आरादाश्रयते बन्धूनिति दायो विभज्यते ॥ ५ ॥

### विभागः—

तत्रौरसस्य दत्तकस्य च पुत्रस्य लक्षणम्—

"स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् ।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥' (मनु. ९।१६६ ,
'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥' ( मनु. ९।१६८ )
'दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥' (याज्ञ. २।१३०)
'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥" ( मनु. ९।१६३ )
'ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥' ( मनु. ९।१०४ )
'विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः॥' ( याज्ञ. २।११४ )
'विभजेरन् सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् ।
मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ॥' (याज्ञ. २।११७)
'ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि ।
पश्चाद् दृश्येत यत् किंचित् तत्सर्वं समतां नयेत् ॥' (मनु. ९।२१८)
'उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥
गोत्ररिक्थे जनयितुर्न हरेद् दत्त्रिमः क्वचित् ।

गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥' (मनु. ९।१४१-१४२)

'पितुरूर्ध्वं विभजतां मातप्यंशं समं हरेत् ॥' ( याज्ञ. २।१२३ )

## विभागे विशेषः—

'पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।

न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥' ( मनु. ९।२०९ )

'ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् ।

संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥' ( मनु. ९।२१६ )

'सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।

अनेकपितृकाणां तु पितृतो भागकल्पना ॥' ( याज्ञ. २।१२० )

'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम् ॥' ( याज्ञ. २।१२४ )

'येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।

म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥

सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।

भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥' (मनु. ९।२११-२१२)

'सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ।

न चादत्त्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम् ॥' (मनु. ९।२१४)

## अपुत्रस्य धनभागिनः—

'न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च ॥' ( मनु. ९।१८५ )

'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।

मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥' ( मनु. ९।२१७ )

'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।

तत्सुता गोत्रजा बन्धुः शिष्यः सब्रह्मचारिणः ॥

एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।

स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥' ( या.ज्ञ. २।१३५-१३६)

' अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।

इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ॥' ( मनु. ९।१८९ )

### अगृहस्थस्य धनभागिनः—

'वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।

क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रैकतीर्थिनः ॥' ( याज्ञ. २।१३७ )

### अत्रैको माण्डलिकक्रमः—

```
              २७—२८——————————————————————————————————————२९
                                                          |
              २३—२४——————————————————————————————————२५   ३०
                                                      |     |
              १९—२०————————————————————————————२१    २६    ५४
                                               |     |     |
प्रपितामही १५—१६ प्रपितामहः———————————१७      २२    ५०    ५५
                                       |       |     |     |
पितामही ११—१२ पितामहः———————१३        १८      ४६    ५१    ५६
                             |         |       |     |     |
        माता ७—८ पिता———९    १४        ४२      ४७    ५२    ५७
                |        |    |         |       |     |
        प्रमीतः—पत्नी४    |    |         |       |     |
          |      |       |    |         |       |     |
          १    दुहिता५    १०   ३८        ४३      ४८    ५३
          |      |       |    |         |       |
          २    दौहित्रः६  ३४   ३९        ४४      ४९
          |              |    |         |
          ३              ३५   ४०        ४५
          |              |    |
          ३१             ३६   ४१
          |              |
          ३२             ३७
          |
          ३३
```

अत्रैतत्सारम्—यत्खलु प्रमीतस्य संपत् पुत्र ( १ ) पौत्र ( २ )-प्रपौत्रा-( ३ )णामभावे तत्पत्नी ( ४ ) माश्रयेत् । एवमेवाग्रेऽपि यथासंख्य-मनुसंधेयम् । अयं क्रमो देशकालपात्रानुगुण्येन क्वचिद् विपर्यासमपि गच्छेदित्यप्युन्नेयम् ॥ सत्यप्येवम्—'**द्वेषेण रागेण**—'(चातु. शि. १७श्लो.)-'**अमात्यपार्श्वानुचरादि**—' (चातु. शि. ७३ श्लो.)—'रागाल्लो-भाद्—' ( चातु. शि. १७ श्लो. वे. द. ) इति सर्वथा न विस्मर्तव्यमाधि-कारिकैः ॥

## इति दायविभागदिक् ॥ ५ ॥

॥ श्रीः ॥

# ( ६ ) अथार्षभूगोलः—

'सुमेरुमूर्ध्वगं मत्वा कुमेरुं तदधो गतम् ।
तयोर्भूजे तु लङ्कादीन् ध्येया गोलाकृतिर्भुवः ॥
प्रत्यक्षाप्यनुमेया भो ! दृष्टान्तेन चलाचला ।
विषमापि समाभासा सान्तानन्तापि भूरियम् ॥' ॥ ६ ॥

तथाच **सूर्यसिद्धान्ते**—

'ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम् ।
कटाहद्वितयस्यैव सम्पुटं गोलकाकृतिः ॥' ( सू. सि. भूगो. २६ )
'मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति ।
बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ॥' (सू. सि. भू. ३२)
'अनेकरत्ननिचयो जाम्बूनदमयो गिरिः ।
भूगोलमध्यगो मेरुरुभयत्र विनिर्गतः ॥' ( सू. सि. भू. ३४ )
'समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः ।
द्वीपेषु दिक्षु पूर्वादिनगर्यो देवनिर्मिताः ॥
भूवृत्तपादे पूर्वस्यां यमकोटीति विश्रुता ।
भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा ॥
याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी ।
पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्तिता ॥
उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्तिता ।
तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः ॥
भूवृत्तपादविवरास्ताश्चान्योन्यं प्रतिष्ठिताः ।
ताभ्यश्चोत्तरगो मेरुस्तावानेव सुराश्रयः ॥

तासामुपरिगो याति विषुवस्थो दिवाकरः ।
न तासु विषुवच्छाया नाक्षस्योन्नतिरिष्यते ॥
मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते ।
निरक्षदेशसंस्थानामुभये क्षितिजाश्रये ॥
अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः ॥
नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा ॥
मेषादौ देवभागस्थे देवानां याति दर्शनम् ।
असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः ॥
अत्यासन्नतया तेन ग्रीष्मे तीव्रकरा रवेः ।
देवभागे सुराणां तु हेमन्ते मन्दतान्यथा ॥
देवासुरा विषुवति क्षितिजस्थं दिवाकरम् ।
पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षये ॥
मेषादावुदितः सूर्य्यस्त्रीन् राशीनुदगुत्तरम् ।
सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम् ॥
कर्कादीन् सञ्चरंस्तद्वदह्नः पश्चार्द्धमेव सः ।
तुलादींस्त्रीन्मृगादींश्च तद्वदेव सुरद्विषाम् ॥
अतो दिनक्षपे तेषामन्योऽन्यं हि विपर्ययात् ।
अहोरात्रप्रमाणं च भानोर्भगणपूरणात् ॥
दिनक्षपार्द्धमेतेषामयनान्ते विपर्ययात् ।
उपर्य्यात्मानमन्योन्यं कल्पयन्ति सुरासुराः ॥'

(सू. सि. भू. ३७-४१)

इति । **सिद्धान्तशिरोमणावपि—**

'लङ्का कुमध्ये यमकोटिरस्याः
प्राक् पश्चिमे रोमकपत्तनं च ।
अधस्ततः सिद्धपुरं सुमेरुः

सौम्येऽथ याम्ये वडवानलश्च ॥
कुवृत्तपादान्तरितानि तानि
स्थानानि षड् गोलविदो वदन्ति ।
वसन्ति मेरौ सुरसिद्धसङ्घा
और्वे च सर्वे नरकाः सदैत्याः ॥
यो यत्र तिष्ठत्यवनीं तलस्था-
मात्मानमस्या उपरि स्थितं च ।
स मन्यतेऽतः कुचतुर्थसंस्था
मिथश्च ये तिर्यगिवामनन्ति ॥
अधःशिरस्काः कुदलान्तरस्था-
श्छायामनुष्या इव नीरतीरे ।
अनाकुलास्तिर्यगधःस्थिताश्च
तिष्ठन्ति ते तत्र वयं यथात्र ॥'

( सि. शि. गो. भु. को. १७-२० )

'लङ्कापुरेऽर्कस्य यदोदयः स्यात्
तदा दिनार्धं यमकोटिपुर्याम् ।
अधस्तदा सिद्धपुरेऽस्तकालः
स्याद् रोमके रात्रिदलं तदैव ॥
यत्रोदितोऽर्कः किल तत्र पूर्वा
तत्रापरा यत्र गतः प्रतिष्ठाम् ।
तन्मत्स्यतोऽन्ये च ततोऽखिलाना-
मुदक्स्थितो मेरुरिति प्रसिद्धम् ॥'

( सि. शि. गो. भु. को. ४४-४५ )

'निरक्षदेशे क्षितिमण्डलोपगौ
ध्रुवौ नरः पश्यति दक्षिणोत्तरौ ।

तदाश्रितं खे जलयन्त्रवत् तथा
भ्रमद्भचक्रं निजमस्तकोपरि ॥
उदग्दिशं याति यथा यथा नर-
स्तथा तथा खान्नतमृक्षमण्डलम् ।
उदग्ध्रुवं पश्यति चोन्नतं क्षिते-
स्तदन्तरे योजनजाः पलांशकाः ॥'

( सि. शि. गो. भु. को. ४८-४९ )

'सौम्यं ध्रुवं मेरुगताः खमध्ये
याम्यं च दैत्या निजमस्तकोर्ध्वे ।
सव्यापसव्यं भ्रमदृक्षचक्रं
विलोकयन्ति क्षितिजप्रसक्तम् ॥'

( सि. शि. गो. भु. को. ५१ )

इति । कल्प्यतेऽत्र यमकोटि-सुमेरु-रोमक-कुमेरु-बिन्दुगतेन पूर्वापर-वलयेन, लङ्का-सुमेरु-सिद्धपुर-कुमेरु-बिन्दुगतेन दक्षिणोत्तरवलयेन, ईशान-निर्ऋति-बिन्दुगाभ्यां तथाग्नि-वायु-बिन्दुगाभ्यां कोणवलयाभ्यां सुमेरु-कुमेरु-बिन्दुसंगताभ्यां लाञ्छितः किल भूगोलोऽस्तीति । सुमेरौ दिङ्नियमो नास्ति । अतएव सिद्धान्तशेखरे श्रीपतिः—

'मेरौ रविर्भ्रमति भूजगतः समन्ता-
दाशा न काचिदपि तत्र विचारणीया ।
पूर्वं हि दर्शनमुपैति स चेह पूर्वा
तत्रास्ततो भवति सैव कथं प्रतीची ॥' इति ।

| जम्बूद्वीपसंज्ञितस्य सौमेरवस्य आद्यस्य भूगोलार्धस्य दृश्यम्— | द्वीपान्तरसंज्ञाप्रयोजकस्य कौमेरवस्य द्वितीयस्य भूगोलार्धस्य दृश्यम्— |
|---|---|




यथात्र नानाविधालौकिकचमत्कारचर्यानिरूपणार्थं महर्षिभिः सुमेरुर्भूमध्यत्वेन न्यरूपि तथैव सुमेरुभूजभूतो लङ्काप्रदेशोऽपि प्रायेण नानाविधलौकिकचमत्कारचर्यानिरूपणार्थं विशेषतो ग्रहर्क्षचारनिरूपणार्थं च मध्यत्वेन न्यरूपीति नानाहेतुवादपुरस्सरं परीक्षणीयम् ।

अत्र सुमेरु-कुमेरू लङ्का-सिद्धपुरे यदि कल्पेयातां तर्हि तन्मध्यगता पूर्वापररेखा विषुवद्रेखा संपद्येत, तथा सुमेरु-कुमेरू उत्तरदक्षिणध्रुवौ संपद्येयाताम्; एतदनुरोधेनान्यदपि यथायथं परिवर्तितं द्रष्टव्यम् ॥

गोलस्थित्या सुमेरु-कुमेरुवास्तव्यानां ध्रुवादिदर्शनसंबन्धसाम्येऽपि सुमेरौ ब्रह्मणः प्रादुर्भावात् तत एवावस्थानवशाद् आ च प्राकृतिकप्रलयात् सूर्यमण्डलावलोकनाच्च तस्य ज्यैष्ठ्यमाहुराचार्याः ।

तादृशसूर्यावलोकनं तु लङ्काबिन्दोः संभाव्यमानायां सुमेरुगतायां रेखायां गणितगोलयुक्त्या ८१ अक्षांशप्रदेशे ३३ अंशोच्छ्रिते दृक्चिह्ने घटत इत्यपि गोलवादिनां प्रत्यक्षम् ॥

जम्बूमहाद्वीपे हि लङ्कादेशादुदीच्यां भारतादिवर्षम्, यमकोटेरुदीच्यां भद्राश्ववर्षम्, सिद्धपुरादुदीच्यां कुर्वादिवर्षम्, रोमकादुदीच्यां केतुमालवर्षं च पुराणेतिहासेषु प्रतिपादितम्। एवं सुमेरुः सर्वोत्तरः। इह वर्षाणि द्रोण्याकृतिदेशत्वेन चापाकारदेशत्वेन वा निरूपितानि। तदिदं भुवो गोलाकारतामन्तरेणानुपपन्नमिति स्पष्टं गणितगोलविदाम्।

वर्षाणां सीमा हि शैलसमुद्रादिर्भवन्त्यपि बहुयुगकालातिक्रमे विचालिनी भविष्यतीत्यपि स्पष्टं निर्णायकानाम्। ब्रह्मणो दिनाभ्यन्तरे हि तत्र तत्र बहुधा प्रसिद्धः खण्डप्रलयो ब्राह्मप्रलयश्चापतत्येव ततोऽपि वर्षादिसीमाविचालित्वमतिरोहितमेव।

नहि खण्डादिप्रलयो नास्तीति केनापि प्रेक्षावता निश्चेतुं शक्यम्; अल्पतियेऽपि काले समुद्रपूरेण द्वीपव्यत्यासोपलम्भावगमात्। नहि वा तावत् कियद्भिर्वर्षसहस्रैः पूर्वमेवेयं भौतिकसृष्टिरजनिष्टेति केनाऽपि सिद्धान्तयितुं शक्यत इति; चतुरस्रप्रमाणाभावाद्, अपरिच्छिन्ने काले भचक्रभ्रमणादि-शिलालेखादिप्रमाणजातानामनेकधा संशयाक्रान्तत्वाच्च ॥

प्रथमशरीरिणः स्वयंभुवो ब्रह्मणस्तत्संतानस्य मनुप्रभृतेरधिष्ठानभूतात् सुमेरोर्लम्बितःऽवतीर्णा विस्तृता ब्रह्मदेवर्षिभूयिष्ठाऽऽर्यजनसृष्टिर्हिमालयकुरुक्षेत्रोज्जयिनी लङ्कादिप्रदेशान् यथायथं स्वावासेन प्रागलंचकार। अत्रांशे श्रुतिस्मृतिपुराणेतिहासप्रसिद्धास्तत्तद्भूखण्डसंज्ञाविशेषाः प्रमाणानि जाग्रत्येव॥

लक्ष्मीसरस्वतीविलासभूमेरस्य देशस्य भारतवर्षेति चिरंतनतमा संज्ञा। सा ऋषभतनूजस्यादिभरतस्य राज्ञः संबन्धाज्जज्ञे। इदं भारतवर्षं सरस्वत्या लक्ष्म्यास्तन्मूलस्याध्यात्मिकाधिदैविकाधिभौतिकरूपस्य विज्ञानस्य चाधिष्ठानं बभूवेति श्रुति-स्मृति-पुराणेतिहासवाक्येभ्योऽप्यतिरोहितम्। यत

इहैव प्राक् सकलभूवलयोपजीव्यमहिमानो देवा महर्षयोऽवताराश्च जज्ञिरे। अमीषामेव स्वाध्यायेषु ऋग्वेदादिषु तथा हिरण्यगर्भादिमहागुरुपरम्परया विशकलितेष्वथर्ववेदादिषु तथैव तद्विभूतिषु कलाकलापादिषूच्चावचानि वस्तुविज्ञानरहस्यानि। तान्यतिदारुणे महाभारतयुद्धे लोकानां क्षयात् संप्रदायविलोपाच्च नष्टानि जातानि। महाभारतग्रन्थात् पुरेव तदानीमपि नानाविधानां वस्तुविज्ञानविभूतीनां परिस्फूर्तयो निःशङ्कमवधार्यन्ते।

इत्थं च सर्वेषाममीषां विज्ञानानां यथासंप्रदायं प्रत्यक्षक्रियाणां द्रष्टार उपदेष्टार उपयोक्तारो भारतवर्षीया एव प्रथमे सिद्ध्यन्तीति पुरस्तात् पुरातत्त्वविदाम्। तथाहि—

उपवेदादिष्वथर्ववेदविषये तावद् देवतापुरस्कारेण यज्ञवेदितो द्रौपदी-धृष्टद्युम्नयोरुत्पादनं महाभारतकालिकम्। इतोऽपि प्राक् प्रह्लादस्याध्यात्मिक-विज्ञानबलेन स्तम्भक्रोडादपूर्वाकृतेर्नृसिंहस्य प्रादुर्भावः। वेनबाहुमन्थनाद् राज्ञः पृथोरुत्पत्तिः। एवं वामनत्रिविक्रमचेष्टादि। व्योमयानविमानादि-प्रवृत्तिस्तु सांप्रतिकवैज्ञानिकैरपि सत्यापिता तत्र तत्र कथाप्रसङ्गेषु सुप्रतीतैव। तत्र रामायणादिव्यवहृता पुष्पकादिवैलक्षण्यवैचित्री तु लक्ष्यभूतैव। धनुर्वेदीया चातुर्यपि भीष्मद्रोणकर्णाद्युपमर्देषु तत्तदसाधारणकर्मचातुर्य-क्षणैव। अत्र रामायणोक्ता महर्षिणा विश्वामित्रेण रामभद्राय समुपदिष्टा ताटकाताडनोत्तरं विलक्षणास्त्रग्रामोपदेशशैल्यपि न विस्मर्तव्या। गान्धर्व-वेदे तु सव्यसाची गाण्डीवी गुडाकेशो मध्यमपांडवः कालवैषम्याद् बृह-न्नलाभवँश्चमचकारेत्येवमादि सुप्रसिद्धमेव। किमत्र सुप्रसिद्धेऽर्थे ऋषिमुनि-मोहिनीरूपादिक्रियानिदर्शनोद्घोषणया। आयुर्वेदेऽपि तदानीं विशल्यी-करणादिप्रक्रिया सुप्रसिद्धैव।

किंच देवासुरैर्मन्थानेन दधिपात्रमिव मन्दरदण्डेन समुद्रोऽवेदीत्याप्यानि, राज्ञा पृथुना पृथिवी गोगरिम्णा दोहनविज्ञानेन यथाभिमतं दुग्धेति पार्थिवानि, तथा-अन्तरिक्षद्युमण्डलविषयकाणि च विज्ञानचक्राणि विज्ञेयानि।

अर्थवेदादयश्चत्वार उपवेदा आगमप्रक्रियाविजृम्भिता अपि। तत्रायुर्वेदे रसादिग्रन्था आगमसंभूता एव प्रसिद्धाः। आगमं तन्त्रमिति। तत एव 'जन्मौपधिमन्त्रतपःसमाधिजाः सिद्धयः' (यो. द. ४।१)–'योगसिद्धयोऽप्यौपधादिसिद्धिवन्नापलपनीयाः'(सां. द. ५।१२६) इत्येवमादि दर्शनकारादिभिः प्रपञ्चितमिति दिक्।

इह अर्थवेदादिषु वेदशब्दो विद्यावचनः। तेन अर्थविद्या (अर्थशास्त्रं), धनुर्विद्या, गन्धर्वविद्या, आयुर्विद्येति फलति। अत्र गन्धर्वपदार्थो संज्ञया भारतवर्षसंबन्धं प्रख्यापयति। उपवेदप्रपञ्चभूतान्येव कलाकौशलानि॥

जम्बूद्वीपतिलकायितस्वामिको जाम्बूनदायमानासमानवार्ताको दायभक्तोऽपि गुणज्येष्ठतयापादितदीर्घदीर्घतरसत्ताको विपुलाभोगो भारतवर्षीयः खण्ड इत्याम्नातप्रायम्। कालमहिम्नायं पूर्वकाले (द्वापरान्ते) १९७२९४४००० पूर्वो भवन्नपि मध्यकाले (विक्रमवत्सरारम्भे) ३०४४ मध्यमः सन्निदानीमधस्तनकाले (विवर्तमाने वैक्रमाब्दे-१९८३ इत्या.) अधस्तनः प्रवर्तते। अत्र राजतरङ्गिण्यां कह्लणकृतायां कुरुपाण्डवकालकलने त्रिपञ्चाशदुत्तरषट्शती (६५३) वर्षपरिमितो भ्रमः (द्रष्टव्या साहित्यदर्पणच्छायाया बृहद्भूमिका)।

भारतवर्षीयाः पूर्वे युधिष्ठिरान्ता राजानः प्रसिद्धा एव। मध्यमाः सुमित्र-क्षेमक-रिपुंजयान्ताः पुराणेषु भविष्यत्त्वेन निर्दिष्टाः। अधस्तनाः पृथ्वीराजान्ताः। ततो राजपरंपरासु दाक्षिणात्यो बुक्कभूपालः सायनमाधवद्वारेण वेदानामसाधारणोपकारी जज्ञ इति यज्ञविदां विदां पुरस्तात्। सोऽयं सुकृती जैमिनीयन्यायमालाविस्तरप्रारम्भे—

'यद्ब्रह्म प्रतिपाद्यते प्रगुणयत्तत्पञ्चमूर्तिप्रथां
तत्रायं स्थितिमूर्तिमाकलयति श्रीबुक्कणक्ष्मापतिः।
विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका
तेनास्य स्वगुणैरखण्डितपदं सार्वज्ञमुद्द्योतते॥

इन्द्रस्याऽऽङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि-
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः ॥'

इत्युक्तः । सम्राड् अकबरोऽपि लक्ष्यभूत एव । सोऽयं महाभागः सेतुबन्धटीकाप्रारम्भे—

'आ मेरोरा समुद्रादवति वसुमतीं यः प्रतापेन तावद्
दूरे गाः पाति मृत्योरपि करमभुचत्तीर्थवाणिज्यवृत्त्योः ।
अप्यश्रौषीत् पुराणं जपति च दिनकृन्नाम योगं विधत्ते
गङ्गाम्भोभिन्नमम्भो न च पिबति जयत्येष जल्लालदीन्द्रः ॥
अङ्गं वङ्गं कलिङ्गं सिलहट-तिपुरा-कामता-कामरूपा-
नान्ध्रं कार्णाट-लाट-द्रविड-मरहठ-द्वारका-चोल-पाण्ड्यान् ।
भोटान्तं मारुवारो-त्कल-मलय-खुरासान-खन्धार-जम्बू-
काशी-काश्मीर-ठट्ठा-बलख-बदकशाँ-काबिलान् यः प्रशास्ति ॥'

इत्युक्तः । अस्माकं भारतेश्वरस्य भूवलयवितानायितप्रभावस्य पितामही सार्वभौमी तु लक्ष्मी-सरस्वतीव्यतिकरप्रकृतिरेवेति किंपल्लवितेन ( द्रष्टव्या साहित्यदर्पणच्छायाया लघुभूमिका ) ॥

अथ भुवो नवाश्चत्वारो विभागाः—( यत्र प्रथम एशियाविभागः ४५ दक्षिणाक्षांशाद् ७८ उत्तराक्षांशपर्यन्तः, २६ पश्चिमदेशान्तरांशात् १७५ पश्चिमदेशान्तरांशपर्यन्तश्च । द्वितीयो युरोपविभागः ३५ उत्तराक्षांशाद् ८० उत्तराक्षांशपर्यन्तः, १० पश्चिमदेशान्तरांशात् ६२ पूर्वदेशान्तरांशपर्यन्तश्च । तृतीय आफ्रिकाविभागः ३७ उत्तराक्षांशाद् ३५ दक्षिणाक्षांशपर्यन्तः, १८ पश्चिमदेशान्तरांशात् ५२ पूर्वदेशान्तरांशपर्यन्तश्च । चतुर्थ आमेरिकाविभागः ५५ दक्षिणाक्षांशात् ७२

उत्तराक्षांशपर्यन्तः, ३० पश्चिमदेशान्तरांशात् १६५ पश्चिमदेशान्तरांशपर्यन्तश्चास्ति ।) इति । तथाचाचार्यबालगङ्गेनः—'एशिया-ऽऽफ्रिकायुरोपा-ऽऽमेरिकाख्याश्चत्वारो भूपृष्ठखण्डा ज्ञेयाः' इति—'भूगोलपृष्ठस्य त्रयः पादाः समुद्रावृताः सन्ति, महान्तः स्थलविभागा भूगोलस्योत्तरखण्डे वर्तन्ते महान्तः समुद्रजलविभागाश्च दक्षिणे खण्डे सन्ति' इति चाह स्म । अत्र पाश्चात्यविपश्चिद्भिर्ग्रीनिच्वेधालयाद् देशान्तरादि परिगण्यते ।

एषु प्राय एशियाप्रदेशोऽस्य भारतवर्षस्य जीर्णे जठरे निविशते । यत उज्जयिनीमध्यरेखातः पश्चिमे भारतभागे गान्धार-हिंगुलाज-मक्कादि । अत्र अरबदेशे मक्का यत्रास्माकं मक्केश्वरो विलोचिस्तानदेशे हिंगुलाजो यत्रास्माकं हिंगुलादेवी चेति शिवशक्ती तिष्ठतः । अफगानिस्तानदेशे खन्धार इति यस्य पूर्वरूपं गान्धारो यदुद्भवा भारतप्रसिद्धस्य धृतराष्ट्रस्य पत्नी दुर्योधनादेर्जननी शकुनेर्भगिनी च गान्धारीति सुप्रसिद्धम् । पूर्वे भारतभागे तु सिंहल-चीन-जापानप्रभृति । अत्र सिंहलेऽस्माकं बौद्धाः । चीनेऽस्माकं नीलसरस्वती ( बौद्धदर्शनाधिष्ठात्री ) । युरोपप्रदेशः प्राय आफ्रिकाप्रदेशश्च केतुमालवर्षे प्रतितिष्ठति । आमेरिकाविभागस्योत्तरप्रदेशः कुरुवर्षेऽन्तर्भवति । एत उत्तरकुरवो दक्षिणकुरुभिः सह संबद्धा वर्ण्यन्ते । अतएव भारतवर्ष-कुरुवर्षयोरुच्चावचा अन्तरालदेशा गम्यागम्याः संश्लिष्टा इत्यर्थादवसीयन्ते । स्मरन्ति च—

'उत्तरैः कुरुभिः सार्धं दक्षिणाः कुरवस्तथा ।
विस्पर्धमाना व्यचरंस्तथा देवर्षिचारणैः ॥' (म. भा. आदिप. १०६।१०)

इति । अस्माकं दक्षिणोत्तररेखायाः पूर्ववर्तिदेशपर्यन्तभागाः समुद्राभोगाश्च भद्राश्ववर्षे निविशन्ते । इहैव वर्षे यमकोटिरासीद् या व्याससिद्धान्ते पद्मकोटिरिति निर्दिष्टा सा चेदानीं लङ्केव समुद्रकुक्षिं प्रविष्टेति सर्वं यथायथं सूक्ष्मेक्षिकया महामतिमद्भिरनुसंधेयमिति दिक् ॥

आधुनिकं भारतवर्षशरीरं त्वेतत्—

## अथ कतिचित् पर्वताः—

### (१) मेरुः—

'यं नित्यं भगवान् प्रदक्षिणयति भ्राम्यत्प्रभाग्रेसर-
ध्वान्तश्रेणिविभक्तवासरनिशाविन्यासरेखं रविः ।
धत्ते कांचन काञ्चनश्रियमसौ मेरुर्गिरीणां गुरु-
र्देवैः सार्धमधित्यकामधिवसत्यस्यामरग्रामणीः ॥
एतां पश्य पुरः सुमेरुशिखरे दम्भोलिपाणेः पुरीं
त्वत्कालोकनकौतुकोत्तरलितैर्व्यग्रां पुरन्ध्रीजनैः ।
यस्यास्तोरणगोपुरप्रणयिभिर्नामाङ्कितैर्मार्गणैः
पौलस्त्यस्य विनापि वर्णरचनां न्यस्ता प्रशस्तिः स्थिरा ॥'

( बालरामा. १०।३८-३९ ) ॥

### (२) मन्दरः—

'नेत्रं वासुकिरत्र केशवभुजैः संदानितोऽयं पुरा
चक्रुर्वल्लवतां परिभ्रमविधावेतस्य देवासुराः ।
मन्थाः सोऽयमभूत् समुद्रकलशे तन्नीयतां कौतुका-
देष श्रोत्रपरंपरापरिचितो दृग्गोचरं मन्दरः ॥'

( बालरा. १०।३६ ) ॥

### (३) कैलासः—

'कैलासः स्फटिकाद्रिरेष भगवानेनं भवानीसखः
सख्यादैलविलस्य भक्तिजनितान्नित्यं शिवः सेवते ।
किंचास्मिन्ननुमेखलं नखमुखच्छेदैः समावेद्यते
हेलोत्पाटनपूर्वकालनिहितैर्लङ्कापतेर्विक्रमः ॥
कैलासाचलकर्णिकेयमलका नेत्रैकपेया पुरी
देवस्य द्रविणप्रभोः किमपरं शृङ्गारसारस्य भूः ।

यस्यामस्तमितेऽथ राक्षसपतौ यक्षाङ्गनानाममी
वर्तन्ते प्रतिचत्वरं प्रतिगृहं प्रत्यापणं चोत्सवाः ॥
एतन्मानिनि! मानसं सुरसरो निर्लूनहेमाम्बुजं
पार्वत्या प्रियपूजनार्थममुतो गङ्गासरिन्निर्गता ।
अस्माच्चित्रशिखण्डिभिश्च परमे पर्वण्युपादीयते
स्नानोत्तीर्णवृपाङ्कभस्मरजसां सङ्गात् पवित्रं पयः ॥'

(बालरा. १०।३३-३९) ॥

## (४) हिमालयः—

अस्य-पूर्वापरदैर्घ्यम् अष्टादशशतं क्रोशाः । परमो विस्तारस्त्रिशती क्रोशाः । उच्छ्रायो गव्यूतिः (क्रोशद्वयम्)। अतएवायं समभुवि पञ्चदशोत्तरशतक्रोशान्तरेण दृश्यते ।

'अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥
यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥'

(कुमारसं. १।१-२)

'श्रीकण्ठश्वशुरः स एष भगवान् मेनापतिः पर्वतः
पुत्रीवानुमया पुरः किमपरं हेरम्बमातामहः ।
यस्यायं महिमा यदत्र शमिनः श्यामाकमुष्टिंपचाः
स्वास्वेवाश्रमभूषु दिव्यवपुषः क्रीडन्ति कामाज्ञया ॥
स्त्रीणां जन्ममहातरोः किमपरं सौभाग्यलाभोत्सव-

स्तत्प्राप्तेरधिदैवतं गिरिसुता साप्यस्य कुञ्जान्तरे ।
एकाङ्गुष्ठनिपीडितक्षिति तपस्तप्त्वा सहस्रं समा-
श्चन्द्रापीडशरीरसंविभजनप्रेमाणमापद्यत ॥
अत्रोढायां गिरिदुहितरि प्रीतिमानिन्दुमौलिः
प्रेमावेशाज्झटिति भगवानर्धनारीश्वरः सन् ।
मन्दं देवैः प्रणतचरणः प्रत्यभिज्ञानलेशाद्
वामे पाणौ तदितरकरं ताडयित्वा जहास ॥
अस्मिन्नूढा मृडानी द्युसरिदिह धृता दन्तिदैत्योऽत्र भिन्न-
श्छिन्नं ब्राह्मं शिरोऽस्मिन्निह गुरुनिधने निर्मिता मातरश्च ।
दृक्श्रोत्रप्रीतिपेयं दलितसुरपुरीदुर्गमद्वारमुद्रं
सिद्धानां पूर्वसिद्धेरिति हरचरितं वर्ण्यते चित्रमत्र ॥'

( बालरा० १०।२७-३० ) ॥

**(५) विन्ध्यः—**

अयं पूर्वपश्चिमसमुद्रपर्यन्त विस्तीर्णः ।

'आचक्ष्महे तव किमद्यतनीमवस्थां
तस्याद्य विन्ध्य शिखरस्य मनोहरस्य ।
यत्रैव सप्तमुनयस्तपसा निषेदुः
सोऽयं विलासवसतिः पिशिताशनानाम् ॥'

**(६) सह्यः—**

अयं कुमारीक्षेत्राद् विन्ध्यपर्यन्तगः । अस्य क्वचित् क्वचिदुच्छ्रितिः ३७४० हस्ताः ।

'हिमालयात् कनिष्ठोऽपि विन्ध्यस्य दक्षिणोन्नतः ।
परैरसह्यविक्रान्तः सह्यः केन निरूप्यताम् ॥'

**(७) मलयः—**

'गुणवति फणिवल्लीनद्धपूगप्रकाण्डः

प्रचुरमरिचवल्लीवल्लरीकः पुरस्तात् ।
मलय इह महाद्रिर्नन्दनश्चन्दनाना-
मयमधिलुठदेलाश्लिष्टकक्कोलयष्टिः ॥
ये दोलाकेलिदानव्यतिकरगुरवो ये लतागर्भकाराः
कोदण्डाभ्यासविद्याविधिषु विजयिनो ये स्मरस्वेदवाराम् ।
तन्वन्तश्चैत्रमैत्रं मलयशिखरिणस्ते विनिर्यान्त्यमुष्मा-
दाकैलासं समीराः सुरतमहमहासाक्षिणो दाक्षिणात्याः ॥'
( बालरा. १०।२४-२५ ) ॥

एवमन्येऽपि ॥

## अथ कतिचिन्नद्यः—

(१) गङ्गा—(विष्णुपदी-हरशेखरा-त्रिपथगा-ऋषिकुल्या-जह्नुतनया-भागीरथी-भीष्मसूः)।

इयं हिमालयादुत्पद्यमाना समानोत्पत्तिकया अलकनन्दया सह संपृक्ता गभीरं शब्दायमाना हरद्वारकान्यकुब्जप्रयागादिप्रदेशेषु वहन्ती तत्र तत्र अनेकधा नदीनदादिभिः संश्लिष्टा वङ्गानाप्लावयन्ती पूर्वसमुद्रं प्रविशति।

'विष्णुपदी विष्णुपदात् पतिता मेरौ चतुर्धास्मात्।
विष्कम्भाचलमस्तकशस्तसरःसंगतागता वियता॥
सीताख्या भद्राश्वं सालकनन्दा च भारतं वर्षम्।
चक्षुश्च केतुमालं भद्राख्या चोत्तरान् कुरून् याता॥'

(सि. शि. गो.)

विष्णुपदीति विष्णुपदाख्यस्थानसंबन्धात्। एवमग्रेऽपि यथादर्शनमूह्यम्। अत्र—'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि—' (ऋ. सं. १० मं. ६ अनु. ७५ सू.) इत्येवंविधाः श्रुतयोऽपि कलनीयाः।

'समृद्धं सौभाग्यं सकलवसुधायाः किमपि त-
न्महैश्वर्यं लीलाजनितजगतः खण्डपरशोः।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासोदर्यं ते सलिलमशिवं नः शमयतु॥'

(गंगालह.१)

इत्येवमेतदधिष्ठातृदेवतापि॥

(२) यमुना—(कालिन्दी-सूर्यतनया-शमनस्वसा-यमी.)।

इयं हिमालयात् प्रादुर्भवन्ती प्रायो गङ्गायाः समानान्तरेण प्रवहन्ती दिल्लीमथुराऽऽगरादिप्रदेशेषु लुठन्ती प्रयागे गङ्गया सह संगच्छते।

'सेयं सुभ्रु पुरः कालिन्दतनया गीर्वाणसिन्धोः सखी

वासः कालियपन्नगस्य यमुना दृग्गोचरे वर्तते ।

वन्दस्वार्यमणीमिमां दुहितरं वैवस्वतस्यानुजां

यस्याः स्वर्णपरीक्षणक्षमदृपत्तापी स्वसा सोदरी ॥'

( बालरा. १०।८५ )॥

(३) **गोमती**—( वासिष्ठी ) ।

इयं हिमालयपादान्निःसरन्ती पीलीभीतनैमिषारण्य-लक्ष्मणपुर(लखनऊ) सुलतापुरादिप्रदेशेषु गच्छन्ती गङ्गया सह संसृज्यते ।

'कुम्भाकारमुरीकरोषि कुहचित् क्वाप्यर्धचन्द्राकृतिं

धत्से भूतलमानयष्टिघटनामालम्बसे कुत्रचित् ।

अन्तः क्वापि तडागवर्तनतया सिद्धाश्रमं सूयसे

मातर्गोमति ! यातभङ्गिविधया नानाकृतिर्जायसे ॥'

( गोमतीमहि. ४ ) ॥

(४) **सरयूः**—( वासिष्ठी ) ।

इयं हिमालयादुद्गच्छन्ती समानप्रभवेण घर्घरेण सह मिलिता गम्भीरं नदन्ती अयोध्यादिप्रदेशेषु लुठन्ती गङ्गया सह संयुज्यते ।

'गङ्गा तिग्म्यविचालिता रविसुता कृष्णप्रभावाश्रिता

क्षुद्रा गोमतिका परास्तु सरितः प्रायो यमाशां गताः ।

त्वं त्वाकल्पनिवेशभासुरकला पूर्णेन्दुबिम्बोज्ज्वला

सौम्यां संस्थितिमातनोषि जगतां सौभाग्यसंपत्तये ॥'

( सरयूसु. ४ )

'मैनाकस्य स्वसेवारान्नागेशं दारुकावने ।

सेवते सरयूः पृष्ठाद् भ्रात्रेव घर्घरेण सा ॥'

(५) **गण्डकी**—

इयं हिमालयान्निष्क्रामन्ती नेपालविदेहादिप्रदेशान् शिशिरयन्ती हरिहरक्षेत्रे गङ्गया सह संगच्छते ।

(६) **ब्रह्मपुत्रः**—( शोणः-हिरण्यवाहः ) ।

अयं हिमालयादाविर्भवन् तिब्बताऽऽसामादिप्रदेशेषु वहन् वङ्गेषु द्विधा भवन्नेकेन प्रवाहेण गङ्गामन्येन समुद्रं च गाहते ॥

(७) **सिन्धुः**—

इयं हिमालयादुच्छलन्ती पञ्चनदप्रदेशेभ्यः पश्चिमेन वहन्ती सिन्धुदेशेषु लुठन्ती स्रोतसानेकधा भवन्ती पश्चिमसमुद्रमाश्लिष्यति ॥

(८-१२) **शतद्रुः-विपाशा-ऐरावती-चन्द्रभागा-वितस्ता**—

एतासु पञ्चनदीषु हिमालयादुज्जृम्भमाणासु शतद्रु-विपाशे चन्द्रभागा-वितस्ते चैकीभूय तत ऐरावती चन्द्रभागावितस्ताव्यतिकरेण सह मिलन्ती सर्वा अप्येता एकीभूतेन महता स्रोतसा सिन्धुसरिता सह संयुज्यन्ते । तत एवायं देशः पञ्चनद ( पंजाब ) संज्ञया व्यपदिश्यते ।

'शतद्रोर्विपाशायुजः सिन्धुनद्याः
सुशीतं लघु स्वादु सर्वामयघ्नम् ।
जलं निर्मलं दीपनं पाचनं च
प्रदत्ते बलं बुद्धिमेधायुतं च ॥'

(१३-१४) **सरस्वती-दृषद्वती**—

इमे कुरुक्षेत्रप्रदेशादुन्मीलन्त्यौ ब्रह्मावर्तदेशं घटयन्त्यौ भूतलान्तर्निमीलिते ॥

(१५) **नर्मदा**—( सोमोद्भवा-मेकलकन्यका ) ।

इयं विन्ध्यस्य मेकलाख्यादवयवादमरकण्टकादुद्यन्ती होशङ्गाबादभडौंचप्रभृतिप्रदेशेषु वहन्ती पश्चिमसमुद्रमालिङ्गति ॥

(१६) **तापी**—

इयं विन्ध्यादुल्लसन्ती बैतूलभूपावलसूरतप्रभृतिप्रदेशेषु वहन्ती पश्चिमसमुद्रमाविशति ॥

(१७) **गोदावरी**—( गोदा-गौतमी ) ।

इयं सह्यस्य नासिकप्रदेशादुद्भवन्ती निजामहैदराबादमण्डले लुठन्ती

राजमहेन्द्रीप्रभृतीन् मण्डयन्ती पूर्वसमुद्रं निविशते ॥

(१८) **कृष्णा**—

इयं सह्यस्य महाबलेश्वरप्रदेशात्प्रादुर्भवन्ती निजामहैदराबादप्रदेशस्य पश्चिमदक्षिणकोणे वहन्ती मद्रासमण्डलमलंकुर्वाणा पूर्वसमुद्रं प्रविशति ॥

(१९) **कावेरी**—

इयं सह्यात् स्यन्दमाना प्राक् पूर्वाभिमुखी श्रीरङ्गपत्तनमलंकुर्वती तदनु किंचिद्दक्षिणाभिमुखी पुनरपि पूर्वाभिमुखी भवन्ती बहुधाराभिः पूर्वसमुद्रं संभिनत्ति।

'कावेरी कबरीव भामिनि! भुवो देव्याः पुरो दृश्यतां
पूगैर्नागलताश्रितैरुपदिशत्याश्लेषविद्यामिव।
कर्णाटीजनमज्जनेषु जघनैर्यस्याः पयः स्रावितं
पीत्वा नाभिगुहाभिरात्तरुचिभिः प्राचीं दिशं नीयते ॥'

(बालरा. १०।७२) ॥

(२०) **ताम्रपर्णी**—

इयं मलयात् प्रकाशमाना मनाग् भूभागान् भूषयन्ती पूर्वसमुद्रमाश्रयति।

'रोधोरेखे चन्दनारण्यरूपे
वारि स्वाद्यं नारिकेलाम्भसोऽपि।
यच्चैवान्यः संभवो मौक्तिकानां
तेनाम्भोधेर्वल्लभा ताम्रपर्णी ॥'

(बालरा. १०।५७) ॥

(२१) **समुद्रः**—( सरित्पतिः )।

'क्षीराम्भाः परितोऽयमर्णवपतिर्जातं मृगाङ्कादिकं
पीयूषावधि रत्नजातममुतः किंचास्य तीरान्तरे।
मुक्त्वा कल्पभृतः स्वयंवरसुरान् सौभाग्यदानाग्रणी-

लक्ष्म्याऽस्मिन् कुसुमावली वरयितुं वैकुण्ठकण्ठेऽर्पिता ॥
यत्खातः सगरेण मर्त्यसरितं मन्दाकिनीं कुर्वता
पूर्णो यच्च भगीरथेन गिरिभिर्बद्धो यदार्येण च ।
तत्ते चित्रविचेष्टितं श्वशुरयोर्भर्तुश्च वारां निधिं
वीक्षस्वैनमधो निधाय नलिनच्छायामुषी चक्षुषी ॥
धत्ते यत्किलकिञ्चितैकगुरुतामेणीदृशां वारुणी
वैधुर्यं विदधाति दम्पतिरुषां यच्चन्द्रिकार्द्रं नभः ।
यत्पीयूषभुजां च मन्मथसुहृन्नित्यं वयः संपदां
यल्लक्ष्मीरधिदैवतं जलनिधेस्तच्चित्रमाचेष्टितम् ॥
वह्निं योऽम्भःसमिद्भिर्ज्वलयति जगतीद्वीपखण्डानि यस्य
स्वादिष्ठा यत्प्रसूतिस्त्रिदशयुवतयः श्रीः सुधा वारुणी च ।
सोऽपि ह्युड्डीनलीनैः शरपतनभयादद्रिभिः क्षुण्णपादै-
र्देवि ! त्वद्भर्तुराज्ञामिव वहति महाशैलसेतुच्छलेन ॥'
( बालरा. १०।३७,४३-४५ ) ॥

एवमन्या अपि सरितस्तत्पतिभेदाश्च ॥

## अथ कतिचिद् देशाः—

(१) अङ्ग—

'वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे ! ।
तावदङ्गाभिधो देशः—' ॥

(२) अन्ध्र—

'जगन्नाथादूर्ध्वभागे अर्वाक् श्रीभ्रमराम्बिकाम् ।
तावदन्ध्राभिधो देशः—' ॥

'वाक्सत्त्वाङ्गसमुद्भवैरभिनयैर्नित्यं रसोल्लासतो
वामाङ्ग्यः प्रणयन्ति यत्र मदनक्रीडामहानाटकम् ।
अत्रान्ध्रास्तव दक्षिणेन त इमे गोदावरीस्रोतसां
सप्तानामपि वार्निधिप्रणयिनां द्वीपान्तराणि श्रिताः ॥'

( बालरा. १०।७० ) ॥

(३) आर्यावर्त—

'आसमुद्रात्तु वै पूर्वाद्—' ( बातु. शि. । बाह्य. शि. । म. शे. )

(४) उत्कल—

'जगन्नाथप्रान्तदेशस्त्वौत्कलः परिकीर्तितः ।'

(५) कलिङ्ग—

'जगन्नाथात् पूर्वभागे कृष्णातीरान्तगं शिवे ! ।
कलिङ्गदेशः—' ॥

(६) कामरूप—

'कोलेश्वरं श्वेतगिरिं त्रिपुरां नीलपर्वतम् ।
कामरूपाभिधो देशो गणेशगिरिमूर्धनि ॥'

(७) कार्णाट—

'रामनाथं समारभ्य श्रीरङ्गान्तं तथेश्वरि ! ।
कार्णाटदेशः—' ॥

(८) काश्मीर—

'शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम् ।
तावत् काश्मीरदेशः स्यात्—' ॥
'धत्ते यस्याः स्फटिकशुचिभिः क्षालयन्त्या यशोभिः
स्थित्या गौरीगुरुरपि गिरिर्नूनमुच्चैः शिरांसि ।
गाङ्गस्पर्धोद्धुरमधुमतीसैकतोत्तंसहंसो
विद्यारत्नाधिकृतमकरोत् सा स्वयं शारदा यत् ॥
ब्रूमः सारस्वतकुलभुवः किं निधेः कौतुकानां
तस्यानेकाद्भुतगुणकथाकीर्णकर्णामृतस्य ।
यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव
प्रत्यावासं विलसति वचः संस्कृतं प्राकृतं च ॥
काव्यं येभ्यः प्रकृतिसुभगं निर्गतं कुङ्कुमं च-
च्छायोत्कर्षाद्भवति जगतां वल्लभं दुर्लभं च ।
यस्मिन्नन्तःस्थितवति जगत्सारभूते प्रयाताः
काश्मीरास्ते नियतमुरगाधीशरक्षास्पदत्वम् ॥'
( विक्रमाङ्कदेवच. १८।५-६, ११ ) ॥

(९) केरल—

'सुब्रह्मण्यं समारभ्य यावद्देवो जनार्दनः ।
तावत् केरलदेशः स्यान्मध्यं च सिद्धकेरलः ॥
रामेश्वरो वेङ्कटेशो हंसकेरलसंज्ञकः ।
अनन्तसेनमारभ्य यावत् स्यादुडुपं परे ! ।
तावत्सर्वेशनामा तु केरलः परिकीर्तितः ॥'

'पर्णं नागरखण्डमार्द्रसुभगं पूगीफलैलास्तथा
कर्पूरस्य च यत्र कोऽपि चतुरस्ताम्बूलयोगक्रमः ।
देशः केरल एष केलिसदनं देवस्य शृङ्गारिण-
स्तद् दृष्ट्वा कुरु कोमलाङ्गि ! सफले द्राघीयसी लोचने ॥'
(बालरा. १०।६७)

(१०) कोङ्कण—

'अथ घट्टं समारभ्य कोटीशस्य तु मध्यगे ।
समुद्रप्रान्तदेशो हि कोङ्कणः परिकीर्तितः ॥'

(११) खश—

'गढवाल-अल्मोडाप्रदेशः' ॥

(१२) गौड—

'वङ्गदेशं समारभ्य भुवनेशान्तं महेश्वरि ! ।
गौडदेशः—' ॥

'गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरी—'
(प्रबोधचन्द्रो० २।७) ॥

(१३) चोल—

'द्रविडतैलंगयोर्मध्ये चोलदेशः प्रकीर्तितः ॥'

(१४) तैलङ्ग—

'श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः ।
तैलङ्गदेशः—' ॥

(१५) त्रिपुष्कर—

'पुरुष्करतीर्थस्य प्रान्तप्रदेशः' ॥

(१६) ब्रह्मर्षिदेश—

'कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।'
(चातु. शि. । ब्राह्म. शि. । ब्रा. शे.)

'यत्रार्ये ! न तथा नु रज्यति कविर्ग्रामीणगीर्गुम्फने
शास्त्रीयासु च लौकिकीषु च तथा भव्यासु नव्योक्तिषु ।
पञ्चालास्तव पश्चिमेन त इमे वामा गिरां भाजना-
स्त्वद्दृष्टेरतिथीभवन्तु यमुनां त्रिस्रोतसं चान्तरा ॥'
( बालरा. १०।८६ ) ॥

(१७) ब्रह्मावर्त—

'सरस्वती दृषद्वत्योः—' ( चातु. शि. । ब्राह्म. शि. । मा. शे. ) ॥

(१८) मगध—

''व्यासेश्वरं समारभ्य तप्तकुण्डान्तकं शिवे ! ।
मगधाख्यो महादेशः—'
'चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे ! ।
तावत् कीकटदेशः स्यादुद्दण्डो मागधो मतः ॥''

(१९) मध्यदेश:—

'हिमवद्विन्ध्ययोर्मध्यं यत्—' ( चातु॰ शि॰ । ब्राह्म॰ शि॰ । मा॰ शे. ) ॥

(२०) महाराष्ट्र—

'त्रियम्बकं समारभ्य मध्ये चोज्जयिनीं शिवे ! ।
मार्जारतीर्थाद् राजेन्द्रकोलापुरनिवासिनी ॥
तावद्देशो महाराष्ट्रः—' ॥
'देवद्रोणीसुरहितकृते दारितम्लेच्छपङ्के-
र्मह्यां सह्या कथमपि महाराष्ट्रयूथस्य चेष्टा ।
व्याधिव्यूहप्रतिहतिकृतां व्यक्तमुग्रौपधानां
कायारोग्यप्रणयिहृदयैः काटवं मर्षणीयम् ॥'
( विश्वगुणाद॰ १४५ )

(२१) मालव—

'अवन्तीतः पूर्वभागे गोदावर्यास्तथोत्तरे ।
मालवाख्यो महादेशः—' ॥

'एतन्मालवमण्डले विजयते सौजन्यरत्नाकरैः
सम्यग् विभ्रमधामभिः किमपरं शृङ्गारसारैर्जनैः ।
यत्रारुह्य विचित्ररत्नवलभीर्नानाशिलासद्मनां
नीयन्ते जलदोदयेषु दिवसाः कान्तासखैः कामिभिः ॥'

( बालरा. १०।८४ ) ॥

(२२) लाट—

'अवन्तीतः पश्चिमे तु वैदर्भाद् दक्षिणोत्तरे ।
लाटदेशः—' ॥

'यद्योनिः किल संस्कृतस्य सुदृशां जिह्वासु यन्मोदते
यत्र श्रोत्रपथावतारिणि कटुर्भाषाक्षराणां रसः ।
गद्यं चूर्णपदं पदं रतिपतेस्तत्प्राकृतं यद्वच-
स्ताँल्लाटाँल्ललिताङ्गि पश्य नुदती दृष्टेर्निमेषव्रतम् ॥'

( बालरा. १०।७८ )

(२३) वङ्ग—

'वज्राकरं समारभ्य ब्रह्मपुत्रान्तगं शिवे ! ।
वङ्गदेशः—' ॥

(२४) विदर्भ—

'भद्रकालीपूर्वभागाद् रामदुर्गाच्च पश्चिमे ।
श्रीविदर्भाभिधो देशः—' ॥

'यत् क्षेमं त्रिदिवाय वर्त्म निगमस्याङ्गं च यत्सप्तमं
स्वादिष्ठं च यदैक्षवादपि रसाच्चक्षुश्च यद्वाङ्मयम् ।
तद् यस्मिन् मधुरं प्रसादि रसवत् कान्तं च काव्यामृतं
सोऽयं सुभ्रु ! पुरो विदर्भविषयः सारस्वतीजन्मभूः ॥',

( बालरा. १०।७४ ) ॥

(२५) विदेह—( मिथिला )।

'गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे ! ।
विदेहभूः समाख्यातस्तैरभुक्ताभिधः स तु ॥'
'अन्तेवासी यदधिवसति स्वर्मणेर्याज्ञवल्क्यो
यत्रायन्ते निमिकुलभुवः प्रत्यहं भूमिपालाः ।
तत्ते चक्षुर्विरतुमिथिलामण्डलं जन्मभूमिं
यत्रोढासि त्रिनयनधनुःखण्डनाडम्बरेण ॥'

( बालरा. १०।६३ ) ॥

(२६) सिन्धुदेश—

'सिन्धुनद्यास्तटप्रदेशः ।' ॥

(२७) सिंहल—( सिलोन )।

'पश्यस्यग्रे जलधिपरिखं मण्डलं सिंहलानां
चित्रोत्तंसं मणिमयभुवा रोहणेनाचलेन ।
दूर्वाकाण्डच्छविषु चतुरं मण्डनं यद्वधूनां
गात्रेष्वम्भो भवति गमितं रत्नतां शुक्तिगर्भैः ॥'

( बालरा. १०।४८ ) ॥

(२८) सौराष्ट्र—(गुजरात)।

'कोङ्कणात् पश्चिमं तीरं समुद्रप्रान्तगोचरम् ।
हिङ्गुलाजान्तकं देवि ! पञ्चयोजनलेशतः ॥
सौराष्ट्रदेशो देवेशि ! पाण्मातु ( ? ) गुर्जराभिधः ।'
'तप्तस्वर्णसवर्णमङ्गकमिदं ताम्रो मृदुश्चाधरः
पाणी प्राप्तनवप्रवालसरणी वाणी सुधाधोरणी ।
वक्त्रं वारिजमित्रमुत्पलदलश्रीसूचने लोचने
के वा गुर्जरसुभ्रुवामवयवा नोद्दामशोभावहाः ॥'

( वि. गु. द. ११६ ) ॥

(२९) सौवीर—

'शूरसेनात् पूर्वभागे फंटकात् पश्चिमे वरे ।

सौवीरदेशः—' ॥

(३०) हूण—

'कामगिरेर्दक्षभागे मरुदेशात्तथोत्तरे ।

हूणदेशः—' ॥

एवमन्येऽप्यागमपरिभाषिता देशाः, क्वचित् संज्ञाभेदाश्च ॥

इतीह शैलाः सरितः समुद्रा
देशाश्च शास्त्रव्यवहारसिद्ध्यै ।
प्रदर्शितास्तावदतोऽपरे तु
न तादृशा धर्मपथोपयुक्ताः ॥

इति शैल-सरिद्-देशादिक् ।

## अथ तीर्थदिक्—

तीर्थानि हि प्रायेण पृथिव्यप्तेजःसु समाप्यन्ते । तत्र पारमेश्वरे विराड्रूपरूपकालंकारे पृथिव्यपि संख्यायते (चातु.शि.२७ श्लो. वे.द.)—(चातु. शि. ३१ श्लो. वे. द.) संख्याने हि पुराणेषु यस्यकस्यापि हरिहरादेर्लीलाविग्रहस्य विराड्रूपवर्णनसामग्री भगवता पाराशर्येण परत्र संचार्यत इति स्पष्टम् । तदिदं हरिहरयोर्विराड्रूपघटकत्रिविक्रमाष्टमूर्तिप्रभृतिनामतोऽप्युन्नेतुं सुशकम् । अतएव कवयोऽपि—'निष्प्रत्यूहमुपास्महे—'( अनर्घराघ. ) 'या सृष्टिः स्रष्टुराद्या—' (अभि. शाकुन्त. ) इति । एवमेकात्मचिदन्तःकरणविश्रान्तितया पृथक्पृथगन्तर्यामिपदभागिव पृथिव्यादिरूपणसामग्र्यपि न भिन्नभिन्ना परीक्ष्यत इति । तथाचैकस्यैव परमात्मन उपासनोपकर्तृणि पृथिव्यादिगतानि भिन्नभिन्नान्यपि तीर्थानि वासनावैचित्र्येण भिन्नभिन्नफलकान्यपि वासनैकप्रवाहे पर्यन्तैकफलानि श्रुतिस्मृतीतिहासचतुरस्रदृष्ट्या शक्यसंभवानि । तथाचैव हर्युपास्तिरिव हरोपास्तिरपि यथानियममयोध्यादेरिव काश्यादेरपि निषेवणं यथावासनं मुक्त्यादिघटकमिति दीर्घदीर्घतरदृशा परीक्षणीयम् । अतएवचाधिकारिपरतया शास्त्रकारा आहुः—

> 'विकल्पः कस्यापि स्वयमनुपयन् पूर्णमयता-
> मुपायात् संस्कारं व्रजति स उपायोऽत्र बहुधा ।
> धियि प्राणे देहे तदनु बहिरित्याणवतया
> स निर्णीतो नैषां परफलविधौ क्वापि हि भिदा ॥' इति ।

दर्शनदृशा हरिरनन्तस्तत्कथानन्ता तत्सृष्टा गणितगोलदृशा संज्ञयापि पृथिव्यनन्ता तत्पृष्ठगतान्यपि तीर्थान्यनन्तानि, तत्र परमाणुकल्पं तीर्थायतनं पुरस्क्रियते परिष्क्रियते च—

(१) अमरकण्टक—( मेकलगिरिः—नर्मदाप्रादुर्भावस्थानम् ) ।

अत्र—( शंखस्मृ. १४ अध्या. २८ श्लो. )–(महाभा. वनप. ८९ अध्या. १–४ श्लो.)–(म. भा. अनुशास.प. २५ अ. ५० श्लो. )–( मत्स्यपु. १८८ अध्या. ८६, ९५ श्लो. )–( अग्निपु. ११३ अध्या. )–( कूर्मपु. उत्तर विभा. ३६ अ. ३२, ३६ श्लो. ) ।

अमरकण्टक रीवां राज्य में विन्ध्याचल का एक शिखर है ॥

(२) अयोध्या—( कोसलानन्दिनी-साकेतः ) ।

अत्र–(नागेश्वरः-सरयूः-गोप्रतारः)–(शं. स्मृ.१४।२८)–(वाल्मी. रामा. बालकां. ५ स. ५-७ श्लो. )–( म. भा. व. प. ८४।७०-७५ )–( म. पु. १६१।६२ )–( म. पु. २२।१६ )–(वामनपु. ८३ अ. ८ श्लो. )–(अग्नि-पु. १०६ अ. २४ श्लो. )– 'अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती ज्ञेया सप्तैता मोक्षदायिकाः ॥' (गरुडपु. धर्मकां. ३८ अ. ५ श्लो.)–नागेशो ज्योतिर्लिङ्गः—'····नागेशं दारुकावने।' (शिवपु-ज्ञानसं. ३८ अ. १६ श्लो.) ॥

(३) उज्जयिनी—( अवन्ती ) ।

अत्र—( महाकालः –क्षि–(सि)–प्रा नदी )–( म. भा. व. प. ८२।४९)–(वाम. पु.८३।१६)–(अ.पु.१०६।२४)–(गरु. पु. ध.कां. ३८।५) –महाकालो ज्योतिर्लिङ्गः– 'उज्जयिन्यां महाकालम्····'(शि.पु.ज्ञा.सं.३८।१८)॥

(४) ओङ्कारनाथ—

अत्र—( नर्मदानदी )-(म. पु. १८६।२)–(पद्मपु.भूमिखं.२१ अध्या. ३६ श्लो. )– ओङ्कारो ज्योतिर्लिङ्गः— '····ओङ्कारपरमेश्वरम् ।'(शि.पु.ज्ञा.सं.३८।१८) ॥

(५) **काँगडा**—( इदमेव जालंधराख्यमहाशक्तिपीठम् ) ।

अत्र—( वज्रेश्वरी-ज्वालामुखी )-( देवीभागव. ७ स्कं. ३८ अ. ६ श्लो. )—विशेषत आगमग्रन्थाश्च द्रष्टव्याः ॥

(६) **कांची**—( विष्णु-शिवयोः पुरी ) ।

अत्र—( अन्नपूर्णा )-(दे. भा. ७ स्कं. ३८।८)-( गरु. पु. ध-कां.३८।५)-(विष्णुभागव.१०स्कं.७६अ.१४श्लो.)॥

(७) **कामा (ख्या) ख्या**—

अत्र—( भीमशंकरः )-( दे. भा, ७ स्कं. ३८।१५-१८)-(प. पु. पाता. खं. १२।५१-५६ )-( गरुपु. आचा. कां. ८१।१६)-भीमशंकरो ज्योतिर्लिङ्गः—'....डाकिन्यां भीमशंकरम् ।' (शि. पु. ज्ञा. सं. ३८।१८) ।

कामाख्या आसाम के कामरूप जिले में है ॥

(८) **कालंजर**—( पर्वतः ) ।

अत्र—( देवहृदः—कालीदेवी. )—( म. भा. व. प. ८५ । ५६-५७ )-( म. भा. अनु. प. २५।३५ )-( दे. भा. ७ स्कं. ३८।२६ )-( वाम. पु. ८४।२७ )-( लिंगपु. पूर्वा. २४ अ. १०८-१०६ श्लो. ) ।

कालंजर पर्वत पश्चिमोत्तर देश के बांदा जिले में है ॥

(९) **काशी**—( वाराणसी-अविमुक्तम् ) ।

अत्र—( विश्वनाथः )-( शं.स्मृ. १४ । २६ )-( म. भा. व. प. ८४।७८-८० )-( म. पु. १८२।६१-६८ )-( अ. पु. ११२ अ.)-(नारदपु. पूर्वखं. ६ अ.३४-४०श्लो.)-( प. पु. सृष्टिखं. १४।१८३-२०८ )-( लिं. पु. पूर्वा. ९१।७३-७६ )—'अविशब्देन पापस्तु वेदोक्तः कथ्यते द्विजैः । तेन मुक्तं मया जुष्टमविमुक्तमतो-

च्यते ॥' ( लिं. पु. पूर्वा. ६२।१४३ )-'तवैश्वर्यं यत्नाद्यदुपरि विरञ्चिर्हरिरधः-' इति शिवमहिम्नः पद्यम् ( लिं. पु. पूर्वा. १७ अ. ) एतन्मूलकम्-(गरु. पु.ध. कां. ३८।५)-विश्वनाथो ज्योतिर्लिङ्गः-'वाराणस्यां च विश्वेशम्....' ( शि. पु. ज्ञा. सं. ३८।१६ )-'काशीविश्वेश्वरं लिङ्गं ज्योतिर्लिङ्गं तदुच्यते' ( नार. पु. पू. खं. ६।५१ )-अन्नपूर्णा-ढुण्ढिराज-कालभैरव-मणिकर्णिका-ज्ञानवापीत्यादि ( स्कन्दपु. चतु. काशीखं. ) ॥

**(१०) काश्मीर**—( शारदादेशः ) ।

अत्र—( वितस्ता-अमरनाथादि )-(म.भा.व.प. ८२।८६-९३)-विशेषतः काश्मीरिकाणां वितस्तामरनाथादितीर्थ-निरूपणग्रन्था द्रष्टव्याः ॥

**(११) कुमारस्वामी**—( कार्त्तिकेयः ) ।

अत्र—( याज्ञ. स्मृ. ३।२६४ )-( म. पु. १३।४६ )-(भवि-ष्य पु. ब्राह्मप. ३९ अ.)-(दे. भा. ६ स्कं.४६।१-६ )-(कू. पु. उत्त. ३७।१६-२०) ।

कुमारस्वामी मद्रास के बल्लारी जिले में हैं ।

**(१२) कुमारिका**—( कन्यातीर्थम्-दुर्गादेवी ) ॥

अत्र—( म. भा. व. प. ८५।२२-२३)-(म. पु. १३३।८०)-(कू. पु. उत्त. ४१।२१)-(वि. भा. १० स्कं.७९।१७) ।

कुमारिका तीर्थ सेतुबंध रामेश्वर के पास है ।

**(१३) कुरुक्षेत्र**—( ब्रह्मर्षिदेशः ) ।

अत्र—( सरस्वतीनदी-स्यमन्तपञ्चकादि )-(मनु.स्मृ.२।१९)-( शं. स्मृ. १४।२६ )-( म. भा. व. प. ८३।१-८ )-( म. पु. १६२ । १२ )-

( वाम. पु. २२।५६ )-( नार. पु. उत्त. खं. ६४-६६ अध्या. )-( प. पु. सृ. खं. ११।१४) ॥

(१४) केदारनाथ—

अत्र—( व्यासस्मृ. ४।१४ )-( म. भा. व. प. ८३।७४ )-( लिं. पु. पूर्वा. ९२।१०३)-(ग. पु. आचा. कां. ८१।६)-केदारो ज्योतिर्लिङ्गः—'केदारं हिमवत्पृष्ठे....' ( शि. पु. ज्ञा. सं. ३८।१८ ) ॥

(१५) कोणार्क—( सूर्यतीर्थम् ) ।

अत्र—( भवि. पु. ब्रा. प. ७२।४-८ )-( भवि. पु. ब्रा. प. ७४।२)-(ब्रह्मपु. २६अ.)-(वाम. पु. ३४।२६-२७)-अत्रैव जाम्बवतीसूनुः कार्ष्णिः साम्बः सूर्यं नत्वा स्तुत्वा कुष्ठरोगान्मुक्तस्तत्कृता स्तुतिस्तु साम्बपञ्चाशिकाख्येति सुप्रसिद्धा ( वरा. पु. १७७ अ. ४५-४७ श्लो.)-अत्रापि—'आर्या साम्बपुरे भानोर्मण्डलात्पतिता भुवि ।' इत्यादि लक्ष्यान्तरम् ।

कोणार्क उडीसा में जगन्नाथपुरी के पास है ॥

(१६) गया—( पितृतीर्थम् ) ।

अत्र—(अत्रिस्मृ. ५५-५६)-(कात्यायनस्मृ. २६खं ६ श्लो.)-( बृहस्पतिस्मृ. २० श्लो. )-(शं. स्मृ. १४।२७-२८)-(लिखितस्मृ. १०-१२ श्लो. )-(वाल्मी. रामा. अयो. कां. १०७ स. १३श्लो.)-(म. भा. व. प. ८४।८२-८३)-(म. भा. अनु. प. २५।४२ )-( म. पु. २२।४ )-(दे. भा. ६ स्कं. ४४।२)-(वायुपु. उत्त. खं. ४३ । ५० अध्या. )-( अ. पु. ११४ अ. )- ना. पु. उ. खं. ४३-४७ अ. )-( प. पु. सृ. खं. ११।७२-७७ )-( गरु. पु. आचा. कां. ८२-८६अ. ) ॥

(१७) **गोलागोकर्ण**—( उत्तरगोकर्णः )।

अत्र—( वरा. पु. २१३-२१६ अ.)-(कू. पु. उत्त. ३५।३१)।

गोलागोकर्ण पश्चिमोत्तर देश में लखीमपुर के पास है॥

(१८) **गोकर्ण**—( दक्षिणगोकर्णः )।

अत्र—(म. भा. व. प. ८५।२४-२७)-(वरा. पु. २१३-२१६ अ. )-( लिं. पु. पूर्वा. २४।७३ )-( गरु. पु. आचा. कां. ८१।१६ )-( कू. पु. उत्त. ३५।२६-३० )।

गोकर्ण बंबई के उत्तरी किनारा जिले में है॥

(१९) **गंगासागर**—( गंगा-सागरसंगमः )।

अत्र—(म. भा. व. प. ८५।४)-(गरु. पु. आचा.कां. ८१।२)-( कू. पु. पूर्व. ३६।३४ )-(वि. भा.१०स्कं.७९।११)।

गंगासागर कालीकोठा (कलकत्ता) के पास है॥

(२०) **घुश्मेश्वर**—

अत्र—( शि. पु. ज्ञा. सं. ५८ अ. )-घुश्मेश्वरो ज्योतिर्लिङ्गः-'....घुश्मेशं च शिवालये।' ( शि. पु. ज्ञा. सं. ३८।२० )।

घुश्मेश्वर निजाम हैदराबाद के राज्य में दौलताबाद के पास है॥

(२१) **चित्रकूट**—

अत्र—( मन्दाकिनी नदी )-( वाल्मी. रामा. अयो. कां. ९३।१०-११ )-( म. भा. व. प. ८५।५८-५९)-( म. भा. अनुशा. प. २५।२९ )-( गरु. पु. आचा. कां. ८१।७)।

चित्रकूट पश्चिमोत्तर देश के बांदा जिले में है॥

(२२) **जगन्नाथपुरी**—( ओड्याणाख्यमहाशक्तिपीठम् )।

अत्र—( ब्रह्मपु. ४०।१३-४१ )-( ब्रह्मवै. कृष्णज. सं. उत्त.

७६ अ. ३४ श्लो. )–( कू. पु. उत्त. ३५।२७-२८ ) ।

विशेषत आगमग्रन्थाश्च द्रष्टव्याः ॥

**(२३) जाजपुर**—( वैतरणी नदी ) ।

अत्र—( म. भा. व. प. ८५।६ )–( म. भा. व. प. ११४।४)–
( ब्रह्मपु. ४०।१-१२ ) ।

जाजपुर उड़ीसा में है ॥

**(२४) त्र्यम्बक**—( गौतमक्षेत्रम् ) ।

अत्र–(गोदावरी नदी-पंचवटी)–(म.भा.व.प.८३।१६२-१६३)–
( म. पु. २२।४७ )–'हरिस्ते साहस्रं कमलबलिमाधाय पदयोः—' इति शिवमहिम्नः पद्यम् ( ब्रह्मपु. गौतमीमाहा. ३६।४४-४३ ) एतन्मूलकम्–(प. पु. सृ.खं. ११।३६-३७)–(कू. पु. उत्त.३५।१८)–
त्र्यम्बको ज्योतिर्लिङ्गः—'·····त्र्यम्बकं गौतमीतटे ।' ( शि. पु. ज्ञा. सं. ३८।१४ ) ।

त्र्यम्बक बंबई के नासिक जिले में है ॥

**(२५) द्वारिका**—( द्वारवती )

अत्र–( म. भा. व. प. ८२। ६५-६७ )–( प. पु. पाता. खं. १७।७१-७२)–(गरु. पु. धर्मका. ३८।५) ॥

**(२६) नारायणसर**—( सिन्धु-सागरसंगमः ) ।

अत्र—(म.भा.व.प.८२।६८-६९)–(वि. भा. ६ स्कं. ५ अ.) ।

नारायणसर कच्छ के राज्य में है ॥

**( २७ ) नीलसरस्वती**—( तारादेवी ) ।

अत्र—'तथा नीलसरस्वत्याः स्थानं चीनेषु विश्रुतम् ॥'
( दे. भा. ७ स्कं. ३८।१३ )– तारादेवी सीतारामोपासितेति तन्त्रविदः ॥

(२८) नैमिषारण्य—

अत्र—( शं. स्मृ. १४।२७)-(म. भा. व. प. ८४।५९-६१)-( म भा.अनुशा. प.२५।३३ )-( म. पु. २२।१४ )-( दे. भा. १ स्कं. २।२८-३२ )-'भ्रमतो धर्मचक्रस्य यत्र नेमिरशीर्यत। कर्मणा तेन विख्यातं नैमिषं मुनिपूजितम्॥' (ब्रह्मां. पु. प्रक्रियापा.२।८)-'नेमिस्तु धर्मचक्रस्य शीर्णा यत्राभवत्पुरा। तदेतन्नैमिषारण्यं सर्वतीर्थनिषेवितम्॥' (प. पु. सृ. खं. ११।८)-( कू. पु. उत्त. ४२।७-६ )।

नैमिषारण्य पश्चिमोत्तरदेशके सीतापुर जिले में गोमती नदी के तट पर है॥

(२९.) पशुपतिनाथ—

अत्र—( लिं. पु. ७।५४ )।

पशुपतिनाथ नैपाल की राजधानी काठमांडू में है॥

(३०) पुष्कर—( त्रिपुष्करम् )।

अत्र—( गायत्रीदेवी )-( शं. स्मृ. १४।२७ )-( म. भा. व. प. ८२।२०-३६ )-( म. पु. २२।६२ )-(दे. भा. ७ स्कं. ३८।१६)-( ब्रह्मवै. पु. प्रकृ. खं. ५६।५८ )-(अ. पु. १०६।५-८)-(गरु. पु. आचा. कां. ६६।६)-( कू. पु. उत्त. ३५।३६-४० )।

पुष्कर राजपूताना में अजमेर के पास है॥

(३१) प्रयाग—

अत्र—( शं.स्मृ. १४।२७ )-(म. भा. व. प. ८५।७५-८५)-( म. भा. अनुशा. प. २५।३७ )-(अ. पु. १११ अ.)-( नार. पु. पूर्वखं. ६।५-६ )-( नार. पु. उत्त. खं. ६२-६३ अ. )-( कू. पु. पूर्व खं. ३८।१-२ )॥

(३२)—बदरीनाथ–( विशाला )।

अत्र—'ऊर्ध्वबाहुर्विशालायां वदर्यां मधुसूदन ! । अतिष्ठ एकपादेन वायुभक्षः शतं समाः ॥'(म. भा. व. प. १२।१३ )–( ब्रह्मवै. पु. कृष्णज. खं. ७६ अ. २८, ३१ श्लो.)–( नार. पु. उत्त. खं. ६७ अ. )–( प. पु. सृ. खं. ११।६०)–( प. पु. उत्त. खं.२।२ )–( गरु. पु. आचा. कां. ८१।६ )–( कू. पु. उत्त. ३७।१२ ) ॥

(३३) भुवनेश्वर—( एकाम्रक्षेत्रम् )।

अत्र–(मत्स्यपु. ३६।१०-१२)–(गरु. पु. आचा. कां. ८१।११)।

भुवनेश्वर उडीसा में कटक के पास है ॥

(३४) मक्केश्वर—( मक्केश्वरः )।

अत्र—'हिंगुपीठं समारभ्य मक्केशान्तं महेश्वरि। खुराशानाभिधोदेशो म्लेच्छमार्गपरायणः ॥'इति—वरुणप्रस्थस्वरूपनिरूपणे–'मक्केश्वरः पश्चिमायामुत्तरे हिंगुला भवेत्। त्रैलोक्यविजया देवी दक्षभागे प्रकीर्तिता ॥' इति च ( आगमरह. उत्त. १ पट.) उद्दण्डभैरवीयश्लोकौ परिचायकौ ॥

मक्केश्वर अरब में है ॥

(३५) मथुरा—( ध्रुवतपःस्थानम् )।

अत्र—( गोकुल-गोवर्द्धन-वृन्दावनादि )–( म. भा. आदिप. ६७।१२१)–'यदा ब्रह्मादयो देवा प्रार्थनार्थं हरिं गताः । हरिणा च तदा दत्तौ केशौ खलु सितासितौ ॥ श्यामवर्णस्ततः कृष्णः श्वेतः संकर्षणस्तथा। भारावतरणार्थं तौ जातौ देवांशसंभवौ ॥'

(दे. भा.४ स्कं. २२।२०-२१)-(ब्रह्मपु. ७२।२६-३०)-
(विष्णुपु. ५ अं. १ अ. ६०-६५ श्लो.)-(गरु. पु. धर्मकां. ३८।५)-(वि. भा. ४ स्कं. ८।४१-४२) ॥

**(३६) मल्लिकार्जुन—**

अत्र—(कृष्णानदी-श्रीशैलम्)-(म.भा.व.प.८५।१८-२१)-
(म. पु. २२।४३)-(लिं. पु.पूर्व.६२।१५५)-(गरु.पु. आचा. कां. ८१।८)-(कू.पु. उत्त. ३७।१३)-
मल्लिकार्जुनो ज्योतिर्लिङ्गः—'....श्रीशैले मल्लिकार्जुनम्।' (शि. पु. ज्ञा. सं. ३८।१७)—(वि. भा. १० स्कं. ७६।१३)।

मल्लिकार्जुन मद्रास के कृष्णा जिले में कृष्णानदी के तट पर है ॥

**(३७) मानसरोवर**—(मानसम्)।

अत्र—(म. भा. अनुशा. प. २५।६०)-(कू. पु. उत्त.३७।४४)।

मानसरोवर को जाने का मार्ग गंगोत्तरी मुचकुन्दकुण्ड होकर है ॥

**(३८) रामेश्वर—**

अत्र—(वाल्मी. रामा. लंकाकां. १२६ स. १६-१७)-(म. पु. २२।५०)-ब्रह्मवै. पु. कृ. ज. खं. ७६।३८)-
(गरु. पु. आचा. कां. ८१।६)-रामेश्वरो ज्योतिर्लिङ्गः—'सेतुबन्धे च रामेशम्....' (शि. पु. ज्ञा. सं. ३८।२०) ॥

**(३९) वाराहक्षेत्र**—(कोकामुखम्)।

अत्र—(म.भा.व. प. ८३।१८-१६)-(ब्रह्मपु. १२१।६६-८७)-
(गरु. पु. आचा. कां. ८१।१५)-(कू. पु. उत्त.४१।१४)।

वाराहक्षेत्र नैपाल राज्य में कोशी नदी के पास धवलगिरि पर है ॥

**(४०) विन्ध्याचल**—(विन्ध्यवासिनी देवी)।

अत्र—(म. भा. विरा. प. ६।१७)-(म. पु. १५७।१५-१६)-

(मार्कण्डे.पु.८८ अ.३१ श्लो.)-(वाम.पु.४४।२५-२७)।

विन्ध्याचल पश्चिमोत्तरदेश के मिर्जापुर जिले में गङ्गा के दक्षिण तट पर है ॥

(४१) **वैद्यनाथ—**

अत्र—( बगलादेवी )-(दे. भा. ७ स्कं.३८।१४)-वैद्यनाथो ज्योतिर्लिङ्गः-'वैद्यनाथं चिताभूमौ....'(शि.पु. ज्ञा. सं. ३८।१६)-बगलामुखी-'काली तारा छिन्नमस्ता सुंदरी भुवनेश्वरी। भैरवी श्रीश्चमातङ्गी ज्येष्ठा च बगलामुखी ॥' इति दशमहाविद्यान्तर्गता।

वैद्यनाथ विहार के भागलपुर जिले के पास है ॥

(४२) **शाकंभरीदुर्गा—**

अत्र—(म. भा. व. प. ८४।१३-१७)-(मार्कं.पु.८८।४५-४६)-(दे. भा. ७ स्कं. ३८।७)।

शाकम्भरीदुर्गा बदरीनारायण की तरफ है ॥

(४३) **शुक्लतीर्थ—**

अत्र—(म. पु. १९२।२०-३६)-(कू. पु. उत्त. ४०।६८-७०)-( वि. भा. ३ स्कं.२३।१२-२३ )।

शुक्लतीर्थ बंबई के भडोंच जिले में नर्मदानदी के तट पर है ॥

(४४) **श्रीरङ्ग—**

अत्र—( कावेरीनदी )-( म. पु. २२।४४ )-(वि. भा. १० स्कं. ७१।१४ )।

श्रीरङ्ग तीर्थ मद्रास के त्रिचनापली जिले के पास है ॥

(४५) **सिद्धपुर—**( विशेषतो मातृश्राद्धतीर्थम् )।

अत्र—(वाम. पु. ३४।४३)-( वि. भा.३स्कं.२३।२०-३१)।

सिद्धपुर वड़ौदा के राज्य में सरस्वती नदी के तट पर है ॥

(४६) सोमनाथ—( प्रभासक्षेत्रम् ) ।

अत्र—( शं. स्मृ. १४।२७ )-(म. भा. व. प. ८२।५८-६०)-(वाम.पु. ८४।२२-२६)-(गरु.पु. आचा. कां. ८१।४)-(कू.पू. उत्त. ३४।१६-२२)-सोमनाथो ज्योतिर्लिङ्गः-'सौराष्ट्रे सोमनाथं च....' (शि.पु.ज्ञा. सं.३८।१७) ।

सोमनाथ काठियावाड़ में है ॥

(४७) हरद्वार—( गंगाद्वारम्-मायापुरी ) ।

अत्र—(व्या. स्मृ. ४।१४ )-(म. भा. व. प. ८४।२७-३०)-'गंगाद्वारे कुशावर्ते बिल्वके नीलपर्वते । तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् ॥' (म. भा. अनुशा. प. २५।१३ )—'क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृताम्—' इति शिवमहिम्नः पद्यम् ( ब्रह्मपु. ३७-३८ अध्या. ) एतन्मूलकम्—( नार. पु. उत्त. खं. ६६ अ. )- 'गंगाद्वारे कुशावर्ते—' ( गरु. पु. आचा. कां. ८१।२६ )-'अयोध्या मथुरा माया—' (गरु. पु. धर्मकां. ३८।५ )-'सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा । गङ्गाद्वारे—' ( कू. पु. पूर्व. ३७।३५ )-(कू. पु. उत्त.३७।१० ) ॥

(४८) हरिहरक्षेत्र—( गङ्गा-गण्डकीसंगमः ) ।

अत्र—( म. भा. व. प. ८४।१३ )-( दे. भा. ६ स्कं. २४।३१ )-( प. पु. पाता. खं. ७६।२-४ )

हरिहरक्षेत्र पश्चिमोत्तरदेश के सारन जिले में गङ्गा और गण्डकी के संगम पर है ॥

(४९) हिंगुलाज—( हिंगुलादेवी ) ।

अत्र—(दे.भा. ७ स्कं. ३८।६)-(ब्रह्मवै.पु. कृ.ज.खं. ७६।२१)।

हिंगुलाज त्रिलोचिस्तान के दक्षिण करांची से पारस की खाड़ी तक जाते हुए मेकरान तट पर है ॥

इह प्रायो मुद्रितपुस्तकानामाधारेण प्रमाणवचनानि साक्षाद् इहैव विलिखितानि । यान्येतानि तीर्थानि निर्दिष्टानि एषां प्रसङ्गादन्यानि बहूनि तीर्थानि सुविदितानि भवेयुः । परमत्रास्ति कपुंगवैरिदमवश्यं पर्यालोचनीयम्—

'उत्पद्यतां नाम विलीयतां वा
नवं नवं तीर्थमनेन किं स्यात् ।
न यत्र पारंपरिकी प्रतीतिः
क्रियापि तत्तीर्थमनर्गलं किम् ॥' इति ।

यत्तु सांप्रतं देवतामन्दिराणां तीर्थानां तद्ध्यांक्षाणां च वृत्तान्तान् तन्निरोधोपायाभावांश्च दर्शं दर्शं स्मारं स्मारं च विवेकिनां मनांसि विमनायन्ते तदन्यत् । भावशुद्धिर्हि तीर्थफलानि संवटयति । तदभावे तु—

'कीकटेन समा काशी गङ्गाप्यङ्गारवाहिनी'

इत्यादि सुप्रसिद्धमेव । अशक्तानां कृते तु अध्यात्मतीर्थान्यपि पुराणादौ निरूपितानि विभावनीयानि ।

भवन्ति चात्र—

'यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥'
(म. भा. वनप. ८२ अ. ६ श्लो.)

'कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किंचिन्न प्राप्तं तीर्थाभिगमनाद् भवेत् ॥
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ।
मनसा तानि गम्यानि सर्वतीर्थसमीक्षया ॥'
(म. भा. अनुशा. प. २५ अ. ६२-६६ श्लो.)

तीर्थानि यानि कथितानि पुराणवर्गे
तेष्वत्र कानिचिदुदारविचारभाजाम् ।
स्वर्गापवर्गगतये लिखितानि सम्यग्
ज्ञातौषधिर्गुणगणाय निषेविता स्यात् ॥

इत्थं यथायथमिदं श्रुतितत्त्वजातं
ध्येयं हि संशयभवे तु गुरून् भजध्वम् ।
प्रज्ञापराधवशतो नहि यत् प्रसिध्येत्
तत्रैश्वरं चरणमेव शरण्यमाहुः ॥

इति तीर्थदिक् ॥

इत्यार्षभूगोलदिक् ॥ ६ ॥

## ( ७ ) अथ तत्त्वविमर्शः—

यथायथं यथाभासं यथावैदिकदर्शनम् ।
तत्त्ववृत्तिपथः सोऽयं यः पुराणादिगोचरः ॥ ७ ॥

'तदैक्षत बहुस्यां प्रजायेय—' इत्येवंजातीयकेन श्रुतिजातेन तत्पदार्थ-परामृष्टस्य ब्रह्मणः ( न तु विज्ञानमात्रविश्रमस्य प्रधानप्रभृतेः ) ईक्षण-बहु-भवन-प्रजननव्यापारेभ्य इच्छा-ज्ञान-क्रियाः शक्तयो लक्ष्यन्ते। तत्र प्रथम-शरीरिणो ब्रह्मणः परादिवैखरीप्रवाहप्रादुर्भूता वेदमयी सृष्टिः शाब्दी। महदादिपृथिवीपर्यन्ता चार्थी। एतत्सब्रह्मचारिणी ब्रह्मयामलीयादिगतिरपि। तत्र प्रकाशविमर्शकोटिविश्रान्तो यमल पदार्थः। अथैषां परिगणनं तु यथा-दर्शनं किंचिद् भिन्नक्रमं भिन्नपरिभाषं च। इहैषा गणनाशैली—

'तस्माद्वा एतस्मादात्मन आकाशः संभूत—' 'अस्मान्मायी सृजते विश्वमेतत्—' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिना श्रुतिवाक्येन परमेश्वरेच्छावशाद् आकाशः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवीति पञ्च महाभूतान्यपञ्चीकृतानि तन्मात्रपदव्य-पदेश्यानि त्रिगुणात्मकानि जायन्त इति प्रसिद्धम्। एवं पञ्चीकृतान्यपि महाभूतानीति रहस्यम्।

तत्रापञ्चीकृतस्याकाशस्य सत्त्वांशात्—शृणोत्यनेनेति श्रोत्रं दिग्देवता-कम्, वायोः—स्पृशत्यनयेति त्वक् (पृषोदरादि.) वातदेवताका, अग्नेः—चष्टेऽनेनेति चक्षुरर्कदेवताकम्, अद्भ्यः—रसयत्यनेनेति रसनं वरुणदेव-ताकम्, पृथिव्याः—जिघ्रत्यनेनेति घ्राणमश्विदेवताकमिति पञ्च ज्ञा-नेन्द्रियाणि।

अपञ्चीकृतस्याकाशस्य रजोंशाद्—वक्त्यनयेति वागग्निदेवताका, वायोः—पणायत्यनेनेति पाणिरिन्द्रदेवताकः, अग्नेः—पद्यतेऽनेनेति पाद

उपेन्द्रदेवताकः, अङ्गयः–पात्यनेनेति पायुर्यमदेवताकः, पृथिव्याः–उपतिष्ठतेऽनेनेत्युपस्थः प्रजापतिदेवताक इति पञ्च कर्मेन्द्रियाणि ।

अपञ्चीकृतानामाकाशादिपञ्चमहाभूतानां समस्तानां सत्त्वांशात्–मन्यतेऽनेनेति मनश्चन्द्रदेवताकम्, बुद्ध्यतेऽनयेति बुद्धिश्चतुर्मुखदेवताका, चेतत्यनेनेति चित्तं (बाहुल्यकात्) रुद्रदेवताकम्, अहंकरोत्यनेनेत्यहंकारो विष्णुदेवताक इति चतुर्विधमन्तःकरणम् ।

अपञ्चीकृतानामाकाशादिपञ्चमहाभूतानां समस्तानां रजोंशात्—प्राणः प्राग्गमनवान् नासाग्रवर्ती, अपानोऽवाग्गमनवान् पायुस्थानवर्ती, व्यानो विष्वग्गमनवान् अखिलशरीरवर्ती, उदान ऊर्ध्वगमनवान् कण्ठस्थानवर्ती, समानो भुक्तपीतादिसमीकरणकारी नाभिस्थानवर्तीति प्राणपञ्चकम् ।

अत्र बुद्ध्या मिलितानि ज्ञानेन्द्रियाणि विज्ञानमयकोशः, तान्येव मनसा मिलितानि मनोमयकोशः, प्राणादिपञ्चकसंगतानि कर्मेन्द्रियाणि प्राणमयकोशश्च । एतेषां योग्यत्वात् क्रमेण कर्तृत्वेन करणत्वेन कार्यत्वेन च व्यवहारः । एतत् कोशत्रयं मिलितमातिवाहिकं शरीरम् । तथा च स्मर्यते—

'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥' इति ।

पञ्चीकृतानामाकाशादिपञ्चमहाभूतानां तमोंशात्–भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्येते सप्त लोका उपर्युपरिवर्तमानाः, अतलो वितलः सुतलो रसातलस्तलातलो महातलः पाताल इत्येते सप्ताधोऽधोवर्तमानाः पृथ्वीपुटभूताश्चेति चतुर्दश भुवनानि ब्रह्माण्डम् ।

एतेषामुपसंहारस्तु कार्यस्य कारणे लयक्रमात् । तथाच स्मर्यते विष्णुपुराणे—

'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥

वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन् ! निष्कले संप्रलीयते ॥' इति ।

( वेदान्तपरिभा. ७ परिच्छे. )

अत्र भर्तृहरिः—

'विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा,
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते,
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥' इति ।

( वैराग्यशत. )

अथान्तःकरणस्य परिणामो वृत्तिः । सा द्विधा—प्रमा, अप्रमा च । तत्र—प्रमा द्विविधा—ईश्वराश्रया, जीवाश्रया च । तत्र जीवाश्रया द्वेधा—पारमार्थिकी, व्यावहारिकी च । तत्र व्यावहारिकी प्रत्यक्षानुमित्युपमिति-शब्दार्थापत्त्यनुपलब्धिभेदैः षोढा । तत्र प्रत्यक्षप्रमा द्वेधा—आन्तरप्रमा, बाह्यप्रमा च । तत्रान्तरप्रमा द्वेधा—आत्मगोचरा, अनात्मगोचरा च । तत्रात्मगोचरा द्वेधा—विशिष्टात्मगोचरा, शुद्धात्मगोचरा च । तत्र शुद्धात्म-गोचरा द्वेधा—ब्रह्मविषया, ब्रह्माविषया च । बाह्यप्रमा तु शब्द-स्पर्श-रूप-रस-गन्धभेदात् पञ्चधा । अनुमितिर्द्वेधा—स्वार्था, परार्था च । शाब्दी द्वेधा—वैदिकी, लौकिकी च । अर्थापत्तिर्द्वेधा—दृष्टार्थापत्तिः, श्रुतार्थापत्तिश्च । तत्र श्रुतार्थापत्तिर्द्वेधा—अभिधानानुपपत्तिः, अभिहितानुपपत्तिश्च ॥

अप्रमापि द्वेधा—स्मृतिः, अनुभूतिश्च । तत्र स्मृतिर्द्वेधा—आत्मस्मृतिः, अनात्मस्मृतिश्च । द्वे अपीमे यथार्थायथार्थभेदाभ्यां द्विविधे । अनुभूतिरपि द्वेधा—यथार्था, अयथार्था च । तत्रायथार्था निश्चय-संशयभेदाभ्यां द्वेधा । तत्र निश्चयस्तर्क-विपर्ययभेदाभ्यां द्विविधः । तत्र विपर्ययः सोपाधिक-निरुपाधिकभेदाभ्यां द्विविधः । द्वावप्येतावान्तर-बाह्यभेदाभ्यां द्विविधौ । संशयोऽपि द्वेधा—प्रमाणसंशयः, प्रमेयसंशयश्च । तत्र प्रमेयसंशयो द्वेधा—

आत्मसंशयः, अनात्मसंशयश्च । अनात्मसंशयस्त्रेधा—ब्रह्मसंशयः, ईशसंशयः, जीवसंशयश्चेति ॥

एतासामुपसंहारस्तु सुषुप्तौ । इत्थं सर्वमेतद् यथायथं व्युत्पित्सूनां व्युत्पत्तये प्राज्ञे शास्त्रं स्वयं यातीति नीत्या दिङ्मात्रमेवात्र निरूपितम् । यत एतेषां विस्तर एव नानाप्रस्थानभिन्ना ह्यष्टादशविद्येति शिवम् ॥

इति तत्त्वविमर्शदिक् ॥ ७ ॥

**इति श्रीचातुर्वर्ण्यशिक्षा परमेश्वरपदसमर्पिता भवतादिति शिवम् ॥**

मेध्या महर्षिचरितैरहितैरयोध्या-
योध्येति विश्वविदिता मनुराजधानी ।
यत्रोच्छलन्ति कलिकालमलाभिषङ्गा
निर्वाणरङ्गचतुराः सरयूतरङ्गाः ॥ १ ॥

तस्यास्तु पश्चिमदिशि प्रथितप्रभावो
भावोन्नतः स सुमनाः सरयूप्रसादः ।
तस्यात्मजेन मयकेयमुदारदृष्टया
सा वेददृष्टिरमलागमभूरकारि ॥ २ ॥

सैषा विद्या मूलवाक्यसंदृब्धा धर्मसंहिता ।
वेददृष्टिरिति ख्याता लोकानन्दाय जायताम् ॥ ३ ॥

इति श्रीमती वेददृष्टिर्ब्रह्मार्पणं भवतु ॥

( मूलरचना १९७० विक्रमा०—टीकारचना १९८१ विक्रमा०—भूमिकादिरचना—१९८३ विक्र० )

**शं नोभवेतु ॥**